# दीप्तागमः

## मङ्गलम्

गजवदनमचिन्त्यं तीक्ष्णदन्तं त्रिनेत्रं बृहदुदरमशेषं भूतरूपं पुराणम्
अमरवरसुपूज्यं रक्तवर्णं सुरेशं पशुपतिसुतमीशं विघ्नराजं नमामि १
उमाकोमलहस्ताब्जसंभावितललाटकम्
हिरण्यकुण्डलं वन्दे कुमारं पुष्करस्त्रजम् २

सरस्वत्यै नमः

## प्रथमः पटलः

### मन्त्रोद्धारविधिः

अतः परं प्रवक्ष्यामि मन्त्रोद्धारविधिक्रमम्
पशुपाशविनिर्मुक्तं भवदुःखविनाशनम् ३
साधकानां विशेषेण सर्वपापप्रणाशनम्
येनोपायेन ये देवा ईशत्वं प्रापिताः पुरा ४
तदुपायं विशेषेण श्रोतुमर्हसि चानल
शिवः सदाशिवश्चैव महेशश्च त्रिधा भवेत् ५
शिवं परमसंयुक्तं निर्गुणं निष्कलं ध्रुवम्
अरूपमविकारं च तृप्तामृतमनामयम् ६
अनाधारं सुसंसेव्यं भक्तिगम्यं परात्परम्
निष्कलं मनसोऽतीतमप्यवाच्यमरूपकम् ७
तस्मात्सदाशिवं तत्वं सकलं निष्कलान्वितम्
व्यक्ताव्यक्तमयं सूक्ष्मं नादरूपमनामयम् ८
तमान्महेशमुत्पन्नमत्यन्तगहनं परम्
ज्योतीरूपं परं व्यक्तं महेशं सकलं विदुः ९
तस्माच्छक्तिः समुत्पन्ना सूक्ष्मानन्ता सदा परा
ब्रह्मादिस्तम्बपर्यन्तं जगद्योनिर्मनोन्मनी १०
तस्मान्नादः समुत्पन्नो नादाद्बिन्दुः प्रजायते
तस्माद्वामा समुत्पन्ना ज्येष्ठा वामासमुद्भवा ११
ज्येष्ठाया रौद्रिरुत्पन्ना रौद्र्या वाग्भवोद्भवा
वाग्भवान्मातृका जाता मातृकाद्व्यञ्जनाक्षराः १२

व्यञ्जनान्मन्त्रमुत्पन्नं तन्मध्यान्निखिलं जगत्
जगदक्षरसंलीनमक्षरं बिन्दुसंयुतम् १३
बिन्दुर्नादे लयं गच्छेन्नादो व्योममयं गतः
तद्व्योम प्रकृतौ लीनं प्रकृतिश्शिवपदे लया १४
कूटं भान्तं च यान्तं च मान्तमौकारसंयुतम्
बिन्दुनादसमायुक्तं शिवमन्त्रमिति स्मृतम् १५
लिङ्गस्थापनकाले तु मन्त्रमेतन्न्यसेत्क्रमात्
क्षकारं पृथिवी ज्ञेयं मकारं वारुणं स्मृतम् १६
रेफश्चैवानलं ज्ञेयं यकारोऽनिलमेव च
व्योम औकारमित्युक्तं पञ्चभूतादिकं स्मृतम् १७
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः
पञ्चभूताधिदैवत्यं भुक्तिमुक्तिफलप्रदम् १८
षोडशान्तं शकारान्तं षष्ठवर्गं तु पञ्चमम्
वह्निबीजसमायुक्तं षष्ठस्वरसमायुतम् १९
बिन्दुनादसमायुक्तं मन्त्रमेतत्सदाशिवम्
कूटं भान्तसमायुक्तं मायानलसमन्वितम् २०
बिन्दुनादसमायुक्तं महेशस्य तु बीजकम्
व्यक्ताव्यक्तमये लिङ्गे न्यसेन्मन्त्रं सदाशिवम् २१
प्रतिमासु च सर्वासु बीजं माहेश्वरं न्यसेत्
एषां त्रयाणां मन्त्राणां मन्त्रमूर्तिः सदा शिवः २२
कान्तान्तं यान्तसंयुक्तमौकारस्वरसंयुतम्
बिन्दुनादसमायुक्तं गौरीबीजमिति स्मृतम् २३
प्रणवादि नमोऽन्ताश्च मन्त्राश्चामोघशक्तयः
अकारादिविसर्गान्तमेते वै षोडश स्वराः २४
पूर्वं ह्रस्वमिति ज्ञेयं परं दीर्घमिति स्मृतम्
अष्टह्रस्वं तथा दीर्घं ह्रस्वं ब्रह्ममिहोच्यते २५
दीर्घमङ्गमिति ज्ञेयं ऋ ॠ ऌ ॡ नपुंसकम्
मन्त्रैर्न योजयेदेतानक्षरान्हि नपुंसकान् २६
केवलं कूटमात्रेण युक्तं ब्रह्माङ्गमुत्तमम्

सानुस्वारं भवेन्नेत्रं सर्वेषामुपरि स्थितम् २७
विसर्गान्तं भवेदस्त्रमनुस्वारविवर्जितम्
नान्तान्तं शक्रसंयुक्तं भान्तान्तं पुनरुद्धरेत् २८
षोडशान्तं च णान्तं च षोडशस्वरसंयुतम्
इदं पाशुपतं ख्यातं सर्वपापनिकृन्तनम् २९
हुंकारेण समायुक्तं मुक्तिदं परमं विदुः
वासवाद्यं समुद्धृत्य शूलवर्गात्तृतीयकम् ३०
षष्ठस्वरसमायुक्तमीशवर्गादिमं पुनः
तृतीयस्वरसंयुक्तं स्वरमेकादशं भवेत् ३१
पुनरेकादशं ग्राह्यं वारुणं वह्निसंयुतम्
तृतीयस्वरसंयुक्तमैशवर्गादिमं पुनः ३२
मायानलसमायुक्तमीशाद्यं वासवत्रयम्
एते विद्येश्वराः ख्याता बिन्दुनादसमायुताः ३३
प्रणवादि नमोऽन्तं च प्रत्येकं विनियोजयेत्
पञ्चमं वासवस्यैव यमाद्यं शक्रसंयुतम् ३४
वरुणस्य पञ्चमं बीजं वासवेन समन्वितम्
पञ्चमं वायुवर्गात्तु वासवेन समन्वितम् ३५
सोमवर्गाच्चतुर्थं तु सप्तमस्वरसंयुतम्
अनलवर्गात्तृतीयं तु तृतीयस्वरभूषितम् ३६
पञ्चमं वायुवर्गात्तु तृतीयस्वरसंयुतम्
ऐशवर्गात्तृतीयं तु पञ्चमस्वरसंयुतम् ३७
एते गणेशा व्याख्याता बिन्दुनादसमायुताः
वासवस्य तृतीयं तु तस्य प्रथममेव च ३८
सप्तमाद्यं सशक्रं च वरुणस्य तु पञ्चमम्
तृतीयस्वरसंयुक्तं सोमवर्गाच्चतुर्थकम् ३९
वास्वस्य समायुक्तं सप्तमस्य चतुर्थकम्
वासवान्तेन संयुक्तमीशवर्गात्तृतीयकम् ४०
द्वादशान्तसमायुक्तं वासवस्य चतुर्थकम्
वासवाद्यं च षष्ठाद्यं तृतीयस्वरसंयुतम् ४१

सप्तमस्य चतुर्थं तु तृतीयस्वरसंयुतम्
लोकपालाः समाख्याता बिन्दुनादसमन्विताः ४२
सोमवर्गाच्चतुर्थं तु वासवेन समन्वितम्
ईशवर्गादिमं बीजमिन्द्राद्येन समन्वितम् ४३
वरुणान्तान्तशक्रं च वह्निवर्गद्वितीयकम्
वासवेन समायुक्तं वाय्वाद्यं च समुच्चरेत् ४४
वासवाद्यनलान्तान्तं वासवेन समन्वितम्
ईशानाद्यं स्वरं षष्ठं यमाद्यं वासवान्वितम् ४५
वासवेन समायुक्तं वाय्वाद्यं च समुद्धरेत्
बिन्दुनादसमायुक्तं प्रणवादिनमोऽन्तकम् ४६
एते चास्त्राः समाख्याताः स्वनामपदसंयुताः
सोमवर्गचतुर्थं तु वासवान्तेन संयुतम् ४७
दण्डयन्तान्तकुबेराद्यं स्वरैकादशसंयुतम्
सोमान्तद्वादशान्तान्तमग्न्याद्यं वासवान्तकम् ४८
शक्त्याद्यं शक्रसंयुक्तं वाय्वन्तान्तं सशक्रकम्
तदेव पुनरुद्धृत्य शूलवर्गात्तृतीयकम् ४९
शक्राद्येन समायुक्तं बिन्दुनादसमायुतम् ५०
प्रणवादि नमोऽन्तं च शक्तिमन्त्रमुदाहृतम्
या मूर्तयः समाख्यातास्तासामाद्यक्षराणि वै ५१
उद्धरेत्स्वरसंयुक्तं बिन्दुनादसमन्वितम्
सहस्राक्षरं श्रीरुद्रं मालाभं च तथा परम् ५२
बीजमुख्यं विशेषेण उद्द्रेत्तु यथाक्रमम्
सुसमे भूप्रदेशे तु सर्वशल्यविवर्जिते ५३
वितानध्वजसंयुक्ते मण्डपे समलंकृते
चतुरश्रे समे चैव सूत्रपातं समाचरेत् ५४
तत्राष्टत्रिंशत्सूत्राणि प्राङ्मुखानि समर्पयेत्
उदङ्मुखानि सूत्राणि तावान्त्येवं प्रकल्पयेत् ५५
सूत्रात्सूत्रान्तरं तत्र कुर्यान्मात्राङ्गुलैस्त्रिभिः
एवं कृते पदे सम्यक्सहस्रं च शतत्रयम् ५६

षष्टिं चैव नवाख्यातं पदसंख्याः प्रकीर्तिताः
आग्नेयाद्यनिलान्तं तु प्रस्तरेत्पङ्क्तिमार्गतः ५७
दक्षिणोत्तरमार्गेण विन्यसेद्रक्तधातुना
ईशानपदमारभ्य भुजमार्गेण चाचरेत् ५८
प्रथमादिपङ्क्तयः
इन्द्र अग्नौ ऋकारं च नकारं च परे पदे
यश्च तश्च लकारश्च का च द्या च त्रि एव च ५९
नश्च ने च तथा यिश्च जश्च ते च तथा च रू
पानयश्च तथा दे च ष्टुश्च ये च तथा न च ६०
नर्ध्यागश्च तथा भासा च लश्च लिश्च वितस्ततः
रुष्टश्च यश्च नार्धश्च क्षश्च दिश्च ल्प आययुक् ६१
व्योश्च शिव च ञ्चग्निश्च पा च मश्च लधूययुक्
विश्च विश्च तथा रू च णे च त्वा वस एव च ६२
शश्च दश्च तथा वा च का च बश्च श्रि एव च
यश्च पश्च तथा वक्तश्च षा च विश्च य एव च ६३
सहा च प्रणवश्चैव विश्च पा च न्त एव च
तृतीयं पङ्क्तिराख्यातं चतुर्थं शृणु चानल ६४
चतुर्थपङ्क्तिः
व्यश्च ड्रिश्च तथा त्यश्च तश्च तश्च तथा च गो
पश्च से च तथा रुश्च णे च यश्च तथा च नो ६५
यश्च णे च तथा णे च विश्च नश्च तथा च ला
द्यो च भ्या च तथा या च यश्च याव च एव च ६६
च ध्वले च तथा दश्च तश्च ना च य एव च ६७
यश्च देवन्तथा नश्च ने च यश्च रि एव च ६८
चतुर्थं पङ्क्तिराख्यातं पञ्चमं शृणु चानल
पञ्चमादिपङ्क्तयः
ओंकारश्च भकारश्च वश्च ने च अ एव च ६९
व्योकारश्च पकारश्च ताकारश्च ततश्च भे
द्रा च नश्च प्ररूर्धश्च मूकारश्च स एव च ७०

णे च मस्सविसर्गश्च बा च जा च य एव च
यश्च तश्च तथा ग्रा च गश्च पयदि एव च ७१
लिश्च ष्टा च तथा तश्च शा च दश्च ग्र एव च
वा च मस्सविसर्गश्च प्रश्च सश्च समस्तकम् ७२
जश्च भश्च तथा बो च शिश्च का च तथा च ना
मिश्च तश्च विसर्गो मः तुश्च चश्च तथा च या ७३
रूश्च पिश्च तथा लश्च त्रा च ला च र एव च
शश्च लश्च तथा तश्च पश्च शिश्च व एव च ७४
ना च वी च तथा प्रश्च या च हा च य एव च
+++++कारश्च ने च यश्च कसा पुनः ७५
षष्ठं वै पङ्क्तिमाख्यातं सप्तमं शृणु चानल ७६
सप्तमपङ्क्तिः
नेश्च विश्च तथा सश्च भश्च पश्च तथा च ने
दिश्च व्यो च तथा ने च ग्रश्च का च तथा च मू ७७
यश्च तिश्च तथा णे व रू च पश्च स एव च
सा च शब्दो च तथा मश्च मू च वश्च स एव च ७८
रुश्च रायन्तथात्मश्च वा च यश्च तथा च नो
विश्च लिश्च तथा रो च दा च काव्यो तथा च वो ७९
सप्तमं पङ्क्तिराख्यातमष्टमं शृणु चानल ८०
ग्रष्टमादिपङ्क्तयः
गश्च ध्यश्च तथा तश्च हुठश्च धवको ततः
ग्रश्च मिश्च तथा तुश्च घो च रश्चन्त्र्य एव च ८१
नश्च रू च तथा ग्रश्च उश्चे वश्च तथा च मू
यश्च यश्च तथा नो च तश्च वश्च क एव च ८२
षश्च से च तथा संश्च यश्च ग्रश्च प्र एव च
कश्च विश्च त्रयोश्चैव रुश्च मा च ततो न्तकः ८३
याश्च ज्ञा च तथा कश्च स्वा च ग्रोंकार एव च
शश्च र्वश्च तथा वा च ना च व्याह्यान्य एव च ८४
णा च ष्टश्च तथा यश्च विश्चा र्या च तथा च णे

वृश्च लश्च रशो चैव त्वंश्च एव तथा च वा  ८५
यवौ या स्थिता यशा च नश्च जंश्च त एव च  ८६
लिश्च रुश्च तथा सश्च तिकारो दशमं शृणु  ८७
दशमपङ्क्तिः
सविसर्गो मकारश्च रांश्च नश्च र एव च
हा च तिश्च तथा क्या च सश्च मा च तथा च दे  ८८
विंश नश्च तथा तश्च यश्च कश्च तथा च रू
णे च यश्च तथा ग्रश्च रू रू शब्दश्च पा च वा  ८९
व्यश्चश्चे च तथा वक्त्रा च यश्च तांश्च एव च
ता च र्वा च तथा नश्च किंश्च पा र्वश्च एव च  ९०
दशमं पङ्क्तिराख्याता ह्येकादशमतः शृणु
एकादशपङ्क्तिः
रुश्च स्वा च तथा लांश्च शश्च प्रश्च च ण एव च  ९१
दींश्च तथा द्रा च वा च ना च व्य ग्रआययुक्
सविसर्गो मकारश्च मो च निश्च वि एव च  ९२
पिश्च तश्च तथा ग्रश्च निश्च पिश्च पि एव च
रू रू मश्च तथा वा च वश्चन्द्रा च य एव च  ९३
ईश्च यश्च तथा ता च यश्च यश्च य एव च
दींश्च शश्च तथा ता च यश्च यश्च य एव च  ९४
लिश्च यश्च तथा ख्याता द्वादशं शृणु चानल
द्वादशपङ्क्तिः
या चन्द्रा च तथा भ्रा च पां शब्दश्चर्व एव च  ९५
ज्ञश्चन्द्रंश्च तथाक्तिश्च शिश्च मुश्च तथैव च
देव पिश्च तथा सश्च व्यश्च पश्च तथा भ्रणे  ९६
व च या च त र्थश्च ता च णे णे पि एव च
इश्च जे च तथा दींश्च यश्च न एव च  ९७
धा च निश्च यकारश्च ग्रश्च मश्च न ग्राययुक्
चिकारस्य समाख्याता त्रयोदशमतः शृणु  ९८
त्रयोदशपङ्क्तिः

सश्च गश्च तथा णाश्च न्तथांश्च तथा च णा
पिश्च यश्च तथा वेश्च पिश्च वश्च पि एव च ९९
ना च ग्रश्च तथा र्वश्च पो च रंश्च षि एव च
सश्च यश्च तथा रू च यश्च गश्च तथा च सुम् १००
ए णो ष्ठश्च तथा शश्च वश्च पिश्च तथा च मो
णा च त्यंश्च किंश्चैव णा च गश्च न एव च १०१
त्रयोदश समाख्याता चतुर्दश ततः शृणु
चतुर्दशपङ्क्तिः
ओंकारश्च तथा र्वश्च सश्च पश्च प एव च
षाश्चाष्टश्च तथाष्टश्च रा च ह्निंश्च न्यया च युक्
यो च भश्च तथा नश्च रूप पिश्च व्य एव च
पश्च दा च तथा ता च पिश्च ग्र एव च
गा च कुश्च तथा गश्च स्पश्च रो च त्य आययुक्
रे च दूश्च तथा र्वो च यश्च णश्च ल एव च
या च यश्च समाख्याता पञ्चदशमतश्शृणु
पञ्चादशपङ्क्तिः
कश्च सुश्च तथा दे च भश्च तश्च त एव च
साश्च सू च तथा रुश्च यश्च ह्रींश्च वि एव च
गा च वे च तथा ना च पिश्च न्या च त एव च
रा ध यश्च तथा शिश्च या च णे च णयौ ततः
था च तथा ण च दुपधा च न्य एव च १०१+१३
प्रश्च रश्च तथा जश्च भिश्च कै च तथा च यः
पञ्चादशसमाख्याता षोडशं शृणु पङ्क्तिकम् १०२
षोडशपङ्क्तिः
वंश्च मश्च तथा शिश्च पश्च वा च तथा च ये
ये च भंश्च तथा लश्च द्रश्च स्वाकार एव च १०३
ह्रींश्च द्यश्च तथा धिश्च अर्च ना च तथा च न
धिश्च मस्सविसर्गश्च जीव निश्च स आययुक्
रू च अश्च तथान्तश्च गश्च धिश्च य एव च

यश्च पश्च तथा रा च पश्च पश्च शि एव च
गश्च ने च तथा लिंश्च सप्तादशमतश्शृणु १०४
सप्तादशपङ्क्तिः
वश्च पिश्च तथा हा च वश्च सश्च य एव च
ननौ लांश्च तथा शिश्च पं च हा च न एव च १०५
पुश्च पश्च तथा व्यश्च धूतरूप च एव च
अश्च तश्च तथान्या च यश्च विश्च तथा च भम् १०६
रू च भश्च तथा अंश्च गश्चस्सश्च य एव च १०७
यश्च त्रृश्च तथा ना च विश्च र्या च ततश्शृणु
अष्टादशादिपङ्क्तयः
ज्ञश्च भ्रश्च तथा शश्च ने च शिश्च र्व एव च १०८
ककमल्ल विसर्गश्च मकारस्सविसर्गकः
क्षंश्च वश्च तथा रश्च वश्च मस्सविसर्गकः १०९
रुश्च तश्च तथा यश्च धूतविंश्चैव थो च तः
दश्च शा च तथा निश्च सश्च ने च कमूययुक् ११०
विश्वरूपिं तथा रूश्च सरुश्च रा च स एव च
रे च भ्यश्च तथा सा च सरुश्च रा च स एव च १११
सा च वश्च तथा तश्च स्वा च वश्च त एव च
ममौ सविसर्गश्च त्रिकरां स विसर्गकः ११२
पश्च नश्च तथा रश्च न्यश्च ओंश्च तथापि च
वि रू चश्च तथा पुश्च यश्च मीकारमन्तताम् ११३
निश्च धी च तथा भश्च वा च प्रणव एव च
कश्च रश्च तथा न्द्रश्च र्णश्च गश्च य एव च ११४
दिश्च भूश्च तथा दा च सश्च यश्च र्व आययुक्
तश्च नश्च तथा राश्च न्यश्चा पुपुश्च भाव च ११५
तथा भश्च वा च प्रणवषश्च तथा च देतश्च न तथा
ओंश्च अश्च रश्च विसर्गमः ++++++ ११६
तश्च वा च तथा भ्यौ च णेश्च पिश्च पि एव च
पूर्व नाकारमन्तश्च यश्च धश्च मकारश्च ११७

ना च यश्च तथा च रिजुः ++++++
भश्च तश्च यकारश्च यश्च कश्च ल एव च  ११८
तंश्च दंश्च विकारश्च व्यश्च पश्च त्म एव च
पञ्चमस्सविसर्गश्च कश्च रश्च स्त एव च  ११९
शा च ते च तथा अंश्च सकारस्सविसर्गकः
रूश्च मे च तथा ओंश्च वो च भश्च शि एव च  १२०
पिश्च णे च तथा णे च विकारश्च ततौ ततः
आश्च नश्च ततानश्च हिश्च विश्च तथा च धीः  १२१
सकारस्सविसर्गश्च कश्च रश्च स्त एव च
सश्च जश्च मकारश्च आकरश्च थ एव च  १२२
वश्च तश्च तथा रश्च ने च तश्च तथा च ओम्
स्थिश्च मश्च तथा षश्च देवजस्सविसर्गकः  १२३
नश्च पश्च गुकारश्च तथा च सौ  १२४
वे च वा च तथा द्या च प्रश्च मश्च ततोन्ततः  १२५
अष्टाविंशत्समाख्याता एकोनत्रिंशतिं शृणु  १५२
एकोनत्रिंशादिपङ्क्तयः
ते च द्राश्च तथा मो च वश्च कश्चात्र आययुक्
तश्च भूंश्च तथा ओंश्च पञ्चधा च विसर्गकः  १५३
नश्च पा च गुकारश्च तश्च निश्च न एव च  १५४
विकारं त्रिंशकश्चैव तदेवं त्रिंशकं शृणु  १५९
एकत्रिंशपङ्क्तिः
वाश्च लिश्च विसर्गौ च नश्च लिश्च तथान्ति च
गौ च विश्च तथा तश्च मश्च मश्च रु एव च  १६०
भूंश्च ओंश्च तथा कंश्च वश्च यश्च तथा नि च
णश्च वश्च तथा रश्च अश्च मस्सविसर्गकः  १६१
धांश्च क्षिंश्च तथा सुश्च षश्च विंश्च त एव च
मंश्च प्रणवश्चैव ह्रींश्च रा च ह्य आययुक्  १६२
सविसर्गौ मकारश्च ला च मस्सविसर्गकः
एकत्रिंशतिकं प्रोक्तं द्वात्रिंशतिकं शृणु  १६३

द्वात्रिंशादिपङ्क्तयः
गां च यश्च तथा गां च भश्च मो च तथा च लि
क च ली च तथात्मश्च नो च भो च वयौ तथा १६४
षश्च शश्च तथा किंश्च शश्च मश्च स्व आययुक्
नश्च भश्च तथा पं च मृश्च जश्च तथा च यो १६५
नश्च कश्च तथा कश्च भ्र च एव च
जश्च अश्च यकारश्च किंश्च शिश्च नकन्ततः १६६
पा च यं च तथा नश्च यश्च ना व रु एव च
गा च यश्च प्रभेशिश्च शा च मश्च य एव च १६७
स्वा च रि च तथा सू च शिश्च भा च तथा भवा
मो च यश्च तथा राज्ञ च ना च गश्च म एव च १६८
रुश्च प्रश्च तथा नश्च शिंश्च वश्च मि एव च
सविसर्गो नकारश्च धू वुश्च नु एव च १७०
पकार यान्ततश्चैव चतुस्त्रिंशतिकं शृणु
चतुस्त्रिंशपङ्क्तिः
वश्च यश्च तथान्ते च मो च ते च य एव च १७१
द्रश्च यश्च तथा स्वा च मश्च वश्च व एव च
यश्च सा च टकारश्च भाश्च रश्च ष्ट एव च १७२
वायसौ च ततोंकारश्च स्तुश्च भश्च य एव च
मश्च प्रश्च तथा व्या च पं च दश्च तथैव च १७३
कान्ता च प्रणवं चैव नश्च नासा च तथा च ओम्
मश्च ये च तथा भ्या च पञ्चत्रिंशतिकं शृणु १७४
पञ्चत्रिंशादिपङ्क्तयः
ते च त्रिंश चैव व त्रिंशश्च ते च तथा हा च
त्रिंशश्च ते च तथा हा च दश्च ग्रा च प्र ये व च १७५
विश्च ता च ततो यश्च ओंकारश्च ककारकम्
सू च ज्ञश्च ततो रश्च विश्च ते च तथैव च १७६
वो यो च ने च भकारश्च पिठश्च तांश्च स एव च
नश्च तश्च तथा पश्च द्रश्च तश्च त एव च

अश्च तश्चाकतश्चैव षट्त्रिंशतिमतः परम्
म्रं कारश्च तथा नश्च गा च मो मो विसर्गकम् १७७
स्वश्च मस्सविसर्गश्च मो च गा च न एव च
जश्च यश्च तथा हश्च वो च मश्च य एव च १७८
दश्च ष्ठश्च तथा नुश्च क्षश्च या च क एव च
वा च स्वा च त्यकारश्च शा च नश्च तथा च नैः १७९
गश्च तश्च तथार्थश्च दश्च फट्कार एव च
तश्च निश्च पकारश्च सविसर्गस्समायुतम् १८०
भकारश्च ततश्चैव सप्तत्रिंशतिकं शृणु
सप्तत्रिंशपङ्क्तिः
ज्ञपि रुं कुं सविसर्गो ममश्च शिव एव च १८१
लिंश्च उ च भकारश्च यश्च मस्सविसर्गकम्
ला च प्रणवश्चैव पा च पा चन्तथाभवे
सा च न्द्रश्च स्फुकारश्च प्रणवश्च म एव च
पञ्च मश्च तथा सा च वयौ मस्सविसर्गकः
नकारः प्रणवश्चैव पिंश्च सा च सु एव च
फट्च भश्च तथान्तश्च ओंकारश्च समाप्तकम्
ग्रहणे विषुवे चैव अयने व्यतीपातके १८२
राजाभिषेकसमये युद्धारम्भे स्वजन्मनि
उत्सवान्ते प्रतिष्ठान्ते ज्वरमार्यादिपीडने १८३
क्षीरस्नाने घृतस्नाने मधुस्नाने महाद्भुते
मन्त्रेणानेन मतिमान्स्नापयेत्परमेश्वरम् १८४
मोक्षदं जयदं मन्त्रं पशुपाशनिकृन्तनम्
पुत्रपौत्रविवृद्ध्यर्थं धनधान्यविवर्धनम् १८५
यान्यान्प्रार्थयते कामान्सर्वांस्तानधिगच्छति
मालाब्रह्मं च मालाङ्गं भोगकर्मणि योजयेत् १८६
कूटाङ्गं कूटब्रह्मं च पूजाकर्मणि योजयेत्
स्वनामाद्यक्षरं चैवमुभयोरपि योजयेत् १८७
स्नानोदके न्यसेद्धीमान्पाणिमन्त्रं विशेषतः

बीजमुख्यत्रयं बीजमासनोपरि विन्यसेत्  १८८
नवशक्तिं च तत्रैव कल्पयेत्कल्पवित्तमः
दशभुजं तनुम् एकमक्षं पञ्चदशं भवेत्  १८९
पञ्चवक्त्रं बृहत्कायं द्विपादं क्षौमवाससम्
जटामकुटसंयुक्तं नागाभरनभूषितम्  १९०
जपाशङ्खाञ्जनं पीतं शुद्धस्फटिकसन्निभम्
तरुणादित्यसंकाशं दशश्रोत्रं तथैव च  १९१
मन्त्रमूर्तेरिदं रूपं सर्वकामार्थसाधनम्
शूलं परशुखड्गं च वज्रं चाभयदक्षिणे  १९२
पाशाङ्कुशं च घण्टां च खेटकं वरदापरे
श्वेतं रक्तं परं श्यामं कुङ्कुमं क्षीरसन्निभम्  १९३
सद्यादीशानपर्यन्तं वर्णमेवं यथाक्रमम्
त्रिणेत्रं चतुर्भुजं देवं जटामकुटभूषितम्  १९४
शूलं परशुसंयुक्तं सर्वाभरणभूषितम्
मालाङ्गस्याक्षराङ्गस्य वर्णरूपं वदाम्यहम्  १९५
जपाननं जन्तोद्धूम्रं पीतं कृष्णयुतानलम्
हृदयाद्यस्त्रपर्यन्तं वर्णं मूर्तिं च पूर्ववत्  १९६
कुङ्कुमं शुद्धपद्मं च पद्मकिञ्जल्कनीलकम्
कुमुदं पङ्कजं कृष्णं विद्येशानां तु वर्णकम्  १९७
त्रिणेत्रं चतुर्भुजं चैव पाशशूलसमायुतम्
जाम्बूनदं च वैडूर्यं पद्मरागमयं तथा  १९८
श्यामं सुशारदाभ्राभं रक्तरूपं च चालरम्
वर्णमुक्तं गणेशानां आयुधं चाकृतिस्तथा  १९९
मानोन्मानप्रमाणं च ध्यायेत्प्रतिममुच्यते
श्यामं च पिङ्गलं कृष्णं धूम्रं श्वेतं च पीतकम्  २००
हेमं च स्फटिकं कृष्णं रक्तं लोकेशवर्णकम्
वाहनायुधचिह्नानि प्रतिमालक्षणोक्तवत्  २०१
पीतं विधुमहानीलं जीमूतमुमसन्निभम्
पद्मरागं तुषारं च शाबलं श्वेतरक्तकम्  २०२

शक्तिर्गदा स्त्रियौ तत्र पाशपद्मनपुंसकम्
शेषाश्च पुरुषाकारा एकवक्त्रा द्विबाहुकाः २०३
अस्त्रमेवं समाख्यातं नवशक्तिं ततः शृणु
वामा नीलनिभा देवी शङ्खचक्रधरी सदा २०४
पितवर्णा भवेज्ज्येष्ठा पद्मधृक्पद्मलोचना
रौद्री श्वेतनिभा देवी त्रिणेत्री शूलधारिणी २०५
शातकुम्भनिभा देवी काली मुद्गलधारिणी
कलविकारणी धूम्रा पाशहस्ता सुयौवना २०६
श्वेता बलविकरणी देवी खड्गहस्ता महाबला
बलप्रमथनी देवी शबरा दण्डधारिणी २०७
सर्वभूतदमनी च रक्तवर्णा कपालिनी
पाशाङ्कुशधरा देवी मौक्तिकाभा मनोन्मनी २०८
सुयौवना सुवासा च सुस्तना तनुमध्यमा
सचतुर्थं समुद्धृत्य मायानलसमन्वितम् २०९
तन्मध्ये सामृतं बीजं लान्तस्य हृदि मध्यमे
सर्वत्र योजयेद्बीजं नादं वै शिखया युतम् २१०
सौरमन्त्रमिदं ज्ञेयं सर्वारिष्टविनाशनम्
सर्ववश्यकरं ज्ञेयं मन्त्रमित्यभिधीयते २११
वह्निवर्गादिसंयुक्तं चतुरस्वरभूषितम्
अनलान्तसमायुक्तं कामबीजं सुदुर्लभम् २१२
बिन्दुनादसमायुक्तं सर्ववश्यकरं परम्
वान्तं यान्तसमारूढं मायावबिन्दुसमन्वितम् २१३
नादयुक्तं परं श्रेष्ठं श्रीदेवीमन्त्रमुत्तमम्
ऐश्वर्यं जपमात्रेण तत्प्राप्नोति न संशयः २१४
श्रीकरं तुष्टिपुष्टिं च आयुष्यं बलवर्धनम्
यक्षराक्षसपैशाचभूतमातृगणास्तथा २१५
दैत्यदानवसिद्धाश्च स्वनामाद्येन पूजयेत् २१६

इति श्रीदीप्तागमे प्रतिष्ठातन्त्रे मन्त्रपटलः प्रथमः समाप्तः

## द्वितीयः पटलः
## अधिष्ठानविधिः

अथातः संप्रवक्ष्यामि अधिष्ठानस्य लक्षणम्
सर्वेषां च विमानानामधरे कल्पयेत्क्रमात् १
तदा प्रकृतिभूम्यन्तं घनभित्तिं प्रकल्पयेत्
स्तम्भस्य द्विगुणं तारं द्विगुणं चार्धमेव वा २
तदर्धं बहुला होमा पादाद्बाह्ये विनिर्गता
होमोपर्यप्यधिष्ठानं स्तम्भं तत्र प्रकल्पयेत् ३
पादोदयं तदर्धं वा षडष्टांशेन मानतः
अधिष्ठानस्य चोत्सेधं सर्वेषां च प्रकल्पयेत् ४
चतुरश्रमायताश्रं द्व्यश्रवृत्तं तु वर्तुलम्
वृत्तायतमधिष्ठानं पञ्चधा भवनं विदुः ५
नागरं चतुरश्रं तु द्राविडं चतुरायतम्
वृत्तं वृत्तायतं चैव द्व्यश्रवृत्तं तु वेसरम् ६
अथ जातित्रयं सौधं यथेष्टं कुट्टिमैर्युतम्
नानाधिष्ठानकैर्मिश्रैर्नानापादैर्विमिश्रकम् ७
धर्मायतनसंक्षिष्टं राजितं तं मनोहरम्
अधिष्ठानस्य नामानि वक्ष्यन्ते विधिवच्छृणु ८
प्रथमं पादबन्धं स्याद्द्वितीयं प्रतिबन्धकम्
तृतीयं प्रतिक्रमं च चतुर्थं पुष्पपुष्कलम् ९
पञ्चमं पद्मबन्धं स्यात् षष्ठं कलशबन्धनम्
सप्तमं वप्रबन्धं तु अष्टमं पद्मकेसरम् १०
नवमः श्रेणीबन्धं स्याद्दशमं मञ्चबन्धनम्
श्रीकान्तं रुद्रसङ्ख्या च श्रीबन्धं द्वादशं स्मृतम् ११
एतद्द्वादशभेदेन कथितं लक्षणैः सह
एकेन संकरं वापि एकेनैकत्र वापि वा १२
यस्योपानस्य नैष्क्रान्ते तत्त्रियंशेन भाजयेत्
भागमेकं परित्यज्य द्विभागाभ्यन्तरे स्थितम् १३
तद्देशे जगतीं कुर्यात्सर्वेष्वेव विधीयते

यदधिष्ठानमानं हि त्रयोविंशतिभागिकम् १४
अष्टभागैर्जगत्युच्चं सप्तांशं कुमुदोदयम्
कुमुदाष्टाश्रकं कुर्यादेकेनोपरि पट्टिका १५
कण्ठं तत्त्रिभिरंशैश्च अंशेनोपरि पट्टिका
त्रिभिरंशैर्महापट्टी पादबन्धमिदं स्मृतम् १६
उपोपानं तु भागेन जगती सप्तभागिका
षडंशं वृत्तवप्रं तु वेत्रं पादाधिकांशकम् १७
तथैवान्तरितोत्सेधं द्व्यंशार्धं प्रतिरुच्छ्रयम्
प्रतिवाजनमेकांशं भागैर्विंशतिभिर्युतम् १८
प्रतिमुखं करी भूत्वा नागवक्त्रसमायुतम्
प्रतिबन्धमिदं नाम्ना देवयोग्यमिति स्मृतम् १९
उपोपानं द्विभागेन सप्तांशं जगती भवेत्
षडंशं कुमुदोत्सेधं धारावृत्तं सुवृत्तकम् २०
आलिङ्गान्तरितद्वाभ्यामर्धांशेनाधिकं भवेत्
द्व्यांशं प्रतिरुत्सेधं सर्वावयवशोभितम् २१
सिंहेभैर्मकरव्यालैर्वल्लीपत्रैरलङ्कृतम्
प्राशिखामकरोपेतं अष्टध्वजसमायुतम् २२
मकरस्य विनिष्क्रान्तं व्यालविद्याधिरोहणम्
शेषांशं वाजिनोपेतं केसराग्रसमन्वितम् २३
प्रतिक्रममिदं नाम्ना एकविंशतिभागिकम्
यदधिष्ठानमानं तु भजेदेकोनविंशतिः २४
उपोपानैकभागेन जगतीपञ्चभागिकम्
तदूर्ध्वे पद्ममंशेन अर्धेन ग्रीवमूर्ध्वतः २५
अर्धेन केसरं चोर्ध्वे वृत्तं वप्रं चतुर्थकम्म्
तदूर्ध्वेऽर्धेन पद्मं स्यादर्धांशेनोर्ध्वपट्टिका २६
कण्ठं तु द्व्यंशमानेन तदूर्ध्वेनोर्ध्वपट्टिका
तदूर्ध्वे पद्ममर्धेन तस्योर्ध्वेऽर्धेन वाजिनम् २७
कण्ठं वान्यैरलङ्कृत्य नानापत्रविचित्रितम्
नानाकेसरसंकीर्णं नानारूपधरैर्युतम् २८

सर्वदेवार्हणं शस्तं नाम्नेदं पुष्पपुष्कलम्
जन्मन्द्व्यर्धभागेन पञ्चांशं जगतीतलम् २९
स्रग्गन्धपुष्पमध्येन वृत्तकुंभं त्रियंशकम्
पद्ममर्धेन तस्योर्ध्वे त्रिपादेनोर्ध्वपट्टिका ३०
तथैवान्तरितोत्सेधं द्वाभ्यां च प्रतिरुच्छ्रयम्
अर्धेन वाजिनं कुर्यादग्रे पट्टं युगाश्रकम् ३१
पद्मबन्धमिदं नाम भाजितं स्यात्त्रिपञ्चभिः
सर्वधामहितं शस्तं सर्वावयवशोभितम् ३२
त्रयोविंशतिभागेन विभजेत्तु मसूरकम्
अंशेनाधारहोमं स्याद्व्यंशेनाम्बुजमिष्यते ३३
अंशेन पट्टिकोत्सेधं तद्व्यंशं कण्ठमानकम्
अंशेनैवोर्ध्वकम्पं च महापट्टीद्वयांशकम् ३४
अंशेन कम्पमंशेन पद्ममंशेन पट्टिका
कुमुदं स्याद्द्वयं चोर्ध्वं पद्ममंशद्वयं भवेत् ३५
वृत्तं वप्रं त्रयंशैस्तु आलिङ्गान्तरितौ द्वयम्
द्वाभ्यां प्रतिमुखं कुर्यात्प्रतिवाजनमेकशः ३६
कलाबन्धमिदं नाम सर्वदेवेषु योग्यकम्
यदधिष्ठानमानं तु भजेद्द्वाविंशदंशतः ३७
अंशेन पादुकं कुर्याद्द्व्यंशेनाम्बुजमिष्यते
अंशेनैवोर्ध्वपद्मं तु षडंशं जगती भवेत् ३८
चतुरं कुमुदोत्सेधं तस्योर्ध्वैकांशपट्टिका
कण्ठं तु त्रिभिरंशैस्तु अर्धेनोपरि पट्टिका ३९
अर्धेनोर्ध्वाम्बुजं विद्यान्महापट्टी द्वयांशकम्
अर्धेनोपरिपद्मं च कम्पमर्धेन कारयेत् ४०
वप्रबन्धमिदं नाम सर्वधामसु योग्यकम्
अंशेनोपानकं कुर्याद्द्व्यंशेनैवाम्बुजं भवेत् ४१
क्षेपणं चैकभागेन षड्भागैर्जगती भवेत्
तदूर्ध्वाम्बुजमंशेन कम्पं अंशेन कारयेत् ४२
अंशेनाम्बुजमस्योर्ध्वे वृत्तं वप्रं त्रियंशकैः

तदूर्ध्वे अंशेन पद्मं च अंशेनोपरिपट्टिका ४३
कण्ठद्वयांशमानेन भागेनोपरि पट्टिका
भागेन पद्ममूर्ध्वे तु तद्द्व्यंशे वाजनं भवेत् ४४
अंशेन पद्ममंशेन पट्टिकां कारयेद्बुधः
पद्मकेसरमित्युक्तं षड्विंशतिविभाजितम् ४५
जन्ममेकांशमित्युक्तमब्जमंशद्वयं भवेत्
अंशेनोपरि पट्टीं तु जगतीह षडंशकम् ४६
तुर्यमष्टाश्रकं वप्रं तस्योर्ध्वांशं तु पट्टिका
द्व्यंशं कण्ठमेवोक्तमंशेनोपरि वेत्रकम् ४७
अब्जमंशद्वयेनोक्तं अंशेनोपरिवेत्रकम्
अंशद्वयं भवेद्ग्रीवमंशं वेत्रं तु कारयेत् ४८
अध्यर्धं पद्मपत्रं तु अर्धेनोपरि पट्टिका
श्रेणीबन्धमिदं नाम षड्विंशतिविभाजिताम् ४९
अंशेनोपानकं कुर्यात्षड्भागं जगती भवेत्
पञ्चांशं कुमुदोत्सेधमंशं वेत्रं तु कारयेत् ५०
तृतीयेन गलं कुर्यादंशेनोपरि पट्टिका
वृत्तपट्टी तथैकांशं पद्मोच्चं त्रिभिरंशकैः ५१
अंशेनालिङ्गमंशेन कुर्यादन्तरितं बुधः
द्व्यांशं प्रतिरुत्सेधं अंशेनोपरि वाजनम् ५२
नासिकाभिर्लताभिश्च शोभितं मकरैः कृतम्
एतत्कपोतबन्धं स्याद्भागं षड्विंशतीयुतम् ५३
तदेव वृत्तवप्रं स्यादालिङ्गं प्रतिहीनकम्
एतच्छ्रीकान्तमित्युक्तं द्वाविंशतिविभागभाक् ५४
अधिष्ठानोच्छ्रयं यावत्तत्तु द्वात्रिंशदंशकम्
पादुका त्रिभिरंशैस्तु सप्तांशं जगतीतलम् ५५
दृगंशं पद्ममंशेन वृत्तवप्रं चतुर्थकम्
अंशेनोपरि पद्मं च कम्पमंशेन कारयेत् ५६
कण्ठं कुर्याच्चतुर्भागैरर्धांशं कम्पमब्जकम्
अर्धांशेन कपोतोच्चं चतुर्भागेन कारयेत् ५७

आलिङ्गमंशमंशेन कुर्यादन्तरितं पुनः
द्व्यंशं प्रतिशिखोपेतमंशं वजनमिष्यते ५८
एतच्छ्रीबन्धमित्युक्तं नानारूपविचित्रितम्
कण्ठं स्तम्भसमायुक्तं नासिकाभिरलंकृतम् ५९
नानारूपलतायुक्तं नागैर्व्यालैरलंकृतम्
एतद्द्वादशभेदेन कथितं देवयोग्यकम् ६०
यावज्जगतिनिष्क्रान्तो तावद्वप्रस्य नीव्रकम्
अम्बुजानां तु सर्वेषां तत्समन्नीव्रमुच्यते ६१
सर्वेषामत्र वेत्राणां चतुर्भागैकनिर्गतम्
समं वाथ त्रिपादं वा महावाजनं निर्गतम् ६२
एते वा तद्वहिर्नीव्रं प्रोक्तं तावत्तु वेशनम् ६३

इति दीप्तागमे प्रतिष्ठातन्त्रे अधिष्ठानपटलः द्वितीयः समाप्तः

## तृतीयः पटलः
## उपपीठविधिः

अथातः संप्रवक्ष्यामि उपपीठस्य लक्षणम्
रक्षार्थं शोभनार्थं च उत्सेधार्थं प्रकल्पयेत् १
अधिष्ठानस्य चाधस्तादुपपीठं प्रकल्पयेत्
अधिष्ठानस्य यद्रूपं तद्रूपं चोपपीठकम् २
दण्डार्धं वाथ दण्डं वा समं वा विस्तृतं भवेत्
भद्रं वा प्रतिभद्रं वा सभद्रं च त्रिधा मतम् ३
तेषामुत्सेधमुच्यते अधिष्ठानस्य मानतः
समं त्रिपादमर्धं वा पञ्चांशं द्व्यंशमेव वा ४
उपपीठस्य चोत्सेधं विभज्य दशधा पुनः
अर्धार्धांशेन वर्धन्ते पञ्चभागान्तविस्स्तृतम् ५
होमाद्बाह्ये न कर्तव्यमावृतं चोपपीठकम्
तावदुत्सेधमर्धं वा त्रिपादं वा तदुच्छ्रयम् ६
प्रथमं फलकां कल्प्य ततोपर्युपपीठकम्
उपपीठोत्तरे होमः स्वाधिष्ठानं तदुच्यते ७

अभावे ह्युपपीठस्य स्वहोमाद्यापि अलंकृतम्
उपानोपर्यधिष्ठानं स्तम्भं तत्रैव कारयेत् ८
तत्रोपपीठस्योत्सेधमष्टभागैर्विभाजयेत्
अर्धांशं पादुकोत्सेधमंशेनाम्बुजमिष्यते ९
अर्धेनोपरिपट्टं तु कण्ठं तु त्र्यंशमानतः
अर्धेनैवोर्ध्वकम्पं च अंशेनोर्ध्वाम्बुजं भवेत् १०
अध्यर्धं पट्टिकोत्सेधं वेदिभद्रं प्रशस्यते
उपपीठस्य मानं तु विभजेत्षोडशांशकैः ११
भागेनोपानमुत्सेधं द्विभागेनाम्बुजं भवेत्
एकेनोपरिवेत्रं च एकेनोपरिकेसरम् १२
महापट्टिद्वयांशेन द्विविधं वेदिभद्रकम्
उपपीठोच्छ्रयं यावत्सप्तविंशतिभाजितम् १३
द्व्यंशेनोपानमुत्सेधं पद्मं कुर्याद्द्वयांशतः
अंशेन पट्टिकोत्सेधं पादोच्चं द्वादशांशकम् १४
एकांशमुत्तरोत्सेधमेकांशं तीव्रपट्टिका
पादोच्चं तु चतुर्भागं त्रिपादे लिङ्गपट्टिका १५
त्रिपादान्तरितोत्सेधं द्व्यंशं प्रत्युच्छ्रयं भवेत्
अर्धेन वाजनं कुर्यात्प्रतिभद्रं सुखावहम् १६
उपपीठस्य चोत्सेधं त्रयस्त्रिंशतिभाजितम्
पादुकां तु त्रिभागोच्चं जन्मोच्चं त्रिभिरंशकैः १७
पद्ममंशमथांशेन कण्ठमानं प्रकीर्तितम्
महापट्टिद्वयांशेन अर्धांशेनोर्ध्वपट्टिका १८
उत्सेधं तु द्विरष्टांशमुत्तरार्धकमेव च
एकेन पद्मपट्टी च कपोतोच्चद्वयांशतः १९
त्रिभागेनोर्ध्वपट्टी च सर्वभद्रं प्रकीर्तितम्
गलं पादसमायुक्तं युग्मपादैर्विचित्रितम् २०
पादयोरन्तरं विद्याच्चतुरष्टाङ्गुलान्तकम्
सिंहव्यालमृगैर्भूतैर्नानारूपविचित्रितम् २१
अर्पिते नार्पिते वापि सर्वत्र परिकल्पयेत् २२

इति श्रीदीप्तागमे प्रतिष्ठातन्त्रे उपपीठो नाम तृतीयः पटलः

## चतुर्थः पटलः
## गर्भविन्यासविधिः

अथातः संप्रवक्ष्यामि गर्भविन्यासलक्षणम्
आलये विन्यसेद्धीमान्गर्भमन्त्रेण मन्त्रितम् १
यद्वास्तु गर्भसंयुक्तं कुरुते सर्वसंपदम्
सर्ववास्तुक्रियाकाले तद्गर्भं जीवमुच्यते २
तस्मादादौ न्यसेद्गर्भं सर्वगर्भशमित्रयम्
प्रासादस्य तु मूले तु न्यस्तव्याः प्रथमेष्टकाः ३
पादबन्धविमाने तु तद्धोमोपरि विन्यसेत्
प्रतिबन्धे तु यद्धर्म्यै वृतेरुपरि विन्यसेत् ४
सर्वेषां भूगतं कार्यं सर्वसिद्धिकरं परम्
प्रासादे मण्डपे चैव प्राकारे गोपुरेऽथवा ५
पाकशालापुष्पशालास्वापस्थानेषु विन्यसेत्
प्रासादस्य तु यद्गर्भं तत्स्थानं वक्ष्यतेऽधुना ६
द्वारदक्षिणपार्श्वस्थस्तम्भमूले तु विन्यसेत्
कवाटार्गलयोगे वा विन्यसेत्तु विशेषतः ७
सौवर्णे राजते वापि ताम्रे वा कांस्यकेऽपि वा
अथवा संभवद्द्रव्यैः कारयेद्गर्भभाजनम् ८
भाजनस्य तु विस्तारं पञ्चधा परिकीर्तितम्
हस्तं वापि वितस्तिं वा दश वाष्टाङ्गुलं तु वा ९
स्तम्भविस्तारमानं वा उत्सेधं तावदेव तु
वृत्तं वा चतुरश्रं वा गर्भफेलां तु कारयेत् १०
फेलोत्सेधं त्रिधा कृत्वा द्विभागं भाजनं भवेत्
भागं पिधानमेवं स्याद्यवमानं त्रिविस्तृतम् ११
पञ्चविंशतिकोष्ठानि फेलामध्ये प्रकल्पयेत्
मध्यकोष्ठे न्यसेत्कूटं बिन्दुनादसमायुतम् १२
पूर्वाद्यष्टसु कोष्ठेषु यकाराद्यष्टकं न्यसेत्

प्रागादिषोडशकोष्ठेषु स्वरान्षोडश विन्यसेत् १३
रत्नलोहायुधान् धातून्फेलामध्ये तु विन्यसेत्
मृत्कन्दबीजसर्वांश्च गर्भगर्ते तु विन्यसेत् १४
फेलाशुद्धिं ततः कृत्वा रत्नं मन्त्रैर्विनिक्षिपेत्
माणिक्यं विन्यसेत्कूटे तन्मन्त्रेणैव देशिकः १५
आकारे तु न्यसेद्वज्रमीकारे मौक्तिकं न्यसेत्
महेन्द्रनीलं ह्यूकारे ॠकारे स्फटिकं न्यसेत् १६
ॡकारे विन्यसेन्नीलमैकारे पुष्यरागकम्
औकारे तु प्रवालं स्याद् अःकारे तु विडूर्यकम् १७
सौवर्णेन गजं कृत्वा आकारे विन्यसेद्बुधः
राजतेन कपालं स्याद् ईकारे विन्यसेद्बुधः १८
ताम्रेण कारयेत्कूर्मम् ऊकारे योज्य मन्त्रतः
आरकूटेन खट्वाङ्गम् ॠकारे विन्यसेद्बुधः १९
भ्रमकेन पिनाकं स्याद्विन्यसेत्तु ॡकारके
वैकृन्तकेन परशुं कृत्वैकारे तु विन्यसेत् २०
औकारे योज्य हरिणं कांसीयकमयं पुरः
आयसेन कृतं शूलम् अःकारे स्थाप्य देशिकः २१
कृत्वा जाम्बूनदेनोक्षं कूटे निक्षिप्य मन्त्रतः
एवं विन्यस्य बहुधा धातवो विन्यसेद्बुधः २२
आकारे विन्यसेत्श्यामम् ईकारे तु मनश्शिलाम्
ऊकारे सीसकं न्यस्य ॠकारे गां च विन्यसेत् २३
सौराष्ट्रं चैव ॡकारे ऐकारे वाजिनं न्यसेत्
औकारे रोचना प्रोक्ता अःकारे हरितालकम् २४
प्रासादस्योत्तरे पार्श्वे प्रपां कृत्वा विशेषतः
तन्मध्ये स्थण्डिलं कृत्वा शालिभिश्चतुरश्रकम् २५
गन्धपुष्पादिना पूज्य गर्भफेलां तु विन्यसेत्
कौतुकं बन्धयेत्तस्मिन्नववस्त्रेण वेष्टयेत् २६
परितः प्रक्षिपेद्बीजान्तण्डुलेन समन्वितान्
महाव्याहृतिमन्त्रेण होमं कुर्याद्विशेषतः २७

प्रभाते सुमुहूर्ते च लग्ने निक्षिप्य मन्त्रतः
निधीन्निक्षिप्य मन्त्रेण परितोऽपि द्वीपान्क्षिपेत् २८
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः
शिल्पिनं पूजयेत्पश्चाद्धेमकुण्डलसंयुतम् २९
अष्टधा विभजेद्भित्तिं बाह्यांशाच्चतुरं त्यजेत्
त्रीणि चाभ्यन्तरे त्यज्य मध्यैकांशे निधापयेत् ३०
मृन्नदीसस्यवल्मीककुलीरावटसंस्थिता
नागदन्तं वृषशृङ्गमद्रिसागरमृच्छुभम् ३१
तद्गर्भगर्तमापूर्य तस्योर्ध्वे कन्दकान्न्यसेत्
मध्यमेऽम्बुजकन्दं स्यात्पूर्वे कुमुदकन्दकम् ३२
दक्षिणे चोत्पलकन्दं सौगन्धीं पश्चिमे न्यसेत्
ईशे कन्दं न्यसेत्सौम्ये बीजान्युपरि विन्यसेत् ३३
पूर्वे तु विन्यसेच्छालीन्दक्षिणे व्रीहिकान्न्यसेत्
पश्चिमे कोद्रवं न्यस्य उत्तरे माषबीजकम् ३४
पावके विन्यसेन्मुद्गं नैर्ऋृत्यां कङ्कबीजकम्
प्रियङ्गुं वायुदिग्भागे ऐशान्यां तु कुलुत्थकान् ३५
एवं न्यस्त्वा विधानेन विन्यसेद्गर्भमुत्तमम्
सर्वातोद्यसमायुक्तं सर्वघोषसमायुतम् ३६
ततो मुहूर्तमन्वीक्ष्य गर्भं सम्यङ्निधापयेत् ३७
इति श्रीदीप्तागमे प्रतिष्ठातन्त्रे गर्भविन्यासपटलः चतुर्थः

## पञ्चमः पटलः
### पादवर्गलक्षणम्

अतः परं प्रवक्ष्यामि स्तम्भानां लक्षणं परम्
अधिष्ठानोपरि स्तम्भं ह्युत्सेधं तु प्रवक्ष्यते १
अधिष्ठानोस्त्सेधमानं द्विगुणं पाददैर्घ्यकम्
यस्य पादस्य चोत्सेधं सप्ताष्टनवभाजितम् २
एकभागं भवेत्तत्र तस्य भागं तु विस्तृतम्
तच्चतुर्भागहीनं वा त्रिभागं द्वयमेव वा ३

भित्तिपादस्य विस्तारं प्रासादस्य वशानुगम्
महतो हस्तमात्रेण वक्ष्यते विधिनाधुना ४
सवितस्त्यष्टहस्तेन स्तम्भायामं प्रकल्पयेत्
एवं द्वादशभूमौ तु आदौ स्तम्भान्प्रकल्पयेत् ५
द्वादशात्तु षडंशान्तं हीनं स्यात्तु तलं प्रति
अथ पादे नवाष्टांशभागैर्दशकमेव वा ६
भूमौ तो चतुरंशं स्यात्पादानां प्रस्तरोन्नतम्
अष्टाविंशत्यङ्गुल्यमादिपादस्य विस्तृतम् ७
द्व्यङ्गुलं द्व्यङ्गुलं हीनमाद्वादशतलान्तकम्
त्रिहस्तभवने पादं वैपुल्यं तु त्रयङ्गुलम् ८
त्रयोदशान्तभूमौ तु चाष्टमात्रं विधीयते
चतुर्भागैकभागं वा तत्त्रिभागैकमेव वा ९
स्तम्भानां निर्गमं प्रोक्तं नामानि शृणु चानल
स्तम्भायामं समस्तं तु चतुरश्रं सलक्षणम् १०
सर्वावयवसंयुक्तं ब्रह्मकान्तमिति स्मृतम्
मूले तत्कर्णमानेन चतुरश्रं तदूर्ध्वतः ११
अष्टाश्रं कुम्भमण्डीभ्यां द्वाभ्यां वै विष्णुकान्तकम्
अग्रादूर्ध्वे तु वृत्तं स्यात्कुम्भमण्डीसमन्वितम् १२
रुद्रकान्तमिति ज्ञेयं मूले दण्डप्रमाणतः
चतुरश्रं तु वृत्तास्यं पादात्पादं विनिर्गतम् १३
तदुपर्यग्रसीमान्तं षोडशाश्रसमन्वितम्
कुम्भमण्डीसमायुक्तं सौम्यमेतत्प्रशस्यते १४
मूलप्रभृति चाष्टाश्रं केवलं कुम्भसंयुतम्
वासन्तिकमिति ज्ञेयमग्राकारं सुवृत्तकम् १५
केवलं कलशोपेतं शुण्डुपादमिति स्मृतम्
मूलं यद्वा सकर्णेन चतुरश्रमतः परम् १६
कलशेन सुवृत्तं यत्पूर्वाग्रस्तम्भमिष्यते
अश्राकारास्यकं मध्ये स्तम्भद्विगुणविस्तरम् १७
अष्टाश्रसंयुतं पादमष्टाश्रमिति कीर्तितम्

मूले द्विदगडमात्रेण पद्मासनसमन्वितम्  १८
शेषं हि कलशोपेतं वृत्तं वा चतुरश्रकम्
अन्वितं कुम्भमगडीभ्यां सुन्दरं नामसंयुतम्  १९
अष्टाश्रे वाथ वृत्ते वा पादायामं त्रिभागकम्
केसरीरूपसंयुक्तं सिंहपादमिति स्मृतम्  २०
सर्वं पोतिकया युक्तं कुम्भालङ्कार उच्यते
अध्यर्धमग्रपादेन पादहीनद्वयं तथा  २१
द्विगुणं दगडमानेन कुम्भोत्सेधं विशेषतः
श्रीकरं चन्द्रकान्तं च सौमुख्यं प्रियदर्शनम्  २२
यथाक्रमेण वक्ष्यामि कुम्भोत्सेधं नवांशकम्
तद्वै धृगैकभागः स्याच्चत्वारि कलशोन्नतम्  २३
कगठमेकांशमित्याहुरास्यमेकांशमेव वा
तत्पद्ममेकभागेन वृत्तहीने तथांशकम्  २४
धृक्कगठौ पादविस्तारौ हीनेऽधः पादमूलवत्
द्विगुणं कुम्भविस्तारमारस्यमंशेन वृत्तकम्  २५
मगड्यायामं चतुर्दगडं त्रिदगडं वापि कारयेत्
तदुत्सेधं त्रिपादं स्यात्तत्त्रियंशेन भाजयेत्  २६
अंशेनोत्सन्धिकं कुर्याद्वित्रमंशेन वृत्तकम्
अंशेन मगिदकां कुर्यात्पाल्याकारं तु पत्रवत्  २७
त्रिधा नागदंशाभं वा वीरकागडं तदूर्ध्वतः
पादोच्चं तु तदर्धेन सर्वेषां चतुरश्रकम्  २८
हीनेऽधस्तात्तदर्धेन स्कन्धोच्चं चोर्ध्वमम्बुजम्
मालास्थानं तथाधस्ताद्दगडं चायतविस्तृतम्  २९
श्रीकरं वृत्तपादानां सर्वेषामपि संमतम्
अष्टाश्रं षोडशाश्रं च चन्द्रकान्तं प्रशस्यते  ३०
सौमुख्यं चतुरश्राणामष्टाश्राणां विशेषतः
अतिभारेषु स्तम्भेषु प्रियदर्शनमिष्यते  ३१
दगडोच्चसमविस्तारं पञ्चदगडायतं भवेत्
पोतिकानामिदं श्रेष्ठं सर्वाङ्गस्तम्भसंयुतम्  ३२

चतुर्दण्डायतं चैवमुत्सेधं तत्त्रिपादकम्
मध्यमा इति विज्ञेया कुम्भस्तम्भेषु योजिता ३३
त्रिदण्डायतविस्तीर्णं दण्डोच्चार्धं तु कन्यसम्
कुम्भमण्डीविहीने तु योजयेत्तु विचक्षणः ३४
सार्धत्रिपाददण्डं वा कन्दानां कर्तनिर्गमम्
विस्तारस्य चतुर्भागे तरङ्गस्थानमिष्यते ३५
गृहीतोच्चत्रिभागैकं भागोच्चं त्वग्रपट्टकम्
एवमुक्तं तु पादानां प्रस्तरं चाधुनोच्यते ३६
पोतिकोर्ध्वे न्यसेद्धीमानुत्तरं त्रिविधं पुनः
पादव्यासोदयं यावदुत्सेधं चोत्तरोत्तमम् ३७
पत्रोत्तरमिति ज्ञेयं तारं दण्डप्रमाणतः
त्रिपादोच्चं पत्रबन्धं मध्यमं चार्धमुन्नतम् ३८
विस्तारं प्रागिवैवोक्तं कन्यसोत्तरमेव हि
अर्धपादं त्रिपादं वा कर्णनिर्गतिरुच्यते ३९
स्तम्भं त्रिभागभागैकं चतुर्भागैकमेव वा
तदेव चतुरश्रं स्यादुत्तरोपरिवाजनम् ४०
वाजनोर्ध्वे विशेषेण दण्डोच्चं भूतभागिकम्
निर्गमं तत्समं चोर्ध्वे पट्टिका पूर्ववद्भवेत् ४१
कपोतं द्विदण्डोत्सेधं त्रिदण्डं वापि कारयेत्
निर्गमं तत्समं प्रोक्तं लम्बमानार्धदण्डकम् ४२
शेषांशं पञ्चभागेन योजयेत्तु विशेषतः
अंशेनालिङ्गमेवं स्यात्पादाद्बहिः स निर्गतिः ४३
तत्समान्तरितोत्सेधमालिङ्गं समवेशनम्
प्रस्तरं मकरोपेतमुत्सेधं तु त्रियंशकम् ४४
पार्श्वे प्रतिशिखोपेतं अग्रे पृष्ठे प्रतिद्वयम्
आलिङ्गस्य समोत्सेधं निर्गमं प्रतिवाजनम् ४५
नासिका स्तम्भविस्तारमध्यर्धं द्विगुणोऽपि वा
एवं समासतः प्रोक्तं पादविस्तारनिर्गमम् ४६

इति श्रीदीप्तशास्त्रे प्रतिष्ठातन्त्रे पादवर्गपटलः पञ्चमः

## षष्ठः पटलः

## एकतलप्रासादविधिः

अथातः संप्रवक्ष्यामि प्रासादानां तु लक्षणम्
महान्त्यल्पद्व्यन्तराणि त्रिविधेनोच्यते मया १
तेषां नामानि मानानि हस्तसङ्ख्या च वक्ष्यते
तस्माद्धस्तविधिं चैव अङ्गुलानां प्रमाणकम् २
त्रिविधमङ्गुलं चैव पूर्वं मानाङ्गुलं विदुः
मात्राङ्गुलं द्वितीयं तु देहलब्धं तृतीयकम् ३
बालोदयगते रश्मौ जालान्तरगतं यतः
दृश्यादृश्यं तु यत्प्रोक्तं परमाणुरितीष्यते ४
परमाणवष्टगुणितं रेणू रेणवष्ट रोमकम्
रोमाष्टगुणितं लीक्षा तदष्टौ यूकमेव च ५
अष्टौ यूकं यवः प्रोक्तो यवोदरं चाष्टमङ्गुलम्
तद्द्वादशाङ्गुलं युग्मं प्रोक्तं तद्द्वयं हस्तके ६
तच्चतुर्विधमुक्तं च हस्तमानं विशेषतः
चतुर्विंशाङ्गुलं ज्ञेयं किष्कुरित्युच्यते बुधैः ७
पञ्चविंशतिभिश्चैव प्राजापत्यमुदाहृतम्
षड्विंशतिर्धनुर्मुष्टिः सप्तविंशद्धनुर्ग्रहः ८
शयनासनादिकान्कुर्यात्किष्कुमानवशाद्बुधः
प्राजापत्यं विमानानां सभाशालां तथैव च ९
ग्रामादीनां च दुर्गाणां धनुर्मुष्टिर्विधीयते
धनुर्ग्रहेण कुर्यात्तु नद्यध्वानं विशेषतः १०
हस्तानां लक्षणं प्रोक्तं मानाङ्गुलविधानतः
यागोपकरणं सर्वं कुर्यान्मात्राङ्गुलेन तु ११
षण्णवत्यङ्गुलं मेयं स्वाङ्गुलेनोत्तमं स्मृतम्
अङ्गुलैर्नवतिभिश्च मध्यमं च विदुर्बुधाः १२
पञ्चाशीत्यङ्गुलैर्मेयं पुरुषाधममुच्यते
मध्यमध्यं पुरुषस्य यत्पर्वं दक्षिणे करे १३
मध्यमाङ्गुलमध्यं तु देवमात्राङ्गुलिं विदुः

यत्कृत्स्नं प्रतिमायामं तालगरायेन भाजयेत् १४
तल्लब्धोत्सेधमानं तु चतुर्विंशच्छतं कुरु
तेष्वेकभागमङ्गुल्यं देहलब्धमिति स्मृतम् १५
अधुना संप्रवक्ष्यामि एकभूमिप्रमाणकम्
त्रिहस्तं पञ्चहस्तं च सप्तहस्तं नवं तथा १६
चतुर्विधेन विस्तारमेकतलस्य कीर्तितम्
विस्तारद्विगुणोत्सेधं सर्वेषां तु विधीयते १७
अग्रतो मराडपं कुर्यात्प्रासादसमविस्तृतम्
तदर्धं वा त्रिपादं वा मुखमराडपमिष्यते १८
सर्वाङ्गसहितं कुर्यात्प्रासादं सविशेषतः
उपानं जगतीं चैव कुमुदं कम्पमेव च १९
कम्पं तु तत्समायुक्तं कम्पं च प्रतिरेव च
पादमूलं च वेदिः स्याद्वेदिका कराठसंयुतम् २०
पादं सर्वाङ्गसंयुक्तमुत्तरोपरि हंसकम्
कपोतं तत्प्रतिं चैव वेदिका गलमेव च २१
शिखरं च घटं चैव महानास्यल्पनासिका
पञ्जरं च इमे सर्वे विंशत्यंशमुदाहृतम् २२
उक्षं कुर्याच्चतुष्कोणे प्रस्तरोपरि संस्थितम्
षड्वर्गसहितं प्रोक्तं तलमेकं विशेषतः २३
यावत्प्रासादविस्तारं चतुर्विंशतिभाजितम्
पञ्चविंशतिभागं वा षड्विंशति विभागकम् २४
तत्तद्भागैकभागं स्यात्पादविष्कम्भमत्र वै
अथवा पादमानं तु वक्ष्यते तु विशेषतः २५
पादायामाष्टभागं स्यान्नवभागं दशं तु वा
तत्तद्भागैकमेवं स्याद्दारुपादस्य विस्तृतम् २६
तत्पादेनार्धहीनं वा त्रिभागं द्वयमेव वा
भित्तिपादस्य विस्तारं सर्वेषां तु विधीयते २७
पादविष्कम्भमानं यद् अत्र दराडमिहोच्यते
विमानोत्सेधमष्टांशं कृत्वैकेन मसूरकम् २८

पादायतद्विभागं स्याद्भागं प्रस्तरमुच्यते
भागं ग्रीवमिति प्रोक्तं शिखरं स्याद्द्विभागकम्  २९
शेषं स्तूपिरिति ख्यातं सञ्चिते चैकभूमिके
यावत्प्रासादविस्तारमेकभागं त्रिभागिकम्  ३०
चत्वारिपञ्चषड्भागमेकभूमेर्विधीयते
मूलपादस्य विस्तरादष्टांशोनाग्रविस्तृतम्  ३१
उपानस्य च निर्यूहमग्रपादद्वयं भवेत्
तदर्धं तीव्रमित्याहुस्तन्निर्गमं त्रयंशकम्  ३२
द्व्यंशं चाभ्यन्तरे ग्राह्यमेकांशं तु बहिः स्थितम्
तत्स्थाने जगतीं कुर्यात्सर्वमेवोच्यते क्रमात्  ३३
अधिष्ठानोत्सेधमानं त्रयोविंशतिमानकम्
जगत्यष्टांशकोपेतं सप्तांशं त्वथ वप्रकम्  ३४
कुमुदमष्टाश्रकं विद्यादेकांशं कुरु पट्टिकाम्
कण्ठं त्रियंशमित्युक्तमेकांशेनोर्ध्वपट्टिका  ३५
महापट्टी त्रियंशेन पादबन्धमिहोच्यते
तस्योर्ध्वे तु द्विदण्डेन पादमूले तु वेदिका  ३६
वेदिकोत्सेधमानं तु नवभागैर्विभाजयेत्
पट्टिकोपरि कम्पांशं कण्ठं चतुर्थभागिकम्  ३७
एकांशाधारपट्टं तु द्वियंशं वेदिका भवेत्
ऊर्ध्वे पट्टं तथैकांशं पादालङ्कारमुच्यते  ३८
तत्पादकुम्भधृक्कण्ठं द्व्यार्धं दण्डमुच्यते
तस्योत्सेधं नवांशं तु एकभागेन धृग्भवेत्  ३९
चतुर्भागं कुम्भं स्यात्कण्ठमेकेन कारयेत्
आस्यमेकांशमित्याहुरेकांशं पद्ममुच्यते  ४०
शेषैकांशद्व्यंशकः स्याद्वृत्तमेकेन कारयेत्
एकांशेनाथ हीनौ तु हीनौ द्वौ मूलपादवत्  ४१
आस्यविस्तारमत्रैव अध्यर्धं दण्डमुच्यते
द्विदण्डं कुम्भविस्तारं धृक्कण्ठौ पादविस्तृतौ  ४२
त्रिपादं मण्डिनीव्रं स्याद्विस्तारं स्याच्चतुर्गुणम्

त्रिगुणं वापि कर्तव्यं पादविस्तारमानतः ४३
मण्ड्युत्सेधं त्रिधा कृत्वा भागेनोत्सन्धिरुच्यते
भागेन मण्डिकां विद्यादेकांशं पालिका भवेत् ४४
पादविस्तारमानेन वीरकाण्डं तदुच्यते
उत्सेधं पादहीनं स्यात्पोतिकायाममुच्यते ४५
उत्तमं पोतिकायामं पञ्चदण्डमिहोच्यते
मध्यमं तु चतुर्दण्डमधमं स्यात्त्रिदण्डकम् ४६
दण्डत्रिपादमर्धं वा पोतिकोत्सेधमुच्यते
दण्डोच्चमुत्तरं कुर्यात्तत्त्रिभागैकवाजनम् ४७
भूतमाला च दण्डोच्चमूर्ध्वपट्टी च पूर्ववत्
कपोतोत्सेधं दण्डं स्याल्लम्बमानार्धदण्डकम् ४८
द्विदण्डनिष्क्रमान्तं स्यादुपानसमनिर्गमम्
शेषं प्रस्तारमानं तु पञ्चभागैर्विभाजयेत् ४९
अंशेनालिङ्गमेवं स्यादंशेनान्तरितं भवेत्
द्व्यंशे प्रतिमुखं कुर्यादंशेन प्रतिवाजनम् ५०
त्रिदण्डवेशना वेदी लक्षणेन समन्विता
त्रिदण्डं वेदिकोत्सेधं तदुत्सेधं रसांशकम् ५१
द्वियंशं कण्ठमित्युक्तमेकेनाधारपट्टिका
भागेन वेदिकां कुर्याद्भागैकं कम्पमुच्यते ५२
वेदिविस्तारपञ्चांशं चतुर्भागं ग्रीवविस्तरम्
दण्डार्धमुत्तरं वापि तत्त्रिभागैकवाजनम् ५३
हंसमाला वा दण्डार्धे तदर्धे हंसपट्टिका
तत्प्रस्तराष्टभागैकविहीनं वेदिविस्तरम् ५४
वेदितारं त्रिभागं च द्विभागं गलविस्तरम्
वेदिविस्तारतुल्यं च शिखरविस्तारमत्र वै ५५
शिखरतारं त्रिभागैकं महानासीति विस्तृतम्
शिखरात्पञ्चभागं च त्रिभागं पालिविस्तरम् ५६
पालिविस्तरपञ्चांशत्रिभागं पद्मविस्तृतम्
पद्मतारं त्रिभागैकं कुम्भतारमिति स्मृतम् ५७

कुम्भतारत्रिभागैकं लग्नकण्ठं तथैव च
लग्नकण्ठं त्रिभागं स्यात्पाल्याकारस्य विस्तृतम्  ५८
पाल्याकारस्य विस्तारं त्रिभागं मुकुलोच्छ्रयम्
स्तूपिकोत्सेधमानं तु द्वात्रिंशतिविभाजितम्  ५९
सप्तांशं पद्मकोत्सेधमध्यर्धस्कन्धमुच्यते
अध्यर्धाधरपद्मं तु सप्तांशं तद्धटोच्छ्रयः  ६०
अध्यर्धमूर्ध्वपद्मं तु षडंशं ग्रीवमुच्यते
अर्धांशं पालिवृत्तं च विलग्नं चैकभागिकम्  ६१
मुकुलोच्छ्रयं षडंशं स्तूपिमानमुदाहृतम्
अधिष्ठानस्तम्भयुक्तं प्रस्तरग्रीवसंयुतम्  ६२
शिखरस्तूपिकायुक्तं महानासिचतुष्टयम्
द्विदण्डं च द्विदण्डार्धं कपोतनासिविस्तरम्  ६३
कपोतनासिकाष्टौ च मण्डपे पादनासिका
अनिष्क्रमं शिरोवृत्तमाकारं चतुरश्रकम्  ६४
एभिस्तु लक्षणैर्युक्तं श्रीकरं तत्प्रशस्यते
तलालङ्कारकं प्रोक्तं कर्णकूटं चतुस्त्रिकम्  ६५
विस्तारस्य त्रिभागैकं मध्यमे निर्गमं भवेत्
श्रीविशालमिदं प्रोक्तं प्रासादानां विशेषतः  ६६
तदलङ्कारमत्र स्याद्वेदिकाष्टाश्रसंयुतम्
अष्टपञ्जरसंयुक्तं श्रीभोगं नामनामतः  ६७
तदलङ्कारमत्र स्यात्सायतं चतुरश्रकम्
पञ्जराभिर्विहीनं स्यात्स्तूपित्रयसमायुतम्  ६८
एतत्प्रासादनामा हि स्वस्तिबन्धनमुत्तमम्
तदलङ्कारकं प्रोक्तं शिखरं चतुरश्रकम्  ६९
वेदिकावृत्तमेवं स्यान्महानासिकोष्ठसंयुतम्
पर्वतं नाम एवं स्यादथ तेन विहीनकम्  ७०
तदलङ्कारमेवोक्तं वेदिका चतुरश्रका
ग्रीवं शिखरमष्टाश्रं महानास्यष्टमेव च  ७१
एभिस्तु लक्षणैर्युक्तं सर्वतोमुखमुच्यते

तदलङ्कारमेवोक्तमायतं वृत्तमेव च ७२
कर्णकूटविहीनं स्याद्ग्रीवं वृत्तायतं भवेत्
द्व्यश्रवृत्तं ततः कुर्यात्प्राङ्मुखो नासिका भवेत् ७३
पूर्वे ललाटसंयुक्तं गोपुरास्याकृतिर्भवेत्
पार्श्वे पृष्ठे च संयुक्तं शिखराकृतिरेव च ७४
महानासीत्रिभिर्युक्तं हस्तिपृष्ठमिहोच्यते
जातित्रयं विधातव्यं प्रासादानां विशेषतः ७५
नागरं द्राविडं चैव वेसरं च त्रिधा मतम्
उपानात्स्तूपिपर्यन्तं युगाश्रं नागरं भवेत् ७६
चतुरश्रायतं चैव अष्टाश्रं वा विशेषतः
प्रासादं द्राविडं विद्याद्वेसरं चाथ वक्ष्यते ७७
वृत्तं वृत्तायतं चैव द्व्यश्रवृत्तं तथैव च
प्रासादं वेसरं विद्यात्त्रिविधं तत्प्रशस्यते ७८
प्रासादपार्श्वे पृष्ठे च तोरणानि प्रकल्पयेत्
पादायामाष्टपञ्चांशं स्तम्भदैर्घ्यं प्रकीर्तितम् ७९
त्रिभागं च त्रिधा कृत्वा एकांशं लिङ्गविस्तरम्
लिङ्गविष्कम्भमानेन त्रिगुणं पीठविस्तरम् ८०
पीठस्य त्रिगुणं गर्भं बाह्ये भित्त्येकभागिकम्
पीठाच्चतुर्गुणं वापि गर्भगेहं विधीयते ८१
गर्भगेहार्धकं वापि पीठतारसमोऽपि तत्
तत्पीठतारद्विगुणं भित्तिविष्कम्भमुच्यते ८२
गर्भस्थान +++++++ स्तम्भमुच्यते
कवाटार्गलयोगे वा स्तम्भमूले विधीयते ८३
उपानं जगतीं चैव कुमुदं कण्ठपट्टिका
तत्तलास्थ्याविधिं ह्येते ऊर्ध्वाधच्छिद्रमिष्यते ८४
सोमस्थाने जलस्त्राव +++++ नालकम्
उपानौ जगत्यां वापि कण्ठे नालं न कारयेत् ८५
केवलं जलमार्गं स्याद्वृतौ नालं प्रकल्पयेत्
हस्तायतत्रिपादो वा वितस्तिर्वा विशेषतः ८६

नालायाममिदं प्रोक्तं विस्तारं द्वादशाङ्गुलम्
दशाङ्गुलाष्टाङ्गुलं वा नालविस्तारमुच्यते  ८७
विस्तारस्य त्रिभागैकं नालाग्रे तु विहीनकम्
चतुस्त्रिद्व्यङ्गुलं वापि ऊर्ध्वे खातं प्रकल्पयेत्  ८८
प्रासादपार्श्वे पृष्ठे च दिशामूर्तिं तु विन्यसेत्
सेनापतिर्भवेत्पूर्वे दक्षिणामूर्तिर्दक्षिणे  ८९
पश्चिमे नारसिंहस्तु उत्तरे च पितामहः
तन्मण्डपस्य पार्श्वे तु विघ्नमूर्तिं प्रकल्पयेत्  ९०
सौम्ये कात्यायनीं कुर्यान्महिषस्य शिरःस्थिताम्
वृतेरुत्तरसीमान्तं द्वारोत्सेधमिति स्मृतम्  ९१
तदर्धं चैव बहुलं सर्वप्रासादयोग्यकम्
द्वारे उत्तरबन्धं च द्वारबन्धमिति स्मृतम्  ९२
द्वारबन्धस्य तत्पूर्वे लिङ्गस्थापनमारभेत्
स्थाप्य द्वारोत्तरं पश्चात्सर्वसंपत्कराय च  ९३
आभिचारेण कुर्यात्तु राजराष्ट्रविनाशनम्
एकभूमिरिदं प्रोक्तं द्वितलं च ततः शृणु  ९४
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे एकतलप्रासादपटलः षष्ठः समाप्तः

## सप्तमः पटलः
## द्वितलप्रासादविधिः

अथातः संप्रवक्ष्यामि द्वितलं पञ्चमानकम्
पञ्चसप्तनवरुद्रत्रयोदशकरैरपि  १
हस्तसंख्या भवेत्तत्र द्वितलस्य विशेषतः
विस्तारद्विगुणोत्सेधं सर्वेषां तु विधीयते  २
पञ्चहस्तप्रविस्तारं षड्भागेन विभाजयेत्
एकांशं कूटविस्तारं शालायामं द्विधं भवेत्  ३
एकांशहारसंयुक्तं हारपञ्जरशोभितम्
अग्रतो मण्डपं कुर्यात्प्रासादसमविस्तरम्  ४
प्रासादद्विगुणं वाथ अर्धत्रिपादमेव वा

विमान्तोत्सेधं विभजेदष्टाविंशतिसंख्यया ५
त्रिभागाभिरधिष्ठानं षड्भागं पाददैर्घ्यकम्
त्रिभागैः प्रस्तरं कुर्यादादिभूमौ विशेषतः ६
पञ्चभागोर्ध्वपादं स्याद् द्विभागं प्रस्तरं भवेत्
वेदिकाभागमेवं स्याद्द्विभागं ग्रीवमुच्यते ७
चतुर्भागोर्ध्वमुत्सेधं शिखरं कारयेद्बुधः
शेषं स्थूपिरिति ख्यातमेवं द्वितलमानकम् ८
चतुरश्रमधिष्ठानं चतुरश्रं शिखरं भवेत्
चतुष्कूटसमायुक्तं चतुश्शालासमायुतम् ९
पञ्जरैरष्टभिर्युक्तं महानासीचतुर्युतम्
प्रस्तरं नासिकायुक्तं षड्विंशतिकसङ्ख्यकम् १०
मण्डपाग्रे विशेषेण अनुनासीं प्रकल्पयेत्
ऊर्ध्वे भूमिं चतुर्भित्तिं सर्वालङ्कारसंयुतम् ११
पूर्वोक्तैः पादविस्तारैः पादालङ्कारमुच्यते
एतद्वै स्वस्तिकं नाम सर्वदेवेषु योग्यकम् १२
सप्तहस्तं तु विस्तारं षड्भिर्भागैर्विभाजयेत्
भागैकं कूटविस्तारं शालायामं द्विभागिकम् १३
भागैकं हारसंयुक्तं हारपञ्जरशोभितम्
चतुरश्रमधिष्ठानं शालानिर्गममेव च १४
दण्डं वाथ द्विदण्डं वा त्रिदण्डं कोष्ठनिर्गमम्
मण्डपं समसूत्रं स्यादन्तरालं तु निम्नकम् १५
अग्रतो मण्डपं कुर्यात्प्रासादसमविस्तरम्
तदर्धं वा त्रिपादं वा मण्डपस्य तु विस्तरम् १६
द्विदण्डं वा त्रिदण्डं वा अन्तरालस्य निर्गमम्
एकहस्तं द्विहस्तं वा प्रासादं भागमेव वा १७
अन्तरालस्य विस्तारं मध्ये कुम्भलतायुतम्
शालामध्ये तु कर्तव्यं तोरणं लक्षणान्वितम् १८
वृतेरुत्तरसीमान्तं तोरणस्योच्छ्रयं भवेत्
त्रिदण्डं वा त्रिदण्डार्धं चतुर्दण्डं सविस्तरम् १९

पादायामं नवांशं स्यात्षड्भागं पाददैर्घ्यकम्
त्रिभागं मकरांशं स्यात्पत्रपातं विशेषतः  २०
कर्णे कर्णे तु कूटं स्यान्मध्ये मध्ये तु कोष्ठकम्
हारान्तराणां तन्मध्ये पञ्जरोपरि कल्पितः  २१
चतुस्त्रश्शाला नास्यश्च कूटं चत्वारि एव च
विमानोत्सेधं विभजेच्चतुस्त्रिंशतिभागभाक्  २२
त्र्यंशमर्धमधिष्ठानं सप्तांशं स्तम्भदैर्घ्यकम्
त्रिभागैः प्रस्तरं कुर्यादूर्धपादं षडंशकैः  २३
प्रागिव प्रस्तरं कुर्याद्वेदिका भागमेव च
ग्रीवोत्सेधं द्विभागार्धं शिखरं पञ्चभागिकम्  २४
शेषं स्थूपिरिति ख्यातमेतद्द्वितलमानकम्
ऊर्ध्वभूमिं चतुर्भित्तिमध्ये दण्डविनिर्गतम्  २५
वेदिकाष्टाश्रसंयुक्ता शिखरोऽष्टाश्रमिष्यते
ग्रीवमष्टाश्रसंयुक्तं महानास्यष्ट एव च  २६
महानास्याश्च विस्तारं त्रिदण्डं तावदुच्छ्रयम्
प्रस्तरं नासिकायुक्तं चत्वारिंशत्सलक्षणम्  २७
ऊर्ध्वपादोन्नतं यावत्पञ्चभागैर्विभाजयेत्
भागैकं वेदिकोत्सेधं भागं ग्रीवमुदाहृतम्  २८
द्विभागं शिखरं तस्मिन्नेकांशा स्थूपिका स्मृता
एतद्वै कूटशालानां मानं सर्वत्र लक्षितम्  २९
अष्टाश्रं चतुरश्रं वा कूटानामाकृतिर्भवेत्
गोपुरस्याकृतिं ध्यात्वा कोष्ठाकाराकृतिस्तथा  ३०
एभिस्तु लक्षणैर्युक्तं कैलासं तत्प्रकीर्तितम्
नवहस्तं विस्तरं स्यात्सप्तभागैर्विभाजयेत्  ३१
चत्वारि भागमाधिक्यमायतं चतुरश्रकम्
अधिष्ठानसमं सूत्रमन्तरालं सुनिम्नकम्  ३२
ऊर्ध्वं तु भूमिं विभज्यात्पञ्चभागैर्विचक्षणः
विमानोत्सेधं विभजेत्त्रयस्त्रिंशतिरंशकैः  ३३
त्रिभागार्धैरधिष्ठानं सप्तांशैः पाददैर्घ्यकम्

त्रिभागैः प्रस्तरं कुर्यादूर्ध्वपादं षडर्धकम् ३४
प्रस्तरोच्चद्विभागाभ्यां वेदिका भागमेव च
तद्ग्रीवोच्चं द्विभागार्धं शिखरं पञ्चभागिकम् ३५
शेषं स्थूपिरिति ख्यातमेतद्द्वितलमानकम्
मध्यमे तोरणयुक्तं षोडशैः पञ्जरैर्युतम् ३६
प्रस्तरं नासिकायुक्तं षोडशं च द्वयाधिकम्
चतुरश्रायतं ग्रीवं शिखरं तावदेव तु ३७
स्थूपित्रयसमायुक्तं कूटशालाविहीनकम्
पादं सर्वाङ्गसंयुक्तं महानास्याश्चतस्रकः ३८
एभिस्तु लक्षणैर्युक्तं विमानं निषदं स्मृतम्
रुद्रहस्तप्रविस्तारं सप्तभागैर्विभाजितम् ३९
एकांशकूटविस्तारं शालायामं त्रिभागभाक्
शालामध्ये तु निष्क्रमं द्विदण्डेनैव कारयेत् ४०
भागैकं हारसंयुक्तं हारमध्ये द्विनासिका
पञ्चभागस्तदूर्ध्वे तु पञ्जराभिस्तु तारयुक् ४१
प्रासादस्योच्छ्रयं यावत्षट्त्रिंशद्भागया भजेत्
चत्वारि कुट्टिमोत्सेधमष्टांशं पाददैर्घ्यकम् ४२
प्रस्तरं स्यात्त्रिभागाभिर्भागैकं वेदिकोन्नतम्
ग्रीवोत्सेधं त्रिभागाभिः षड्भिर्वै शिखरं स्मृतम् ४३
शेषांशैः स्थूपिकां कुर्यात्सर्वसंपत्कराय च
मण्डलं कर्णकूटं स्याच्छिखरं वर्तुलं भवेत् ४४
वेदिकाग्रीवौ वृत्तौ तु महानासिचतुष्टयम्
प्रस्तरं नासिकायुक्तं चत्वारिंशच्च संयुतम् ४५
मण्डपं तु त्रिधा भज्य मध्ये तोरणसंयुतम्
मण्डपस्य तु यत्पादं तत्पादोपरि नासिका ४६
शालामध्ये महानासी भद्रमेवं प्रकीर्तितम्
एकयोन्या कृतं पादमष्टाश्रं पादविस्तृतम् ४७
तोरणस्तम्भवेदाश्रं सर्वालंकारसंयुतम्
एभिश्च लक्षणैर्युक्तं भद्रकोष्ठमिति स्मृतम् ४८

प्रासादस्य तु विस्तारं त्रयोदशकरैर्मितम्
विस्तारं सप्तधा कृत्वा भागं स्यात्कर्णकूटकम् ४९
शालायामं तथैवं स्यादर्धांशं पञ्जरं भवेत्
ऊर्ध्वभूमिस्तु कर्तव्या पञ्चभागैर्विशेषतः ५०
पञ्जरं कूटकोष्ठं च समसूत्रं निम्नहारकम्
अन्तरालं तु निम्नं स्यान्मण्डपं समसूत्रकम् ५१
शालोन्नतं तु कर्तव्यं कूटनिम्नं तु कारयेत्
चतुष्कोष्ठाष्टकूटं स्यात्पञ्जरं विंशतिर्भवेत् ५२
विमानोत्सेधं विभजेच्चत्वारिंशत्सुभागिकम्
तुर्यांशं कुट्टिमोत्सेधमष्टांशं स्तम्भमुच्यते ५३
चतुर्भागं चोर्ध्वमञ्चं सप्तांशं तूर्ध्वपादकम्
त्रिभागं मञ्चमुत्सेधं द्विभागं वेदिकोच्छ्रयम् ५४
त्रिभागं ग्रीवमुत्सेधं शिखरं सप्तभागिकम्
शेषं स्थूपिरिति ख्यातमेतद्द्वितलमानकम् ५५
अष्टाश्रं शिखराकारं ग्रीवमष्टाश्रमिष्यते
महानास्यष्टभिर्युक्तमनासिप्रस्तरैर्युतम् ५६
चत्वारिंशच्च नासी च अनासीप्रस्तरान्वितम्
मण्डपस्य तु मध्यमे नासिका परिकीर्तिता ५७
वृतेरुत्तरसीमान्तं द्वारोत्सेधं विधीयते
तदर्धं विस्तरं चैव सर्वद्वारस्य लक्षणम् ५८
वृतेरुत्तरसीमान्तं मण्डपद्वारमिष्यते
अर्धं वापि त्रिपादं वा द्वारोत्सेधसमं च वा ५९
मण्डपद्वारविस्तारं कारयेद्वेधकर्मणि
कूटविस्तारमष्टांशं कारयेत्तु विचक्षणः ६०
द्विभागं नासिविस्तारं शालायामं तथैव च
एतत्पञ्चालनामा हि सर्वदेवेषु योग्यकम् ६१

इति श्रीदीप्तशास्त्रे प्रतिष्ठातन्त्रे द्वितलप्रासादपटलः सप्तमः समाप्तः

## अष्टमः पटलः
## त्रितलप्रासादविधिः

अथातः संप्रवक्ष्यामि पञ्चमानं त्रिभूमिकम्
विस्तारोत्सेधमधुना एकैकं वक्ष्यते क्रमात् १
विस्तारं सप्तहस्तं स्यादुच्छ्रयं द्विगुणं भवेत्
विस्तारं नवहस्तं स्यादुत्सेधं द्विगुणं भवेत् २
एकादशकरे तारे सप्तदशसमुच्छ्रयः
विंशद्धस्तोच्छ्रयं हर्म्यं विस्तारं तु त्रयोदशम् ३
पञ्चदशकरे हर्म्ये उच्छ्रयं चैकविंशतिः
एवं पञ्चविधं प्रोक्तं विस्तरोच्चं विशेषतः ४
सप्तहस्तं भवेत्तारं सप्तभागेन भाजयेत्
एकांशं कूटविस्तारं शालायामं द्विभागिकम् ५
अध्यर्धं हारविस्तारं हारपञ्जरशोभितम्
पञ्चभागोर्ध्वभूमिस्तु ऊर्ध्वभूमित्रिभागिकम् ६
विमानोत्सेधं विभजेच्चतुर्विंशतिभागिकम्
द्विभागाभ्यामधिष्ठानं द्विगुणं पाददैर्घ्यकम् ७
मञ्चोत्सेधं द्विभागं स्यादादिभूम्येवमेव तु
त्रिपादाधिकवह्न्यंशमूर्ध्वस्तम्भस्य तुङ्गकम् ८
अध्यर्धं प्रस्तरोत्सेधं त्रिभागं चोर्ध्वपादकम्
पादाधिकं तु यद्भागमूर्ध्वमञ्चोच्छ्रयं भवेत् ९
अर्धांशं वेदिकोत्सेधं भागं ग्रीवमुदाहृतम्
त्रिभागार्धं शिरोत्सेधं शेषभागं शिखा भवेत् १०
चतुरश्रमधिष्ठानं चतुरं शिखरं भवेत्
अधिष्ठानसमं सूत्रमन्तरालं तु निम्नकम् ११
समं त्रिपादमर्धं वा मुखमण्डपमिष्यते
मण्डपं तु त्रिधा भज्यं मध्यमे तोरणं कुरु १२
शालामध्ये तु कर्तव्यं तोरणं विधिना सह
तोरणस्य तु विस्तारमुत्सेधं वक्ष्यतेऽधुना १३
पादायामं त्रिधा कृत्वा द्विभागं पाददैर्घ्यकम्

शेषभागं झषांशं तु एकांशं विस्तृतं भवेत्  १४
अथवा पादमानं तु दशभागं कृतं पुनः
स्तम्भोच्चमृषिभागं स्याच्छेषांशं मकरोदयम्  १५
तद्विस्तारं चतुर्भागं अथवा तत्त्रिभागिकम्
वृतेरुत्तरसीमान्तं तोरणस्योच्छ्रयं भवेत्  १६
तत्समं पञ्जरायामं तस्य लक्षणमुच्यते
पादायामं नवांशं स्यात्पञ्चभागाङ्घ्रिकायतम्  १७
द्विविधं प्रस्तरोत्सेधमध्यर्धांशं गलोच्छ्रयम्
पादयुक्तं तथा केचित्केचित्पादविहीनकम्  १८
पञ्जरस्य तु विस्तारं द्विदण्डं वा त्रिदण्डकम्
चतुदण्डं वा कर्तव्यमथवा नासिकासमम्  १९
गर्भगेहं चतुर्भागादेकं च द्वित्रिभागिकम्
महानास्याश्च विस्तारं चतुर्भागं तदुच्छ्रयम्  २०
तद्विस्तारद्विभागं वा त्रिपादद्वयमेव वा
पङ्क्तिद्वयसमायामं तस्यार्धं विस्तृतं भवेत्  २१
दण्डतारद्विदण्डं वा अनुनासी च विस्तृतम्
पूर्वोक्तगण्यमानेन कूटशालाभिरन्वितम्  २२
प्रस्तरं पूर्ववत्कुर्यात्पूर्वोक्तपादलक्षणम्
अष्टकूटसमायुक्तमष्टशालासमन्वितम्  २३
पञ्जरैः षोडशैर्युक्तं महानासीचतुष्टयम्
चतुषष्ट्यनुनासीभिरावृतं चापि सुन्दरम्  २४
एतच्च भद्रललितं सर्वशान्तिकरं परम्
नवहस्तं तु विस्तारं सप्तभागेन भाजयेत्  २५
एकांशं कूटविस्तारमेकांशं कोष्ठमेव च
हारा चैकांशमेवं स्याद्धारापञ्जरशोभितम्  २६
पञ्चभागोर्ध्वभूमिः स्यात्तस्योर्ध्वे भूस्त्रिभागिकम्
विमानोत्सेधं विभजेच्चतुर्विंशतिभागिकम्  २७
अष्टकूटं क्रमात्प्रोक्तं शाला द्वादश चैव च
अष्टाश्रं शिखरं तस्य महानास्यष्ट एव च  २८

अष्टाभिः पञ्जरैयुक्तमादिभूमिरिति स्मृतम्
विंशच्छतानुनासीभिरावृतं लक्षणैर्युतम् २९
वेदिकाष्टाश्रमेवं स्याद् ग्रीवं तस्याकृतिर्भवेत्
नानालंकारसंयुक्तं नानापत्रलतायुतम् ३०
सर्वालंकारसंयुक्तं चतुरश्रं कुट्टिमं भवेत्
एभिस्तु लक्षणैर्युक्तं विमलाकृतिनामकम् ३१
एकादशकरं व्यासं सप्तदशकरोच्छ्रयम्
चतुर्भागमथाधिक्यमायामं वृत्तमिष्यते ३२
द्व्यश्रवृत्तमधिष्ठानं तद्वच्छिखरमिष्यते
तद्विस्तारार्धमानेन वर्तितं वर्तुलं भवेत् ३३
तत्प्रमाणसमं द्व्यश्रं द्व्यश्रात्पार्श्वे तु पृष्ठकम्
कृत्वा भागं चतुर्विंशं द्व्यंशं सौष्ठिकविस्तरम् ३४
द्व्यंशं कोष्ठायतं विद्धि आयामार्धं तु विस्तरम्
अंशेन पञ्जरायाममंशे हारं च निम्नकम् ३५
समं त्रिभागमर्धेन मुखमण्डपमेव च
मण्डपं समसूत्रं स्यादन्तरालं तु निम्नकम् ३६
कूटकोष्ठादिसर्वाङ्गं मानसूत्राद्बहिः स्थितम्
सव्यासार्धं तदध्यर्धं दण्डे वा द्वित्रिदण्डकम् ३७
मानसूत्राद्बहिस्तेषां निर्गतिः परिपठ्यते
षड्भागं स्यात्तदूर्ध्वे तु तस्योर्ध्वे भूश्चतुर्थकम् ३८
एकपञ्चाशदंशं तु कृत्वा हर्म्यायतं बुधः
पादाधिकं चतुर्भागं तस्योत्सेधमितीष्यते ३९
द्विगुणं पादमुत्सेधं मञ्चोच्चं चतुरंशकम्
अष्टार्धांशमधःस्तम्भं मञ्चमानं तलात्समम् ४०
अष्टांशं चोर्ध्वपादोच्चं प्रस्तरोच्चं चतुर्थकम्
सप्तांशं चोर्ध्वपादोच्चं प्रस्तरोर्ध्वं त्रिभागिकम् ४१
अध्यर्धं वेदिकोत्सेधं प्रस्तरोपरि कारयेत्
द्विभागं ग्रीवमुत्सेधं शिखरं सप्तभागिकम् ४२
शेषांशं स्थूपिकायाममेतत्त्रितलमानकम्

अष्टकूटं तथा शाला पञ्जरैः षोडशैर्युतम् ४३
महानासीभिरित्युक्तमनुनासीभिरन्वितम्
अष्टाधिकशतं कुर्यादल्पनासी चतुर्दिशि ४४
शिरसां पूर्वनेत्रं तु पश्चिमं वापि कारयेत्
त्रयस्थूपिसमायुक्तं तोरणैस्त्रिभिरन्वितम् ४५
नानापादसमायुक्तं नानारूपविचित्रितम्
सोपपीठतलं वापि केवलं वा मसूरकम् ४६
हारान्तरस्तम्भमध्ये पादायतनमारभेत्
हस्तिपृष्ठमिदं नाम सर्वदेवेषु योग्यकम् ४७
त्रयोदशकरं तारं नवभागैर्विभाजयेत्
एकांशकूटविस्तारं शालायामं द्विभागकम् ४८
हारायामद्विभागं स्याद्धारपञ्जरशोभितम्
तदूर्ध्वे सप्तभागं स्यात्पञ्चभागोर्ध्वभूमिकम् ४९
तावत्प्रासादतुङ्गं तु द्विचत्वारिंशदङ्गकम्
त्रिभागार्धमधिष्ठानं पादमानं तु सप्तकम् ५०
त्रिभागं प्रस्तरोत्सेधं षडर्धं चोर्ध्वपादकम्
त्रिभागं प्रस्तरोच्चं स्यादूर्ध्वपादं षडंशकम् ५१
द्विभागं चोर्ध्वमञ्चोच्चमर्धांशं वेदिकोच्छ्रयम्
अध्यर्धांशं गलोत्सेधं शिखरं पञ्चभागिकम् ५२
शेषं स्थूपिरिति ख्यातं प्रासादं त्रितलं भवेत्
चतुर्भागसमाधिक्यमायामं चतुरश्रकम् ५३
ग्रीवं वृत्तायतं कुर्याच्छिखरं वृत्तयातं भवेत्
स्थूपित्रयं तु कर्तव्यमष्टकूटसमायुतम् ५४
अष्टशालासमायुक्तं पञ्जरैः षोडशैर्युतम्
महानासीचतुर्युक्तमनुनासिविभूषितम् ५५
चतुर्विंशाधिकशतैरल्पनासीभिरन्वितम्
एभिस्तु लक्षणैर्युक्तं दिशाभद्रमिति स्मृतम् ५६
दशपञ्चाधिकं हस्तं विस्तरेण विधीयते
एकविंशतिहस्तेन आयामं तस्य कीर्तितम् ५७

दशभागायतं भज्य एकांशं कूटविस्तरम्
शालायामं द्विभागं स्यादेकैकं हस्तितुण्डकम् ५८
कूटकोष्ठगजतुण्डैर्मध्यहारविभूषितम्
परितः खण्डहर्म्यांशम् अलिन्दं परितो भवेत् ५९
तदूर्ध्वे षड्भागयुक्तं चतुर्भागोर्ध्वभूमिकम्
विमानोत्सेधमेकेन पञ्चाशद्भिर्विभाजयेत् ६०
चतुर्भागमधिष्ठानमष्टभागाङ्घ्रिकायतम्
तुर्यांशं प्रस्तरोत्सेधं सप्तार्धं चोर्ध्वपादकम् ६१
त्रिभागं प्रस्तरोच्चं स्याद्भागैकं वेदिकोच्छ्रयम्
द्विभागाभ्यां गलोत्सेधं शिखरोच्चं षडर्धकम् ६२
शेषभागं शिखोत्सेधं भूमौ भूमौ विधीयते
कूटकोष्ठगजतुण्डं समसूत्रे विधीयते ६३
चतुरश्रमधिष्ठानं चतुरं शिखरं भवेत्
अष्टकूटसमायुक्तमष्टशालासमन्वितम् ६४
हस्तितुण्डाष्टसंयुक्तं चतुर्विंशतिपञ्जरैः
महानासीचतुर्युक्तमनुनासीभिरन्वितम् ६५
अष्टाविंशच्चतुर्नासी चतुर्दिक्षु समन्वितम्
एभिस्तु लक्षणैर्युक्तं गान्धारं नाम हर्म्यकम् ६६
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे त्रितलप्रासादपटलो नामाष्टमः

## नवमः पटलः
## चतुर्भूमिविधिः

अतः परं प्रवक्ष्यामि चतुर्भूमेस्तु लक्षणम्
पञ्चमानप्रमाणेन प्रासादं वक्ष्यतेऽधुना १
नवहस्तं समारभ्य सप्तदशकरान्तकम्
पञ्चधा विस्तरं प्रोक्तं प्रासादानां विशेषतः २
विस्तारद्विगुणोत्सेधं नवैकादशहस्तकैः
पादोनद्विगुणोत्सेधमन्तरौ वा विमानकौ ३
शेषं चाध्यर्धमुत्सेधं पादुकादिशिखान्तकम्

नवहस्तप्रविस्तारमष्टधा विभजेत्पुनः ४
एकांशं कूटविस्तारं हारतारद्वयं भवेत्
हारमध्ये तु भागेन पञ्जराणि तु कल्पयेत् ५
शालायामद्विभागेन भागैकं विस्तरं भवेत्
ऊर्ध्वं चैव चतुर्भागं कूटकोष्ठैर्विभूषितम् ६
तस्योर्ध्वे तु चतुर्भागं सकलं तत्षडंशकम्
पूर्ववत्कूटकोष्ठानि चोर्ध्वे वेदांशकं भवेत् ७
विमानोत्सेधमानं तु द्विचत्वारिंशदंशकम्
त्रिभागाभिरधिष्ठानं द्विगुणं पाददैर्घ्यकम् ८
प्रस्तरं त्रिभिरंशेन पञ्चार्धं चोर्ध्वपादकम्
पादहीनं त्रिभागेन मञ्चोत्सेधं प्रकल्पयेत् ९
ऊर्ध्वभूमिस्तु पञ्चांशं मञ्चमध्यर्धमिष्यते
चतुर्भागार्धमुत्सेधमूर्ध्वस्तम्भस्य कीर्तितम् १०
द्विभागं मञ्चमानं स्यादेकांशं वेदिकोच्छ्रयम्
अध्यर्धं तु गलोत्सेधमङ्गचत्वारिशीर्षकम् ११
शेषांशं स्थूपिमानं स्याच्चतुर्भूमौ विशेषतः
चतुरश्रमधिष्ठानमष्टाश्रं शिखरं भवेत् १२
अधिष्ठानसमं सूत्रमन्तरालप्रवेशनम्
समं त्रिपादमर्धं वा मुखमण्डपमिष्यते १३
हर्म्यस्य मध्यमे कुर्यात्तोरणं लक्षणान्वितम्
द्वारं वै पादालंकारं पूर्ववत्कारयेद्बुधः १४
सौष्ठिकैर्द्वादशैर्युक्तं शालाभिर्द्वादशैर्युतम्
पञ्जरैः षोडशैर्युक्तं त्वष्टाभिर्नासिभिर्युतम् १५
अष्टाश्रं शिखरं तस्मिंस्तोरणैस्त्रिभिरन्वितम्
अल्पनासीद्वयाधिक्यं पञ्चाशच्छतमेव च १६
सौम्यमेतद्विमानं तु सर्वकामफलप्रदम्
आयव्ययं च नक्षत्रं योनिवारांशमेव च १७
तत्प्रासादेषु सर्वेषु यत्नेन तु परीक्षयेत्
यावत्प्रासादविस्तारं तावद्भागं सुनिश्चितम् १८

पदं प्रदि सप्तवृद्धिः स्याद्द्वादशेन हरेत्पुनः
शेषमायमिति प्रोक्तं व्ययमत्र विधीयते १९
ऋषिभिर्गुणितं तत्र दशभिर्ह्रासकं व्ययम्
पूर्ववत्कोष्ठसङ्ख्या तु चाष्टाभिर्गुणितं भवेत् २०
सप्तविंशतिभिर्ह्रासं शेषाण्यश्वादि गण्यते
यच्छेषं तत्र नक्षत्रे तत्पदप्रतिवर्तितः २१
त्रिगुणं चाष्टभिर्ह्रासं शेषं केत्वादिकं विदुः
तत्कोष्ठं प्रति वृद्धिः स्यात्त्रिसृभिस्सप्तभिर्हरेत् २२
शेषं वारमिति प्रोक्तमुच्यते तु शुभाशुभम्
आयाधिक्यं व्ययं हीनं सर्वसंपत्करं नृणाम् २३
तन्मण्डलाधिपो राजा जयं शीघ्रमवाप्नुयात्
आयहीनं व्ययाधिक्यं रोगदं वास्तुनाशनम् २४
ग्रामादीनां च नक्षत्रं राजर्क्षं तु विशेषतः
यजमानस्य नक्षत्रं वास्तुर्क्षेणैव शोधयेत् २५
अनुक्तं यत्परित्यज्यमनुरूपं प्रगृह्यताम्
ध्वजसिंहोक्षनागश्च यल्लब्धं तच्छुभं स्मृतम् २६
धूमश्वाखरकाकाश्च वर्जयेन्मतिमान्नरः
आभिचारेण गृह्णीयात्कर्तृभर्तृविनाशनम् २७
सूर्यसौरिकुजान्त्यज्यं शेषवारं शुभावहम्
एवमुक्तप्रकारेण यत्नेनैव परीक्षयेत् २८
हस्तं प्रत्यङ्गुलं ग्राह्यं तद्दोषशमनाय च
रुद्रहस्तप्रविस्तारं प्रासादद्विगुणोच्छ्रयम् २९
विस्तारं दशधा भज्यमेकांशं कूटविस्तरम्
शालायामद्विभागाभ्यामेकांशं हस्तिपृष्ठकम् ३०
अंशेन हारं कर्तव्यमंशेनालिन्दमेव च
ऊर्ध्वभूमिस्तु षड्भागं कूटकोष्ठैर्विभूषितम् ३१
ऊर्ध्वभूमिश्चतुर्भागं षड्भागेन तु भाजयेत्
तस्योर्ध्वे तु चतुर्भागैर्मध्यमे दण्डनिर्गमम् ३२
गर्भगेहं चतुर्भागं त्रिभागं भित्तिविस्तरम्

हर्म्योत्सेधं समस्तं तु पञ्चाशद्भागया सह ३३
त्रिभागार्धमधिष्ठानं सप्तांशं स्तम्भदैर्घ्यकम्
प्रस्तरोच्चं त्रिभागार्धमादिभूमौ विशेषतः ३४
षडर्धं चोर्ध्वपादोच्चं सपादं मञ्चं त्र्यंशकम्
षड्भागमूर्ध्वपादं तु त्रिभागं प्रस्तरं भवेत् ३५
अर्धाधिकं तु पञ्चांशमूर्ध्वपादस्य कीर्तितम्
प्रस्तरोच्चं त्रिभागार्धमंशद्वयगलोन्नतम् ३६
शिखरं पञ्चभागोच्चं शेषांशैश्च शिखा भवेत्
चतुरश्रमधिष्ठानं शालानिर्गमनं भवेत् ३७
गजपृष्ठानि सर्वाणि कोष्ठस्याभिमुखं भवेत्
कूटशालान्तरे हाराच्छत्रशीर्षकवत्कृतम् ३८
हारायां तु विनासी स्यादावृतं वर्तुलं प्रति
शालात्रिदण्डनीव्रं स्यात्तन्मध्ये तोरणं भवेत् ३९
सौष्ठिकानां शिरोकारमष्टाश्रं दिक्षु नासिका
शिखरं वृत्तमेवं स्याद्वेदिका तु तथैव हि ४०
रविकूटसमायुक्तं शाला चैव तथैव हि
तत्राष्टौ गजपृष्ठं स्यात्पञ्जरैरष्टभिर्युतम् ४१
षट्सप्तत्रिशिराधिक्यं शतमेवानुनासिका
एवं नाम्ना तु कलितं सर्वदेवेषु योग्यकम् ४२
त्रयोदशकरं तारं पादोनद्विगुणोच्छ्रयम्
एकादशेन विभजेत्तद्विस्तारं विचक्षणः ४३
गर्भगेहं नवांशं स्याद् द्व्यंशं च भित्तिविस्तरम्
सालिन्दं तु तथांशेन खण्डहर्म्यं तथांशके ४४
अंशेन कूटविस्तारमंशेन सिंहपञ्जरम्
अंशेन हारं कर्तव्यं त्र्यंशैः शालायतं भवेत् ४५
शालामध्ये तु भागेन निर्गते तु विशेषतः
कूटमप्यर्धविस्तारं विस्तारार्धं तु बाह्यकम् ४६
कूटमध्ये विशेषेण निर्गतिं परिकल्पयेत्
हारान्तरस्य मध्ये तु कुर्यात्कुम्भलतां बुधः ४७

ऊर्ध्वभूमिस्तु सप्तांशमंशेन कूटविस्तरम्
अर्धांशे पञ्जरं कुर्यात् तद्द्व्यंशं कोष्ठकायतम्  ४८
ऊर्ध्वभूमिस्तु पञ्चांशं तत्षड्भागेन भाजयेत्
अंशेन कूटविस्तारं शालायामं द्विभागिकम्  ४९
अंशेन हारं कर्तव्यमर्धं पञ्जरशोभितम्
कूटपञ्जरशालानामन्तरे लम्बनासिका  ५०
कूटे कूटे चतुर्नासी प्रस्तरे तु तथैव च
शालामध्ये महानासी कपोते द्वे तु नासिके  ५१
पञ्जरं नासिकाकारं प्रस्तरं तु विनासिकम्
शालामध्ये तु गेहं स्याद् ब्रह्मद्वारे तु योजितः  ५२
नानाधिष्ठानसंयुक्तं नानापादैरलंकृतम्
सप्तकोट्या समायुक्तं कूटकोष्ठं युगाश्रकम्  ५३
चतुरश्रमधिष्ठानं शालाकूटविनिर्गमम्
विमानोत्सेधं विभजेत्पञ्चाशद्भागया सह  ५४
त्रिभागार्धमधिष्ठानं सप्तांशं पाददैर्घ्यकम्
प्रस्तरोच्चं त्रिभागार्धं षडर्धं स्तम्भदैर्घ्यकम्  ५५
पादाधिकत्रयंशेन ऊर्ध्वमञ्चं प्रकल्पयेत्
षडंशं चोर्ध्वपादं तु त्रिभागं प्रस्तरोन्नतम्  ५६
पञ्चभागार्धमुत्सेधमूर्ध्वभूमौ तु पादकम्
द्विभागं प्रस्तरोत्सेधमंशेन वेदिकोच्छ्रयम्  ५७
द्व्यंशं स्यात्तु गलोत्सेधं पञ्चांशं शिखरोन्नतम्
शेषं तत्र शिखामानं चतुर्भूमौ विशेषतः  ५८
चतुरश्रमधिष्ठानं शालाकूटं तु निर्गमम्
शिखरं चतुरश्रं स्याच्चतुर्नासिभिरन्वितम्  ५९
कूटैर्द्वादशभिर्युक्तं कोष्ठैर्द्वाडशभिर्युतम्
पञ्जरैः षोदशैर्युक्तं लम्बनासि तथाष्टकम्  ६०
द्विरष्टकुम्भलतायुक्तं भद्रद्वादशभिर्युतम्
द्वितलं चाल्पनासी स्यादावृतं तु कपोतके  ६१
प्रासादमेतन्नाम्ना तु श्रीप्रतिष्ठितमुच्यते

पञ्चदशकरं तारं पादोनद्विगुणोच्छ्रयम् ६२
गर्भगेहं चतुर्भागं द्विभागं भित्तिविस्तरम्
सालिन्दमंशमंशेन खण्डहर्म्यं तु कारयेत् ६३
अंशेन कूटविस्तारं द्व्यंशं कोष्ठायतं भवेत्
अंशेन पञ्जरं कुर्यादंशे हारं प्रकल्पयेत् ६४
ऊर्ध्वभूमिस्तु षड्भागं तत्सर्वं चाष्टभागिकम्
भागया कूटविस्तारमंशे हारं प्रकल्पयेत् ६५
शालायामद्विभागाभ्यामंशेन पञ्जरं भवेत्
ऊर्ध्वभूमिश्चतुर्भागं षड्भागेनैव भाजयेत् ६६
एकांशं कूटविस्तारं द्व्यंशं कोष्ठायतं भवेत्
हारान्तरं तु भागेन कुर्यादूर्ध्वे त्रिभागिकम् ६७
प्रासादोत्सेधमानं तु पञ्चाशद्भागया भजेत्
अर्धाधिकत्रिभागेन मसूरं तु प्रकल्पयेत् ६८
सप्तांशं पाददैर्घ्यं तु प्रस्तरोच्चं त्रिभागया
षडर्धं स्तम्भदैर्घ्यं तु मञ्चं वह्निं सपादकम् ६९
षडंशं चोर्ध्वपादं तु त्रिभागं प्रस्तरोन्नतम्
पञ्चभागार्धमुत्सेधमूर्ध्वभूमौ तु पादकम् ७०
पादोनं तु त्रिभागेन प्रस्तरोच्चं विधीयते
अंशेन वेदिकोत्सेधं द्वयंशं तु गलोन्नतम् ७१
पञ्चांशं शिखरोच्चं स्याच्छेषभागैः शिखा भवेत्
चतुरश्रमधिष्ठानमष्टाश्रं शिखरं भवेत् ७२
अधिष्ठानसमं सूत्रमन्तरालं तु निम्नगम्
महानासी चतस्त्रं स्यात्पक्षनासि चतस्त्रकम् ७३
वेदिकागलमष्टाश्रं पञ्जरैः षोडशैर्युतम्
सभा द्वादश एवं स्यात्कोष्ठं तत्र तथैव च ७४
शतमष्टाधिकं षष्ट्या चाल्पनासीभिरन्वितम्
तोरणत्रयसंयुक्तमष्टजालकसंयुतम् ७५
सर्वलक्षणसंयुक्तं प्रासादं श्रीप्रतिष्ठितम्
सप्तदशं तु विस्तारमध्यर्धं तस्य तुङ्गकम् ७६

प्रासादस्य तु विस्तारं भाजयेत्तु त्रयोदशम्
गर्भगेहं नवांशं स्यात्त्रयंशं भित्तिविस्तरम् ७७
सालिन्दं परितः कुर्यादंशेनांशेन हर्म्यकम्
सौष्ठिकं स्यात्तथांशेन द्व्यंशं शालायतं भवेत् ७८
त्रयंशं कोष्ठकायोग्यं हारायामं तथांशकम्
ऊर्ध्वभूमिर्नवांशं स्यादंशेन कूटविस्तरम् ७९
त्रयंशं कोष्ठकायामं द्व्यंशं हारायतं भवेत्
हारमध्ये तु भागे तु पञ्जरं कल्पयेद्बुधः ८०
तदूर्ध्वे भूमिसप्तांशं कूटं पूर्ववदिष्यते
एकांशं कोष्ठकायाममंशं हारायतं भवेत् ८१
हारामध्ये विशेषेण लम्बपञ्जरमेव हि
तदूर्ध्वभूमिपञ्चांशं नवत्र्यंशेन भाजितम् ८२
तन्मध्ये दण्डनीव्रं स्यान्महाशालाबहिर्गतम्
द्विदण्डं वा त्रिदण्डं वा कोष्ठकानां तु नीव्रकम् ८३
हाराणामन्तरे कुर्यादावृतं तोरणं क्रमात्
उन्नतं तु महाशाला कपोतं तच्छिखान्तकम् ८४
अन्तरे प्रस्तरं कुर्यादनुनासीभिरन्वितम्
कूटनिम्नोन्नतं तत्र उत्तरे तु शिखान्तकम् ८५
ऊर्ध्वभूमौ तु सर्वत्र कूटशालां तथैव च
तले तले तु पादानि सप्तभागैर्विभाजयेत् ८६
भागमेकमधोवेदिं गलं तदर्धमुन्नतम्
अङ्गेन च चतुः कुर्यादंशार्धं शिखरं भवेत् ८७
अंशेन तु शिखां कुर्यात्कूटशालातलं प्रति
नानामसूरकस्तम्भवेदिकातोरणान्वितम् ८८
जालकैरष्टभिर्युक्तमादिभूमौ विधीयते
चतुरश्रं हि तत्कूटं शिखरं मण्डलं भवेत् ८९
नीडाव्यासार्धविस्तारं विस्तारद्विगुणोन्नतम्
तोरणं हारयायुक्तं तदूर्ध्वे तु झषांशकम् ९०
विमानोत्सेधमानं तु षष्टिभागेन भाजयेत्

चतुर्भागं तलोत्सेधं द्विगुणं स्तम्भदैर्घिकम् ९१
प्रस्तरं तलवत्तुङ्गं सप्तार्धं चोर्ध्वपादकम्
पादाधिकत्रयंशेन मञ्चोच्चं तु प्रकल्पयेत् ९२
ऊर्ध्वस्तम्भं षडंशेन तदर्धं प्रस्तरोन्नतम्
द्व्यंशेन वेदिकां कुर्यात्त्रयंशेन गलोन्नतम् ९३
शिखरं षडंशकेनैव शेषमानं शिखा भवेत्
चतुरश्रमधिष्ठानं शालामध्ये तु निर्गमम् ९४
शेषं सर्वं समं सूत्रं गर्भगेहं सुवृत्तकम्
कूटैर्द्वादशभिर्युक्तं नीडान्यष्टौ प्रकल्पयेत् ९५
कोष्ठैर्द्वादशभिर्युक्तं पञ्चतोरणसंयुतम्
जालकैरष्टभिर्युक्तं पञ्जरैः षोडशैर्युतम् ९६
चत्वारीह महानासी विष्णुच्छन्दमिति स्मृतम् ९७
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे चतुर्भूमिपटलो नवमः

## दशमः पटलः
### मण्डपलक्षणविधिः

अतः परं प्रवक्ष्यामि मण्डपानां तु लक्षणम्
देवालयाग्रे कर्तव्यं मण्डपं लक्षणान्वितम् १
नामपादप्रमाणं च भक्त्यायामं विशेषतः
पादसङ्ख्याविधानं च कुट्टिमं त्वथ गर्भकम् २
प्रथमं स्तम्भकुड्यं च स्थापनं प्रथमेष्टका
कायानुकायसोपानं महाद्वारस्य लक्षणम् ३
तत्सर्वं तु प्रवक्ष्यामि शृणु त्वं हि महानल
तेषां मण्दपनामानि प्रवक्ष्यामि समासतः ४
श्रीभद्रं श्रीविशालं च श्रीभोगं च ततः परम्
श्रीकरं चाथ श्रीकूटं तच्छ्रीकण्ठमिति स्मृतम् ५
पुष्करं विजयं चैव भूभद्रं भद्रशोभितम्
कैलासं केसरं चैव पर्वतं पर्वतोमुखम् ६
एतत्तु कथितं नाम धनधान्यप्रदायकम्

सर्वेषां पादमानानि वक्ष्यन्ते विधिनाधुना ७
द्विहस्तार्धं समारभ्य चतुरहस्तान्तमेव च
षडङ्गुलविवृद्ध्या तु स्तम्भाः सप्तविधोच्छ्रयाः ८
सर्वपादस्य चोत्सेधं षड्सप्ताष्टांशभाजितम्
तत्पादविस्तरं ज्ञेयं तत्तद्भागवशेन तु ९
दारुस्तम्भविशालार्धं त्रिभागं द्वयमेव च
चतुर्भागेन चैवं स्याद्भित्तिपादस्य विस्तरम् १०
अथवा पादविष्कम्भं वक्ष्यते विधिनाधुना
स्तम्भविष्कम्भमानं यत्षट्सप्ताष्टाङ्गुलं भवेत् ११
एकैकं त्रित्रिभेदं स्यादङ्गुलाङ्गुलवृद्धिकम्
द्विहस्तं च द्विहस्तार्धं त्रिहस्तं सार्धहस्तकम् १२
चतुर्हस्तं च सार्धं च भक्त्यायामं च षड्विधम्
अथवा क्षेत्रपादानामाकृतिं च विशेषतः १३
चतुरश्रमथाष्टाश्रं षोडशाश्रं तु वृत्तकम्
मूलाग्रं पिण्डपादं स्यान्मध्येऽष्टाश्रमथापि वा १४
कुम्भमण्डियुतं वापि कुम्भयुक्तमथापि वा
पोतिकासहितं वापि नानालङ्कारसंयुतम् १५
उत्तरादीह वृत्यन्तं प्रासादवदितीष्यते
दण्डिकामुष्टिबन्धं च मतलावृतभूषणम् १६
सिंहव्यालाङ्घ्रिकं वापि नाटकाभिरलङ्कृतम्
सर्वेषां मण्डपानां तु पादसङ्ख्या विधीयते १७
श्रीभद्रं च चतुष्पादं श्रीविशालं नवाङ्घ्रिकम्
षोडशस्तम्भसंयुक्तं श्रीभोगमिति कीर्तितम् १८
पञ्चविंशतिभिः पादैरन्वितं श्रीकरं परम्
षट्त्रिंशत्पादसंयुक्तं श्रीकूटमिति चोच्यते १९
पादेनैकोनपञ्चाशद्युक्तं श्रीकण्ठमिष्यते
पादैरष्टाष्टभिर्युक्तं पुष्कलं तत्प्रकीर्तितम् २०
एकाशीतिपदैर्युक्तं विजयं तत्प्रकीर्तितम्
शतपादसमायुक्तं जयभद्रमिति स्मृतम् २१

एकविंशच्छताङ्घ्रिभिरन्वितं भद्रशोभितम्
चत्वारिंशच्चतुर्युक्तशतपादैरलङ्कृतम्  २२
एतत्कैलासमित्युक्तं केसरं च ततः शृणु
एकोनसप्तति युक्तं शतपादं विशेषतः  २३
शतं षण्णवति प्रोक्तं पर्वतं पादसङ्ख्यया
द्विशतं पञ्चविंशद्भिर्निर्युक्तं पर्वतोमुखम्  २४
चतुरश्रमिदं प्रोक्तमेषामायतकं शृणु
मध्यस्तम्भं त्यजेत्तत्र सदालङ्कारकामिना  २५
श्रीविशालस्य तन्मध्ये पादैकं तु परित्यजेत्
एकपादविहीनं स्याच्छ्रीकरस्य च मध्यमे  २६
वेदाङ्घ्रिं मध्यमे त्यक्त्वा श्रीकूटे तु विशेषतः
श्रीकण्ठस्य तु तन्मध्ये पादमेकं परित्यजेत्  २७
चतुरङ्घ्रिविहीनं स्यात्पुष्करस्य तु मध्यमे
विजयस्य तु तन्मध्ये पादमेकं परित्यजेत्  २८
चतुरङ्घ्रिविहीनं स्याज्जयभद्रस्य मध्यमे
भद्रशोभितमध्ये तु पादमेकं विहीनकम्  २९
तन्मध्ये तु चतुष्पादं त्यजेत्कैलासमण्डपे
केसरस्य तु तन्मध्ये ह्रासयेदेकमङ्घ्रिकम्  ३०
पर्वतस्य तु तन्मध्ये चतुष्पादं परित्यजेत्
पर्वतोमुखमध्ये तु पादमेकं परित्यजेत्  ३१
तत्तत्पूर्वे द्विभित्तिश्च त्रिभित्तिश्चैकभित्तिकम्
आयतार्धविवृद्धिः स्यादङ्घ्रिकैरधिकं भवेत्  ३२
हर्म्याधिष्ठानमानं वा नवाष्टांशैकहीनकम्
अधिष्ठानस्य चोत्सेधं मण्डपानां प्रशस्यते  ३३
सर्वेषां मण्डपानां तु गर्भस्थानं प्रवक्ष्यते
द्वारदक्षिणकोणे तु यमस्तम्भे तु विन्यसेत्  ३४
बाह्ये द्विभित्तिपादे वा तत्स्थाने प्रथमेष्टका
स्थापयेन्मतिमान्मन्त्री तस्योर्ध्वे स्थाप्य गर्भकम्  ३५
खातपादे तु होमादौ झषालस्योपरि न्यसेत्

तत्स्थाने प्रथमं स्तम्भं स्थापयेत्तु विशेषतः ३६
अधिष्ठानोपरि न्यस्य समकुड्यं हलाकृतिम्
तत्स्तम्भताररत्रिगुणं चत्वारि गुणमेव च ३७
पूर्वे तु दक्षिणे चैव पश्चिमे वा विशेषतः
उत्तरे दक्षिणे वापि भित्तिं कुर्यात्सलक्षणाम् ३८
कर्णे कर्णे त्रिभित्तिश्च द्विभित्तिर्वा विभित्तिकः
तदंशं कुट्टिमं भागं मध्ये द्वारं प्रकल्पयेत् ३९
कायानुकायं सर्वेषां प्रस्तरं हर्म्यवत्कृतम्
अजाङ्गणस्य चोर्ध्वे तु सभां सम्यक्प्रकल्पयेत् ४०
अधिष्ठानाधिरोहार्थं सोपानं पार्श्वयोर्मुखम्
एकभक्तिविनिष्क्रान्तं द्विभक्त्यायतमिष्यते ४१
अर्धभक्तिविनिष्क्रान्तं दैर्घ्यं कुर्यात्त्रिभागिकम्
हस्तिहस्तेन संयुक्तं सोपानं समखण्डकम् ४२
अधिष्ठानस्तम्भयुक्तं प्रस्तराभिर्विभूषितम्
मण्डपस्य तु तद्बाह्ये भक्त्येकं परिकल्पयेत् ४३
आवारं कल्पयेद्धीमाञ्चतुर्दिक्ष्वथ कल्पयेत्
मूलपादोदयार्धं वा त्रिपादं वा तदुच्छ्रयम् ४४
पोतिका चोत्तरं चोर्ध्व वलयं चोर्ध्ववेशनम्
दण्डकोत्तरयोः स्थाने लूपारोहं प्रकल्पयेत् ४५
फलकैर्लोहलोष्टैर्वा मृण्मयैश्छादनं भवेत्
सोपानोर्ध्वाङ्घ्रयः सर्वे हरिस्तम्भं प्रचक्षते ४६
सिंहैर्वापि गजैर्वापि व्यालैर्वा भूतकैरपि
लीलाजनैर्भूषणैश्च भूषयेन्मण्डपं तथा ४७
प्रस्तरं सुधया कार्यं महानासीविभूषितम्
मण्डपोर्ध्वे प्रकर्तव्यं जलमार्गं चतुर्दिशि ४८
उक्तमेतद्विधानेन धनधान्यजयप्रदम्

इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे मण्डपलक्षणे नाम दशमः पटलः

## एकादशः पटलः

## परिवारलक्षणविधिः

अतः परं प्रवक्ष्यामि परिवारस्य लक्षणम्
आदिप्रासादबाह्ये तु परिवारान्प्रकल्पयेत् १
अष्टौ वै षोडशश्चैव द्वात्रिंशच्च यथाक्रमम्
परिवाराः प्रकर्तव्याः प्राकाराभ्यन्तरेष्वपि २
आदिप्रासादविस्तारं यत्तद्दण्डमिहोच्यते
अन्तर्मण्डलदण्डार्धाद्दण्डं चान्तरहारकम् ३
द्विदण्डमध्यहारायां मर्यादौ च चतुर्थकम्
महामर्यादिभित्तिः स्यात्सप्तदण्डप्रमाणकम् ४
परितः स्थलसंयुक्तं तत्पूर्वेष्वायतं भवेत्
अध्यर्धद्विगुणं वापि त्रिगुणं वा चतुर्गुणम् ५
मुखायामिति प्रोक्तं प्राकाराणां विशेषतः
परिवारालयं ग्राह्यं त्रिविधेन प्रकीर्तितम् ६
सालभित्त्याश्रितं वाथ अन्तराले तु वा पुनः
परिवारं प्रकर्तव्यमन्तर्मण्डलके बुधैः ७
परिवाराष्टौ प्रकर्तव्या अन्तर्हारे विशेषतः
षोडशं परिवारं स्यान्मध्यहारे यथाक्रमम् ८
मर्यादाभित्तिके कुर्याद्द्वात्रिंशत्परिवारकान्
प्राकारभित्तिविष्कम्भं वक्ष्यते क्रमशोऽधुना ९
अन्तर्मण्डलभित्तेश्च विष्कम्भं हस्तमानतः
तस्मात्त्यङ्गुलवृद्ध्या तु षट्त्रिंशत्यङ्गुलान्तकम् १०
प्रासादाग्रे तु कर्तव्यं स्नानमण्डपमुत्तमम्
प्रासादाध्यर्धकं वापि द्विगुणं वा विशेषतः ११
मण्डपस्य तु विस्तारं समं वै चतुरश्रकम्
वृत्तेरुत्तरसीमान्तं मण्डपद्वारमिष्यते १२
तस्यार्धं वा त्रिपादं वा द्वारोत्सेधमथापि वा
मण्डपद्वारविस्तारमेवमेवं विधीयते १३
प्राकारस्य तु विस्तारं चतुरंशैर्विभाजयेत्

तत्तत्सूत्रे स्थितान्देवानालयेन समन्वितान् १४
पूर्वे तु वृषभस्थानमाग्नेय्यां सिंहवाहिनीम्
याम्ये मातृगणानां तु नैर्ऋत्यां विघ्ननायकम् १५
वारुणे तु कुमारं स्याद्वायव्यां काकवाहिनीम्
सौम्ये तु केशवस्थानमैशान्यां भास्करालयम् १६
परिवाराष्टौ विन्यस्य अन्तर्हारे विशेषतः
अन्तर्मण्डलके कुर्यादैशे चण्डेश्वरालयम् १७
अथ वक्ष्ये विशेषेण षोडशं परिवारकम्
प्राकारस्य तु विस्तारं षोडशांशैर्विभाजयेत् १८
इन्द्रश्चैवाश्विनी चाग्निपितरश्च यमस्तथा
रोहिणी निर्ऋतिश्चैव अप्सरोगण एव च १९
वरुणश्च ऋषिर्वायू रुद्रः सोमस्तथैव च
क्षेत्रपालस्तथैशानश्चादित्या द्वादश स्मृताः २०
पूर्वादीनि क्रमान्न्यस्य शिवस्याभिमुखाः स्थिताः
अथ वक्ष्ये विशेषेण द्वात्रिंशत्परिवारकम् २१
प्राकारस्य तु विस्तारं द्व्यंशं कृत्वा विचक्षणः
एकभागवृतं बाह्ये त्यजेच्छेषान्तरं विदुः २२
उभयोरंशमाश्रित्य परिवारालयं भवेत्
तस्य विस्तारमानं तु चतुष्षष्टिपदं कुरु २३
इन्द्रो गुरुर्महाकालश्चाश्विनी पावकस्तथा
गौरी चागस्त्यपितरो यमो भार्गव एव च २४
गुहः कौशिकरक्षश्च विघ्नेश्वरसरस्वती
लक्ष्मी वरुणदुर्गे च ऋषयः काकवाहिनी २५
वायुश्च धनदश्चैव रुद्रः कालाग्निरेव च
सोमोऽष्टवसवश्चैव नागेन्द्राः पृथिवी तथा २६
ईशानः क्षेत्रपालश्च द्वादशादित्यशुक्रकाः
द्वात्रिंशत्परिवाराः स्युः सूत्रमध्ये गता इमे २७
मर्यादिभित्तिकं कुर्यादालयं लक्षणान्वितम्
मण्डपादग्रतः कुर्यान्नृत्तमण्डपमुत्तमम् २८

मर्यादिभित्तिबाह्ये तु बलिपीठं प्रकल्पयेत्
तस्मादन्यप्रकारेण पीठस्थानं वदाम्यहम्
प्रासादस्य तु विस्तारं यत्तद्दण्डमिहोच्यते १
प्रमेयदण्डमानेन बलिपीठं विशेषतः
मूलप्रासादमारभ्य रससूर्यतिथिक्रमात् २
बलिपीठं प्रकर्तव्यं तत्र स्थाने सलक्षणम्
अन्यथा वृषभस्थानं वक्ष्यते विधिनाधुना ३
पीठस्याभ्यन्तरे स्थाप्य पीठाद्दण्डद्वयोऽग्रतः
शेषाणि पूर्ववत्स्थाप्य पश्चिमद्वारके शृणु ४
कुमारस्थाने तु वृषभं वृषभस्थाने कुमारकम्
पीठं पश्चिमतः स्थाप्य पूर्वोक्तविधिना सह ५
पीठमाश्रित्य वृषभं यथापूर्वं तथा कुरु
क्रमयोगमिति प्रोक्तं पङ्क्तियोगमतः शृणु ६
मध्यहारां तु विभजेत्षण्णवत्यधिकं शतम्
पूर्वादिक्रमयोगेन सूत्रसन्धौ तु संस्थिताः ७
इन्द्रस्थानं तमश्विन्यौ जीवश्चैव भवस्तथा
दुर्गा मोटी तथाग्निश्च सूक्ष्मश्च पितरस्तथा ८
गौरी शर्वस्तथा ब्रह्मा मातरश्च यमस्तथा
शिवोत्तमश्च रोहिण्यां शुक्र ईशो हि गणाधिपाः ९
कौशिको निर्ऋतिश्चैव तथैकादशरुद्रकाः
कालाग्निः केशवः सोमः श्रीकण्ठः क्षेत्रपालकः १०
नागश्च भीमः पृथिवी सूर्यैशानशिखण्ड्यथ
द्वादशादित्यमरुतश्चोग्रश्चैव शनैश्चरः ११
अगस्त्यश्च इमे सर्वे षट्पञ्चाशत्प्रकीर्तिताः
ते यागपङ्क्तिक्रमाद्येव शिवस्याभिमुखे स्थिताः १२
इन्दाग्नेन वृषभं वृषभं विन्यसेद्बुधः १३
पीठगोपुरयोर्मध्ये त्रिशूलस्थानमुच्यते २९
गोपुरादग्रतः कुर्याद्बाह्यपीठं त्रिदण्डके
मर्यादिसालमाश्रित्य पावके हव्यकोष्ठकम् ३०

कुर्यान्निर्ऋृतिदिग्भागे स्रायुधालयमुत्तमम्
वायव्यां शयनस्थानमैशान्यां यागमराडपम् ३१
द्वाराग्नेययोर्मध्ये विन्यसेद्व्यञ्जनालयम्
यमद्वाराग्निमध्ये तु वाद्यस्थानमुदाहृतम् ३२
द्वारनैर्ऋृतयोर्मध्ये पुष्पमराडपमुत्तमम्
निर्ऋृतिद्वारयोर्मध्ये कारयेदञ्जनालयम् ३३
द्वारवायव्ययोर्मध्ये धर्मश्रवरामराडपम्
स्रनिलद्वारयोर्मध्ये पुस्तकाराधनालयम् ३४
द्वारेशानोभयोर्मध्ये कूपस्थानं विधीयते
ईशानद्वारयोर्मध्ये हस्तिस्थानमुदाहृतम् ३५
पूर्वोक्तदेशे कर्तव्यं बलिपीठं विशेषतः
गर्भगेहसमो वाथ गर्भगेहार्धमेव वा ३६
बलिपीठस्य विस्तारमुत्सेधं तावदेव तु
पीठोत्सेधं तु विभजेदष्टाविंशतिभागिकम् ३७
पादुकाश्विनीभागं स्याद्द्व्यंशं जगती भवेत्
भूतभागं तथा वप्रं चन्द्रांशेन तु पट्टिका ३८
वेदभागं भवेत्कराठमूर्ध्वपट्टी च पूर्ववत्
रुद्रांशं तु महापट्टी चैकांशं चोर्ध्वपट्टिका ३९
पद्माग्रं तु तथैवं स्यान्नवांशं दलमुच्यते
ऊर्ध्वपद्मं तथैवं स्यादेवमेवं विधीयते ४०
वृत्तं वा चतुरश्रं वा स्रष्टाश्रं वाऽथ कारयेत्
गलपादसमायुक्तं नानालङ्कारशोभितम् ४१
दिशाभद्रं च कर्तव्यं सर्वलक्षरासंयुतम्
प्रासादार्धसमो वापि गर्भगेहसमोऽपि वा ४२
परिवारालयविस्तारं विस्तारद्विगुराोन्नतम्
उक्षालयं चतुर्द्वारं मराडपाकृतिरेव च ४३
विजयं द्वारदुर्गायां मातृराां कोष्ठकं भवेत्
विघ्नेशस्य गजपृष्ठं स्कन्दस्य कुक्कुटालयम् ४४
ज्येष्ठायां नागरं सौधं विष्णोर्विष्णुगृहं भवेत्

भानोश्च वेसरं प्रोक्तं चण्डस्य श्रीकरं भवेत् ४५
सर्वेषां मण्डपाकारं परिवारं तु षोडश
द्वात्रिंशत्परिवाराणां नागरादिविमानकम् ४६
चतुरङ्घ्रिसमायुक्तं सभा शूलालयस्य तु
परिवारप्रतिमोच्चं वक्ष्यते विधिनाधुना ४७
द्वारोत्सेधं नवांशं स्यात्तद्भागेष्वेकहीनकम्
शेषभागं त्रिधा कृत्वा द्विभागं प्रतिमोच्छ्रयम् ४८
पूजांशस्य समो वापि अध्यर्धद्विगुणं तु वा
परिवारप्रतिमोच्चं सर्वेषां हि विधीयते ४९
अन्यमानं न कर्तव्यं कर्तव्यं लक्षणैः सह ५०
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे परिवारलक्षणं नाम एकादशः पटलः

## द्वादशः पटलः
## प्राकारलक्षणविधिः

अतः परं प्रवक्ष्यामि प्राकाराणां तु लक्षणम्
प्रासादस्य तु रक्षार्थं शोभार्थं च प्रकल्पयेत् १
प्रथमं चान्तर्मण्दल्पं द्वितीयं चान्तर्हारकम्
तृतीयं मध्यहारं च चतुर्थं मर्यादिभित्तिकम् २
महामर्यादिभित्तिञ्च पञ्चमं परिकल्पयेत्
प्रासादस्य तु विस्तारं चतुरंशैर्विभाजयेत् ३
पादैर्द्विरष्टभिर्युक्तमन्तर्मण्डलकं भवेत्
चण्डितं स्यान्महापीठमन्तर्हारं ततः परम् ४
षट्त्रिंशत्पादमत्रोक्तमुग्रपीठमिति स्मृतम्
तदेवमन्तर्हारा च मध्यहारा विधीयते ५
शतपादेन संयुक्तं ज्ञेयमासनचण्डितम्
मर्यादिभित्तिका ज्ञेया चतुर्विंशच्छतत्रयम् ६
कर्णाष्टकमिदं प्रोक्तं चतुर्विंशत्सहस्रकैः
इन्द्रकान्तमिति ज्ञेयं महामर्यादिभित्तिकम् ७
पादाधिकमथाध्यर्धं पादोनं द्विगुणायतम्

द्विगुणं द्विगुणार्धं च त्रिगुणं वा चतुर्गुणम् ८
मुखायाममिदं प्रोक्तं प्राकाराणां विशेषतः
यद्वस्तु प्राङ्मुखं प्रत्यक्तत्पुरुषायतं भवेत् ९
द्वारशोभान्तर्मण्डल्यं विस्तारं तु त्रिहस्तकम्
पञ्चसप्तकरं वापि त्रिविधं चोच्यतेऽधुना १०
द्वारशालान्तर्हारायां पञ्चहस्तप्रमाणकम्
सप्तहस्तप्रमाणं वा नवहस्तमथापि वा ११
प्रासादमध्यहारायां द्वारप्रासादमिष्यते
विस्तरं सप्तहस्तं वा नवहस्तमथापि वा १२
एकादशकरं वापि त्रिविधं तत्प्रकीर्तितम्
मर्यादिभित्तिके कुर्याद्द्वारहर्म्यं विशेषतः १३
विस्तारं नवहस्तं स्याद्धस्तैकादश एव च
हस्तत्रयोदशं वापि द्वारहर्म्यस्य विस्तृतम् १४
महामर्यादिभित्तौ तु महागोपुरमिष्यते
द्वारगोपुरविस्तारमेकादशकरं भवेत् १५
हस्तत्रयोदशं वापि पञ्चदशकरं तु वा
पादाधिकमथाध्यर्धं पादोनद्विगुणायतम् १६
गोपुराणां समुत्सेधं प्रवक्ष्याम्यनुपूर्वशः
मूलवास्तौ शिखान्तं वा स्थूप्यन्तं वा विशेषतः १७
अथवान्यप्रकारेण वक्ष्यते गोपुरोच्छ्रयम्
विस्ताराध्यर्धमुत्सेधं पादोनद्विगुणं तु वा १८
द्विगुणं वापि कर्तव्यं गोपुरोत्सेधमुत्तमम्
द्वारशोभादि कर्तव्यं गोपुरान्तं विशेषतः १९
गोपुराणां मुखं चैव मूलप्रासादवद्भवेत्
तस्माद्द्वारस्य दाक्षिण्ये चाभ्यन्तरितभित्तिके २०
गर्भन्यासं प्रकर्तव्यं पूर्वोक्तविधिना सह
अष्टधा विभजेद्भित्तिं बाह्यतश्चतुरस्त्यजेत् २१
त्रीणि चाभ्यन्तरे त्यज्य मध्यैकांशे विनिक्षिपेत्
इन्द्रस्याग्नेयमध्ये तु प्राकारे गर्भमिष्यते २२

पूर्ववद्भित्तिभागं स्यान्मध्ये गर्भं विनिक्षिपेत्
त्रिप्राकारे तथा पञ्चप्राकारेऽप्येवमेव हि २३
अन्तर्मण्डलकं त्यक्त्वा मर्यादींश्च तथैव च
शेषैः प्राकारकैर्युक्तं त्रिप्राकारमिति स्मृतम् २४
पञ्चसालेन संयुक्तं पञ्चप्राकारमुच्यते
परिवारं भित्तिसंबद्धमन्तराले तु कारयेत् २५
परिवारालयविस्तारं मूलगर्भप्रमाणतः
विस्तारद्विगुणोत्सेधं परिवारालयं भवेत् २६
प्राकाराणां समुत्सेधं वक्ष्यते विधिनाधुना
अन्तर्मण्डलकोत्सेधं कलशान्तप्रमाणकम् २७
अन्तर्हारसमुत्सेधं फलकान्तं विशेषतः
मध्यहारसमुत्सेधं पोतिकान्तमिति स्मृतम् २८
मर्यादिभित्तेरुत्सेधमुत्तरान्तं प्रकीर्तितम्
महामर्यादिरुत्सेधं कपोतान्तमिति स्मृतम् २९
ऋजुभित्तिशिराकारं छत्रं शीर्षकमेव च
अथवा खण्डहर्म्यं स्यात्कूटशालायुतं भवेत् ३०
प्रासादकूटशालान्तं प्राकारं कूटकोष्ठकम्
अन्तर्हारायुतं वापि मध्यहारायुतं भवेत् ३१
आभूतमालिकायास्स्यात्सभायाकृतिरेव च
मण्डपाकृतिकं वापि त्रिविधा वाकृतिर्भवेत् ३२
एकभूमिर्द्विभूमिर्वा चतुर्भूपञ्चभूमिकम्
भित्तेरुपरि भित्तिः स्यात्पादस्योपरि पादकम् ३३
तलं प्रति प्रस्तरं कुर्यान्नासिकाभिरन्वितम्
भक्त्यायामश्च पादश्च पादायामं च कीर्तितम् ३४
मूलपादस्य पादान्तमुपानाद्युत्तरं पुनः
सप्तभागैः समं कृत्वा द्व्यंशं कुट्टिमोच्छ्रयम् ३५
पञ्चांशं पाददैर्घ्यं स्यात्पादं सर्वाङ्गसंयुतम्
अथवा पादमानं तु नवभागैर्विभाजयेत् ३६
द्विभागं कुट्टिमोच्चं स्यात्सप्तांशं पाददैर्घ्यकम्

होमादुत्तरसीमान्तं एकविंशतिभागिकम् ३७
त्रिभागं कुट्टिमोच्चं स्याच्छेषांशं पाददैर्घ्यकम्
एवं मानं तु पादानां त्रिधा प्रोक्तं विशेषतः ३८
पादविष्कम्भमानं तु वक्ष्यते क्रमशोऽधुना
यस्य पादस्य चोत्सेधं षट्सप्ताष्टांशभाजितम् ३९
तत्तद्भागैकमेवं स्यात्पादविष्कम्भमिष्यते
तत्पादेनार्धहीनं वा त्रिभागद्वयमेव वा ४०
भित्तिपादस्य विस्तारं सर्वमेवं प्रशस्यते
स्तम्भकर्मणि वक्ष्येऽहं वृत्तं वा षोडशाश्रकम् ४१
अष्टाश्रं शुण्डुपादं वा मूलाश्रं पिण्डकादिकम्
चतुरश्रं चित्रखण्डं मध्येऽष्टाश्रमथापि वा ४२
कुम्भमण्डयुतं वापि कुम्भयुक्तमथापि वा
पोतिकासहितं वापि नानालङ्कारशोभितम् ४३
अधुना संप्रवक्ष्यामि आवृतं हर्म्यविस्तरम्
त्रिहस्तं वा चतुर्हस्तं पञ्चहस्तमथापि वा ४४
त्रिविधं स्यात्प्रमाणं तु भक्तिं चाध्यर्धहस्तकम्
अधिष्ठानं पादबन्धं वप्रबन्धमथापि वा ४५
कम्पबन्धमिति ख्यातं तस्यालङ्कारमुच्यते
अधिष्ठानोत्सेधमानं षोडशांशेन भाजयेत् ४६
द्विभागेनैव जन्म स्याद्भूतांशं जगती भवेत्
तुर्यांशे वृत्तवप्रं स्यादर्धांशाधारपट्टिका ४७
द्वयांशं कण्ठमानं स्यादर्धांशेनोर्ध्वपट्टिका
द्व्यंशेन तु महापट्टी पादबन्धमिदं परम् ४८
वप्रबन्धमहं वक्ष्ये भजेदेकादशेन तु
अंशेन पादुकं कुर्याच्चतुरं पद्मतुण्डकम् ४९
पद्मांशेन तु तस्योर्ध्वे वप्रबन्धमिदं परम्
तस्योत्सेधं तु विभजेदेकविंशतिभागिकम् ५०
उपानमेकभागेन त्र्यंशैः पद्मदलं भवेत्
तस्योर्ध्वे कम्पमेकेन दशांशे जगती भवेत् ५१

चतुरंशेन वप्रं स्यात्तस्योर्ध्वे कम्पमेव च
मूलपादस्य विस्तारमष्टधा दशधा पुनः  ५२
एकभागविहीनं स्यादग्रपादस्य विस्तृतम्
अग्रपादस्य विस्तारमनुकायप्रमाणतः  ५३
पादविष्कम्भविस्तारं तत्समं नीव्रमुच्यते
उत्तमं चोत्तरं विद्यात्पादोनं मध्यमं भवेत्  ५४
अधमस्यार्धमुत्सेधं विस्तारं पादसंमितम्
स्तम्भतारत्रिभागैकं चतुर्भागैकमेव च  ५५
उत्तराणां तदूर्ध्वे तु पद्मपट्टिर्भवेत्क्रमात्
तदेव चतुरश्रं स्यादुत्तरोपरि वाजनम्  ५६
स्तम्भविष्कम्भमुत्सेधं तत्त्रिभागेन बाहुलम्
चतुर्भागेन एवं स्याद्धारतूला विधीयते  ५७
वाजनोपरि कर्तव्यं तुलाद्वारगतं भवेत्
स्तम्भतारार्धभागं वा त्रिभागं द्वयमेव वा  ५८
विस्तरोत्सेधमानं वा समं वा चतुरश्रकम्
तूलानामुपरीकुर्याञ्जयन्तिवंशानुगं तथा  ५९
पादविष्कम्भविस्तारं चतुर्भागैकबाहुलम्
जयन्त्युपरि मार्गं स्यात्प्रस्तरं दण्डसंमितम्  ६०
कपोतोच्चं त्रिदण्डं स्याद्द्विदण्डार्धं द्विदण्डकम्
तत्समं नीव्रं तत्तत्तु त्रिधा कपोतमुच्यते  ६१
द्विदण्डं प्रस्तरोत्सेधं पञ्चभागैर्विधीयते
अंशेनालिङ्गमेवं स्यादंशेनान्तरितं भवेत्  ६२
द्व्यंशेन प्रतिमुखं कुर्यादंशेनोपरि वाजनम्
एवमादौ तले विद्यादूर्ध्वभूमिः प्रवक्ष्यते  ६३
अधः स्तम्भदशांशेन अष्टांशेनाथवा पुनः
ऊर्ध्वपादस्य चायामं प्रस्तरं पूर्ववद्भवेत्  ६४
प्रस्तरोपरि कर्तव्यमिष्टकाच्छादनं शुभम्
तस्योर्ध्वे तु प्रकर्तव्यं छादयेत्कलकान्वितम्  ६५
प्रस्तरोर्ध्वे प्रकर्तव्यं भित्तिस्थानं विशेषतः

अध्यर्धं चैकहस्तं वा प्रस्तरोपरि भित्तिकम् ६६
तस्यैव वामनाहारश्छत्त्रशीर्षाकृतिर्भवेत्
अथवा सभाकृतिर्वापि मण्डपाकृतिरेव च ६७
भित्तेरुपरि भित्तिः स्यात्पादस्योपरि पादकम्
तस्योत्सेधं द्विहस्तं स्यादूर्ध्वसोपानसंयुतम् ६८
लोहलोष्टैश्च मृल्लोष्टैः सारदारुमयेन वा
सोपानाच्छादनं कुर्यात्सभायाकृतिरुच्यते ६९
कुब्जे हारविहीनं स्यान्मण्डपाकृतिकीर्तितम्
उत्तरोपरि वृत्यन्तं नानालङ्कारशोभितम् ७०
सिंहव्यालमृगैर्भूतैर्हंसनाटकमण्डितम्
सुधया नानाचित्रेण कल्पयेच्छिल्पिभिस्तथा ७१
एकतलं समारभ्य पञ्चतलं विधीयते
अल्पप्रासादरूपं स्यादेकद्वित्रितलं भवेत् ७२
महद्भिः पञ्चभूमिः स्याच्चतुर्भूमिर्विशेषतः
सर्वलक्षणसंयुक्तं सर्वसंपत्सुखावहम् ७३
हीनं वाप्यधिकं वाथ सर्वदोषावहं भवेत् ७४

इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे प्राकारविधिपटलो द्वादशः

## त्रयोदशः पटलः

### लिङ्गलक्षणम्

अथातः संप्रवक्ष्यामि शिवलिङ्गस्य लक्षणम्
स्थावरं जङ्गमं चैव द्विविधं लिङ्गमुच्यते १
शिलामयं तु यद्रूपं ब्रह्मविष्णुहरैर्युतम्
त्रिसूत्रमुकुलैर्युक्तं स्थावरं लिङ्गमुच्यते २
सौवर्णैराजतैर्वापि स्फटिकैस्ताम्रकैरपि
कुर्वीत मणिरत्नाद्यैर्जङ्गमं लिङ्गमुच्यते ३
जङ्गमात्स्थावरं श्रेष्ठं तस्मात्स्थावरमुच्यते
सुमुहूर्ते सुलग्ने च नक्षत्रे शैलमाहरेत् ४
अयनं दक्षिणं नेष्टमिष्टदं चोत्तरायणम्

मेषे वृषे च मिथुने मकरे कुम्भमीनयोः ५
एतेषु राशिषु ग्राह्या शिला सम्यग्विचक्षणैः
अन्येषु यदि मासेषु शिलारम्भं न कारयेत् ६
कारयेत्कर्तृनाशं स्यात्स्थाननाशं धनक्षयम्
पूर्वोक्तमासे नक्षत्रे चित्रायां स्वातिहस्तके ७
त्रिरुत्तरेषु रेवत्यां श्रवणे शक्रभे मघे
मृगशीर्षे च नक्षत्रे कुर्याच्छुभकरं विदुः ८
एवं नक्षत्रयोगेषु शिलारम्भं विधीयते
उक्तमासेषु नक्षत्रे सुदिने कारयेद्बुधः ९
स्थपतिः स्थापकस्तत्र शिलाग्रहणमारभेत्
मन्त्रागमज्ञः शास्त्रज्ञः खे निमित्तोपलक्षकः १०
महीनिमित्तविद्धीमान्स्थापको योग्य उच्यते
स्थपतिः कर्मशास्त्रज्ञः शिलाशुभाशुभोदितः ११
भूपरीक्षायां च यो विद्वान्स्थपतिः कर्मयोग्यकः
तस्मादाचार्यः च शिल्पी संहितौ कार्यमारभेत् १२
तावेवं सहितौ कर्म सर्वसंपत्करं नृणाम्
श्वेतं रक्तं च पीतं च कृष्णं चेति चतुर्विधम् १३
सर्ववर्णेषु संयोज्यं तस्य लक्षणमुच्यते
शङ्खगोक्षीरकुन्देन्दुस्फटिका मौक्तिकराजता १४
मल्लिकापुष्पसंकाशा शिला श्वेता इतीरिता
किंशुका जपपुष्पाभा जातिलिङ्गेन्द्रकोपमा १५
शशासृक्पीतबन्धूकपुष्पा रक्ता शिला स्मृता
सुवर्णशैलसदृशा चम्पकापुष्पसन्निभा १६
अतसीपुष्पसंकाशा हरिद्राचूर्णसन्निभा
शिला पीता समाख्याता कूष्माण्डकुसुमोपमा १७
अञ्जना महिषाक्षाभा मुद्गाङ्गारकसन्निभा
भृङ्गा मायूरकण्ठाभा माषगुग्गुलुसन्निभा १८
राजावर्तनिभाश्चैते कृष्णा शैला विदुर्बुधाः
श्वेतवर्णा तु या शैला द्विजानां तु प्रशस्यते १९

रक्तवर्णा नृपस्योक्ता पीता तु वणिजां भवेत्
कृष्णशैला तु शूद्रस्य वक्ष्यते जातिभेदतः २०
कृष्णवर्णनिभा या तु सामान्य इति कीर्तिता
अन्यवर्णशिलायां तु जातिभेदेन कल्पयेत् २१
पर्वते सागरे तीर्थे क्षेत्रे चैव वनान्तरे
क्षीरवृक्षावृता शैला उत्तमेति विदुर्बुधाः २२
अन्यस्थाने न गृह्णीयाच्छिलां वै शास्त्रपारगः
पूर्वोक्तमासे नक्षत्रे मुहूर्ते शैलमाहरेत् २३
यस्मिन्देशे शिलास्तीति आचार्यः शिलिभिः सह
गच्छेदनन्यमनसा प्राङ्मुखोदङ्मुखक्रमात् २४
शुभाशुभनिमित्तानि तस्मिन्काले तु लक्षयेत् २४
विप्रस्य कन्या गजच्छत्रमांसं सुपूर्णकुम्भं च फलं प्रदीपम्
सितं च पुष्पं दधिगोवृषं च ध्वजं च भेर्यामुखः शुभाश्च २५
रिक्तं च कुम्भं शयनीयपुष्पम् अमङ्गली चावरप्रेतरूपम्
सर्वशत्रुपतिता क्षयपीडा यात्रादृश्यमशुभं च तदाहुः २६
आचार्यः शिल्पिभिश्चैव वस्त्राभरणशोभितः २७
यस्मिन्देशे शिलाश्चैताः प्राङ्मुखः स्थपतिः स्थितः
ततः प्रदक्षिणं कृत्वा दोषादोषं परीक्षयेत् २८
वातातपाग्निदग्धाश्च जलक्लिन्नाः क्षराम्बुकाः
दुःस्थानस्थास्तटस्थाश्च कर्मान्तरनियोजिताः २९
वक्राश्च शर्कराभाश्च रूक्षाचश्चरी दरी
रेखाबिन्दुकलङ्काश्च वर्जयेत्तु विशेषतः ३०
सूत्रपातवदाकारा रविरश्मिसमाकृतिः
वर्षपातवदाकारा रेखा तु त्रिविधा स्मृता ३१
खर्जूरपत्रसदृशा दूर्वास्तम्बकसन्निभा
वेणवङ्कुरवदाकारा लूतपादवदाकृतिः ३२
इक्षोरग्रसमाकारा गिरिका पञ्चधा स्मृता
कलङ्कं कृष्णलोहाभं कृष्णमृगसमाकृतिः ३३
शिखिपिञ्छसमाकारं कलङ्कं त्रिविधं भवेत्

त्रासोऽपि स्फटिकाश्माङ्गं शुक्त्यभ्यन्तरसंनिभम्  ३४
त्रासोपि द्विविधं ज्ञेयं चतुर्धा बिन्दुरुच्यते
जम्बूफलसमाकारं स्तनचूचुकसंनिभम्  ३५
चूडामणिवदाकारो बालवत्सस्य शृङ्गवत्
बिन्दुरेवं समाख्यातं विमलं त्रिविधं भवेत्  ३६
विमलं हेमसदृशं कांस्यलोहस्य संनिभम्
बदरीरूपसंयुक्तं सर्वदोषकराय वै  ३७
कृष्णशैले सिता रेखा सा प्रशस्तेति कीर्तिता
कृष्णे कृष्णं न विद्येते श्वेते कृष्णा सुगर्हिता  ३८
गैरिकाकृष्णशैले तु सितवर्णेन दर्शिता
खर्जूरपत्रसदृशा दूर्वास्तम्बाकृतिः शुभा  ३९
अन्याकृतिं न गृह्णीयाद्धान्यगोनाशकृद्भवेत्
कलङ्कं रोगदं ज्ञेयं त्रासं राष्ट्रविनाशनम्  ४०
बिन्दुना पुत्रनाशं स्याद्विमला सर्वदुःखदा
बदरी नाशयेद्धान्यं हन्ति तन्मण्डलाधिपम्  ४१
एवं परीक्ष्य बहुधा कर्तव्यं लक्षणैः सह
एकवर्णशिला ग्राह्या बहुवर्णा न गृह्यते  ४२
गृह्यते बहुवर्णा तु सर्वदोषाणि कारयेत्
स्त्रीपुंनपुंसका शैला बालवृद्धा तु मध्यमा  ४३
स्वरभेदाकृतीभेदैर्लक्षयेत्तु विचक्षणः
घण्टाशब्दा तु पुल्लिङ्गा स्वरहीनं नपुंसकम्  ४४
तालशब्दं तु यच्छैलं तच्छैलं युवती भवेत्
दीर्घशब्दा तु या वृद्धा ह्रस्वा बाला इति स्मृता  ४५
एवं स्वरं सुसंलक्ष्य प्रहरेच्छिल्पविद्यथा
चतुरश्रमथाष्टाश्रं स्त्रीशैलमिति कथ्यते  ४६
वृत्तायतं तु यच्छैलं स पुमानिति निश्चयः
वृत्तरूपं तु यच्छैलं तच्छैलं तु नपुंसकम्  ४७
दशद्वादशकोणं तु बालवृद्धं तु वर्जयेत्
पुंलिङ्गं लिङ्गमित्याहुः स्त्रीलिङ्गं पीठिका मता  ४८

पादाधार शिलाया तु नपुंसकमिति स्मृतम्
पुंलिङ्गे तु यथा पिराडी राजराष्ट्रभयावहा ४९
स्त्रीलिङ्गे निर्मितं लिङ्गं सर्वप्राणिभयंकरम्
लिङ्गं वा पीठिकां वापि नपुंसके न कारयेत् ५०
दुर्भिक्षं तु भवेत्तत्र यजमानो विनश्यति
तस्मात्पूर्वोक्तवज्ज्ञात्वा कुर्याल्लिङ्गं विशेषतः ५१
सर्वलक्षणसंयुक्तं राजराष्ट्रविवर्धनम्
पूर्वपश्चिममायान्तं तथैव दक्षिणोत्तरम् ५२
पूर्वमग्रं परं मूलं दक्षिणे मूलमुत्तरम्
शिरोभागमुखं वक्ष्ये अधोभागं विधीयते ५३
दृश्यभागे तु पृष्ठं स्यात्कारयेन्मतिमान्नरः
प्रासादस्य वशाल्लिङ्गं लिङ्गमानेन हर्म्यकम् ५४
गर्भगेहान्तरे सूत्रे लिङ्गं स्थाप्य तु वामके
यद्द्वारविस्तृतं कुर्यादेकविंशतिभागिकम् ५५
मध्यभागं त्रिधा भज्य द्विभागं दक्षिणे त्यजेत्
तत्र च ब्रह्मसूत्रं स्यात्तन्मध्ये स्थाप्य दैवतम् ५६
वामदक्षिणमित्याहुर्ब्रह्मसूत्रोत्तरे गते
यावल्लिङ्गस्य नाहं स्यात्पञ्चविंशतिभागिकम् ५७
चतुर्विंशतिभागं वा पञ्चदश विभागतः
सर्वलक्षणमेवोक्तं ब्रह्मसूत्रोत्तरे गतम् ५८
तन्मध्ये तु शिवं स्थाप्य स्थाप्यमन्यं न कारयेत्
कारयेत्कर्तृनाशः स्यात्स्थाननाशं धनक्षयम् ५९
मध्यमे स्थापितं लिङ्गं सर्वदोषाणि कारयेत्
यस्य गर्भगृहस्यार्धं लिङ्गोत्सेधं तु कन्यसम् ६०
नवभागस्य पञ्चांशं मध्यमं लिङ्गमुच्यते
पञ्चभागविभक्ते तु त्रिभागो ज्येष्ठ उच्यते ६१
एवं स्याद्गर्भमानं तु एवं लिङ्गं प्रकल्पयेत्
ज्येष्ठकन्यसयोर्मध्ये चाष्टभागेन भाजयेत् ६२
एवं कृते विशेषेण नव लिङ्गानि जायते

उत्तमस्योत्तमान्नास्ति अधमाधममेव च  ६३
गर्भमानमिति प्रोक्तं हस्तमानं विधीयते
एकहस्तं द्विहस्तं च त्रिहस्तं चाधमं भवेत्  ६४
चतुर्हस्तं पञ्चहस्तं षड्ढस्तं चैव मध्यमम्
सप्तमं चाष्टहस्तं च नवहस्तोत्तमं भवेत्  ६५
गर्भमानेन वा कुर्याद्धस्तमानेन वा पुनः
यजमानेच्छया लिङ्गं कारयेत्तु विशेषतः  ६६
एकहस्तप्रमाणं तु हीनलिङ्गं न कारयेत्
कारयेज्जङ्गमं लिङ्गं स्फटिकामयमेव च  ६७
गृध्रकाद्धादिदोषेण स्थानभङ्गो भवेत्तथा
एवं लिङ्गोच्छ्रयं चोक्तं वक्ष्यते लिङ्गविस्तरम्  ६८
आयामं यस्य लिङ्गस्य तत्समं नाहमुच्यते
उत्तमोत्तमलिङ्गस्य विष्कम्भं तु विधीयते  ६९
तद्विष्कम्भं तु मानं तु कृत्वैकं वसुभागिकम्
एकैकलिङ्गविष्कम्भं नवलिङ्गस्य चोच्यते  ७०
तद्विष्कम्भं तु मानेन त्रिगुणं तत्र पञ्चकम्
कृत्वा भागैकमाधिक्यं सर्वेषां नाहमुच्यते  ७१
समखण्डं वर्धमानं शैवाधिक्यं त्रिराशिकम्
चतुर्विधं लिङ्गमित्याहुः चातुर्वर्णेषु योजयेत्  ७२
द्विजानां समखण्डं स्याद्वर्धमानं नृपस्य तु
वैश्यानां तु शिवाधिक्यं शूद्राणां तु त्रिराशिकम्  ७३
शिवाधिक्यं वर्धमानं सामान्येन विधीयते
लिङ्गायामं त्रिधा कृत्वा अधोभागे पितामहः  ७४
वैष्णवं मध्यमांशं तु शैवभागं तदूर्ध्वकम्
चतुरश्रं भवेद्ब्राह्ममष्टाश्रं वैष्णवं तथा  ७५
शैवभागं तु वृत्तं स्यादेवं संकल्पयेत्त्रिधा
ब्राह्मं वैष्णवमैशानं त्रिभागं सममेव तु  ७६
आयामं तस्य नाहं स्यात्समखण्डेति विद्यते
उत्तमत्रयलिङ्गं तु समखण्डं विधीयते  ७७

मध्यमत्रयलिङ्गं तु वर्धमानमिति स्मृतम्
यस्य लिङ्गस्य चोत्सेधं चतुर्विंशतिभागिकम् ७८
सप्तभागं भवेद्ब्राह्ममष्टभागं तु वैष्णवम्
शैवं शेषं समाख्यातं लिङ्गं स्याद्वर्धमानकम् ७९
कन्यसत्रयलिङ्गं तु शिवाधिक्यमिति स्मृतम्
उत्सेधं दशभागं स्यात्त्रिभागं ब्राह्ममुच्यते ८०
मध्यमे त्रीणि विष्णवंशं चतुरंशं शिवं भवेत्
आयामं नवभागं तु वृत्तं षड्भागमुच्यते ८१
सप्तभागमथाष्टाश्रं चतुरश्रेऽष्टभागिकम्
एवं नाहं त्रिभेदं स्यादेतत्त्रैराशिकं भवेत् ८२
चतुरश्रं ब्रह्मभागमष्टाश्रं वैष्णवांशकम्
शैवं वै षोडशाश्रं तु पश्चाद्वृत्तमतः परम् ८३
छेदयेद्बिम्बभागे तु तच्छेद्यं तत्त्रयात्मकम्
लिङ्गं विष्कम्भमानेन समं वै चतुरश्रकम् ८४
तत्कर्णार्धं परिग्राह्यं कोणाभ्यां लाञ्छयेत्तथा
अष्टाश्रं तु ततः सिद्धिः षोडशाश्रमतः परम् ८५
अष्टाश्रमेकभागार्धं कोणाभ्यां लाञ्छयेत्तथा
षोडशाश्रं भवेत्सिद्धिः छेदेन वृत्तकं पुनः ८६
नपुंसकं ब्रह्मभागं मध्यमं स्त्रीति विद्यते
ऊर्ध्वे पुमानिति ख्यातमेवं संकल्पयेत्पुनः ८७
नन्द्यावर्तशिला योज्या चूर्णेनैव नपुंसकैः
मध्यमं युवतिर्ज्ञेयमष्टबन्धेन बन्धयेत् ८८
ऊर्ध्वभागं च पूजांशं शिवनामेति कीर्तितम्
विस्तारं नाहमुत्सेधं लक्षणोक्तं प्रकारयेत् ८९
मानहीने महाव्याधिरधिके शत्रुवर्धनम्
नाहहीने तु दारिद्र्यं शिरोहीने महद्भयम् ९०
मूलहीने विनाशं स्यात्सूत्रहीने कुलक्षयम्
उत्सेधमानहीने तु सर्वप्राणिभयंकरम् ९१
सर्वलक्षणसंयुक्तं कारयेत्तु विचक्षणः

शिरसो वर्तनं कुर्यात्तच्चतुर्विधमुच्यते ९२
छत्राकारादिचत्वारि शिरसो वर्तनं क्रमात्
छत्राकारं तु विप्राणां प्रथमं लक्षणं भवेत् ९३
कुक्कुटाण्डं भवेद्राज्ञां द्वितीयं लक्षणं परम्
अर्धचन्द्रं तु वैश्यानां तृतीयं लक्षणं परम् ९४
चतुर्थं लक्षणं प्रोक्तं शूद्राणां त्रपुषाकृतिः
कृत्वा लिङ्गं शिरस्तारं षड्भागेन समं तथा ९५
सार्धेन तु द्विभागेन वर्तितं त्रपुषाकृतिः
लिङ्गभागं त्रिधा कृत्वा द्विभागेन तु वर्तितम् ९६
अर्धचन्द्रमिदं प्रोक्तं सर्वकामफलप्रदम्
लिङ्गाद्धाराष्टधा भज्य भागार्धेन तु वर्तितम् ९७
छत्रं तु शीर्षमित्युक्तं सर्ववर्णेषु योग्यकम्
कुक्कुटाण्डं भवेत्तत्र विस्तारार्धेन वर्तितम् ९८
एवं लक्षणसंयुक्तं कारयेन्मतिमान्नरः
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे लिङ्गलक्षणपटलः त्रयोदशः

## चतुर्दशः पटलः
## लिङ्गपीठलक्षणम्

अथातः संप्रवक्ष्यामि लिङ्गपीठस्य लक्षणम्
स्त्रीजनानां सुखार्थाय सर्वशान्तिकरं परम् १
लिङ्गविष्कम्भमानेन कर्णमानेन वा पुनः
लिङ्गस्योत्सेधमानेन गर्भमानेन कारयेत् २
स्त्रीशिलां च गृहीत्वाथ कुर्यात्पीठं विचक्षणः
लिङ्गविष्कम्भमानेन त्रिगुणं पीठविस्तरम् ३
कर्णाद्द्विगुणमेवं स्यात्पीठविस्तारमुच्यते
यस्य लिङ्गस्य यद्दैर्घ्यं तत्समं पीठविस्तरम् ४
अथवा पीठविस्तारं पूजांशस्य द्वयं भवेत्
गर्भगेहं त्रिधा भज्य भागैकं पीठविस्तरम् ५
पीठतारं त्रिधा भज्य भागैकं लिङ्गविस्तरम्

लिङ्गमानेन हर्म्यं स्याल्लिङ्गमानेन पीठिका ६
प्रासादाल्लिङ्गमानं स्यात्प्रासादात्पीठमानकम्
आर्षे च पौरुषे चैव पीठमेवं विधीयते ७
आर्षकाणां तु यल्लिङ्गम् इष्टकाचूर्णबन्धनम्
पश्चात्पिण्डिका कर्तव्या शैलेनैव विशेषतः ८
ऐष्टकायां शिलां कुर्याच्छैलं शैले समारभेत्
पूर्वाकृतिर्यथा संस्थं तथा कुर्याद्विचक्षणः ९
अन्यरूपं न कर्तव्यं कुर्याच्चेत्कर्तृनाशनम् १०
स्त्रीलिङ्गैः कृत्य लिङ्गं चेद् धनकुलभृत्यादिनाशं प्रयान्ति
पुंलिङ्गैः पिण्डिका चेद्युवतिसुतसुहृन्नाशम् आयान्त्यजस्त्रम् ११
लिङ्गे वा पीठिकायां यदि भवति शिलाभिश्च नापुंसकैश्च
कर्तृणां भर्तृनाशं भवति बहुविधस्थाननाशं करोति १२
यस्य तु पुंशिलाया तु तल्लिङ्गस्य तु पीठशिला युवतिश्च
यस्य तु पादशिला च नपुंसकस्तस्य तु समपादमाशु करोति १३
सम्यक्पीठाकृतिं तारमुत्सेधं वक्ष्यतेऽधुना
चतुरश्रमायताश्रं वृत्तायतं च वर्तुलम्
पट्टिका प्रतिबन्धं च पद्मका प्रतिभेदतः १४
प्रथमं पद्मपीठं स्याद्द्वितीयं भद्रपीठकम्
तृतीयं श्रीकरं नाम निश्वासं च चतुर्थकम् १५
पञ्चमं विजयं विद्यात्षष्ठं स्वायंभुवं स्मृतम्
सम्पदं सप्तमं विद्यादष्टमं स्वस्तिकं भवेत् १६
नवमं पूर्णचन्द्रं स्यात्स्थण्डिलं दशमं भवेत्
वज्रमेकादशं प्रोक्तं द्वादशं रुद्रनामकम् १७
अमलं त्रयोदशं नाम पीठाश्चैते त्रयोदश
यस्य पीठस्य चोत्सेधं विभजेत्षोडशांशकैः १८
द्व्यंशेन पट्टिकां कुर्यात्पञ्चांशैः पद्मतुण्डकम्
अंशद्वयेन वृत्तं स्यादूर्ध्वपद्मं चतुर्थकम् १९
तस्योर्ध्वे पट्टिका द्व्यंशमंशेन घृतवारिणी
पीठभागत्रिभागैकं नालनिर्गममुच्यते २०

तत्समं मूलविस्तारं तत्त्रिभागैकमग्रतः
जलमार्गं चोत्तरे कुर्यात्सोमांशे तु विशेषतः २१
तले निमग्नं वेदाश्रं तलस्योपरि वैष्णवम्
तदंशं पीथिकाबन्धं तस्योर्ध्वे तु शिवं स्मृतम् २२
ब्रह्मविष्णवंशमानं तु विभजेदष्टधा पुनः
त्रीणि भागमधस्त्यक्त्वा पञ्चांशं पीठिकोच्छ्रयम् २३
एवं तु पद्मपीठं स्याद्भद्रपीठमथोच्यते
पूर्ववत्षोडशांशं तु कृत्वोत्सेधं विधानतः २४
एकांशं पादुकां विद्यात्तुर्यांशं जगती भवेत्
कुमुदं स्यात्त्रिभागेन भागेनैकेन पट्टिका २५
कण्ठं कुर्यात्त्रिभागेन भागैकं चोर्ध्वपट्टिका
महापट्टी द्व्यंशेन अंशेन घृतवारिणी २६
एवं स्याद्भद्रपीठं तु सर्वलिङ्गेषु योग्यकम्
पीठोत्सेधं द्विरष्टांशमेकांशं पादुका भवेत् २७
जगतीं कुर्यात्त्रिभागेन पद्मतुण्डं त्रियंशकम्
तदूर्ध्वे पद्ममेकांशमूर्ध्ववृत्तं त्रियंशकम् २८
तस्योर्ध्वे कम्पमेकांशं ऊर्ध्वपद्मं त्रियंशकम्
अर्धांशे पट्टिकां कुर्यादर्धांशे घृतवारिणीम् २९
एवं तु श्रीकरं पीठं सर्वसंपत्सुखावहम्
यावत्पीठस्य चोत्सेधं पञ्चविंशतिभागिकम् ३०
एकांशं पादुकां विद्यात्पद्ममेकांशमेव च
तदूर्ध्वेऽर्धेन कम्पं तु चतुरश्राकृतिं पुनः ३१
जगती चतुरंशं तु ऊर्ध्वे पद्मं तथैव च
कम्पं पद्मं द्वयं चैव वृत्तवप्रत्रयं भवेत् ३२
तदूर्ध्वे पद्ममेकं तु पद्ममेकेन कारयेत्
कण्ठद्व्यंशमेवं स्यादूर्ध्वकम्पं तु भागतः ३३
पद्ममेकांशमित्याहुः प्रस्तरद्वयमेव च
ऊर्ध्वे वाजनमेकांशमर्धांशं घृतवारिणी ३४
निश्वासपीठमेवं स्यात्पीठमानं विधीयते

द्व्यंशं पादुकां कुर्याच्चतुर्थं जगती भवेत् ३५
एकांशं कराठमित्याहुः पद्ममेकांशमेव च
त्रियंशं कुम्भमित्युक्तं पद्ममेकांशमेव च ३६
कम्पं तु कराठकंपं च चतुरं भागमेव च
पद्ममेकांशमित्युक्तं पट्टिका द्व्यंशमेव च ३७
पद्मं तु वारिणी चैव द्व्यंशं कुर्याद्विचक्षणः
विजयं नाम एवं स्याद्भागानामेकविंशतिः ३८
पीठोत्सेधं दशाष्टांशं कृत्वा वै देशिकोत्तमः
एकांशं पादुकां विद्यादध्यर्धं कम्पपद्मयोः ३९
जगती चतुरंशं तु कुमुदं तत्त्रिभागकम्
तदूर्ध्वे कम्पमेकांशं कराठं कुर्यात्त्रियंशकैः ४०
तदूर्ध्वे कम्पमेकं तु द्व्यंशं पट्टिका भवेत्
पद्ममेकांशमित्युक्तं वारिरायर्धांशमेव च ४१
एवं स्वायंभुवं पीठं सर्वदेवेषु पूजितम्
उत्सेधं षोडशं कृत्वा एकांशेन तु पादुका ४२
पद्मकम्पौ द्व्यैकांशं त्र्यंशं जगतिरुन्नतम्
द्व्यंशेन पद्ममेवं स्यादर्धांशे कराठमिष्यते ४३
पद्ममर्धांशमेव स्यात्तद्द्व्यंशे कुम्भकुक्षिकौ
पद्मं चैकांशमित्युक्तमध्यर्धं कराठमुच्यते ४४
अर्धांशे पट्टिकां कुर्यादर्धांशे पद्मका भवेत्
अध्यर्धं प्रस्तरोत्सेधमंशे कम्पं तु वारिणी ४५
संपदं पीठमित्याहुः सर्वलिङ्गेषु योग्यकम्
अध्यर्धं पादुकं विद्यादर्धांशं तु दलाग्रकम् ४६
चतुर्थं पद्ममेवं स्यादर्धांशं कराठमुच्यते
अर्धांशं पद्ममेवं स्यात्तद्वृत्तं द्व्यंशमेव च ४७
अर्धांशं पद्ममेवं स्यात्कम्पमर्धांशमेव च
चतुरंशं पद्ममेवं पट्टिकाध्यर्धमेव च ४८
अर्धांशं वारिणीं कुर्यादर्धांशन्निम्नकं तथा
स्वस्तिकं पीठमित्याहुर्भागैर्द्विरष्टभिः क्रमात् ४९

पीठोत्सेधं त्रिधा कृत्वा मध्यैकं कण्ठमुच्यते
भागमेकमधः कुर्याद्भज्यतामृतुभागया ५०
द्व्यंशेन पट्टिकां कुर्यात्त्र्यंशं तु पद्ममेव च
एकांशं पट्टिकां कुर्यादूर्ध्वांशमृतुभागयुक् ५१
भागैकं पद्ममित्याहुरूर्ध्वंशेन पट्टमिष्यते
अध्यर्धं चोर्ध्वपट्टं तु अर्धांशे घृतवारिणी ५२
इत्येवं पूर्णचन्द्रं तु कारयेत्सुविशेषतः
पीठोत्सेधं द्विरष्टांशमेकेनोपानमुच्यते ५३
द्व्यंशं तु पद्ममेवं स्यादंशे कम्पमिति स्मृतम्
अष्टांशं कण्ठमित्याहुरंशोर्ध्वे कम्पपद्मयोः ५४
अध्यर्धं पट्टिकां कुर्यादर्धांशं पद्ममिष्यते
कम्पं तु वारिणीं कुर्यादेकांशेन विधीयते ५५
स्थण्डिलं पीठमित्युक्तं सर्वलिङ्गेषु योग्यकम्
तदलङ्कारमेवोक्तं पट्टिका प्रस्तरैर्युतम् ५६
तदूर्ध्वे पद्मकम्पं तु आलिङ्गान्तरितं भवेत्
वज्रपीठमिति ख्यातं रुद्रपीठमथोच्यते ५७
उत्सेधं षोडशांशं तु अंशे पादुकमिष्यते
द्व्यंशेन पद्मतुण्डं स्यादंशे कम्पमिति स्मृतम् ५८
द्वयंशं कण्ठमित्युक्तमंशे वै कम्पपद्मयोः
द्व्यंशेन वृत्तमेवं स्यादंशार्धे पद्ममिष्यते ५९
अर्धांशे पद्ममेवं स्याद्द्व्यंशे कण्ठमिति स्मृतम्
एकांशे पद्ममेकं तु अध्यर्धं प्रस्तरं भवेत् ६०
आलिङ्गान्तरितांशं तु अर्धांशे घृतवारिणी
एवं तु रुद्रपीठं स्याद्विमलं पीठमुच्यते ६१
पीठोत्सेधं तु विभजेत्त्रयोविंशतिसंख्यया
अध्यर्धं पादुकं कुर्यादर्धांशं पट्टिका भवेत् ६२
षडंशं पद्मतुण्डं स्यादंशेनैकेन कम्पकम्
तदूर्ध्वे कम्पमंशं तु पद्ममंशेन कारयेत् ६३
अष्टाश्रं तु द्विभागेन तस्योर्ध्वे कम्पमेकशः

एकेनोपरि कण्ठं स्यादेकेनोर्ध्वं तु कम्पकम् ६४
ऊर्ध्वपद्मं तु पञ्चांशमध्यर्धेन तु पट्टिका
अर्धांशेनाऽथ कुर्यात्तु घृतवारिं विचक्षणः ६५
विमलं पीठमेवं तु पीठा उक्तास्त्रयोदश
सर्वेषां पीठिकाङ्गानां प्रवेशं निर्गमं शृणु ६६
पादमर्धं त्रिपादं वा समं वा वेशनिर्गमम्
मूलादष्टांशमग्रे तु हीनं स्यात्पद्मपीठके ६७
सर्वेषां भद्रपीठानां पूर्ववत्पीठविस्तरम्
तद्वत्कपोतबन्धं स्यात्पीठविस्तारमानतः ६८
नन्द्यावर्तशिलाभिश्च ब्रह्मांशं बन्धयेत्क्रमात्
मध्यमं युवतीपीठमष्टबन्धेन बन्धयेत् ६९
लाक्षासर्जरसं कोष्ठं माक्षिकं शङ्खचूर्णकम्
गैरिकं नवनीतं च अतसीतैलमेव च ७०
एतानि सर्वमालोड्य पक्वं कुर्यात्सुबन्धयेत् ७१
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे लिङ्गपीठलक्षणपटलः चतुर्दशः

## पञ्चदशः पटलः
## पादशिलालक्षणम्

अथातः संप्रवक्ष्यामि पादशैलस्य लक्षणम्
नपुंसकशिलां ग्राह्य पादाधारं च कारयेत् १
उत्तमाधममध्याश्च त्रिविधाः पादधारकाः
पीठतारसमं यत्र पादशैलस्य विस्तरम् २
उत्तमा इति विज्ञेया मध्यमा वक्ष्यतेऽधुना
यस्य लिङ्गस्य विस्तारं द्विगुणं पादधारका ३
मध्यमा इति विज्ञेया अध्यर्धं कन्यसं भवेत्
किञ्चिन्न्यूनं भवेत्तत्र अधिकं चापि वर्जयेत् ४
छेदयेत्तु विशेषेण समं वै चतुरश्रकम्
तदर्धं बहुलं विद्यात्तत्त्रिभागैकमेव च ५
प्रासादमध्यसूत्रं तु किञ्चिद्वामे नियोजयेत्

पादाधारशिलां तत्र स्थापयेच्छ्वभ्रमध्यमे ६
लिङ्गविस्तारमानं तु समं वै चतुरश्रकम्
किञ्चिदीशानमाश्रित्य श्वभ्रं कुर्याद्विचक्षणः ७
लिङ्गतारं चतुर्भागं श्वभ्रावटार्धमेव च
नवावटं च कर्तव्यं तस्मिन्श्वभ्रे विशेषतः ८
द्व्यङ्गुलं तु विस्तारं तावन्निम्नं तु कारयेत्
तन्मध्ये तु न्यसेद्रत्नं नवसङ्ख्या विशेषतः ९
वज्रमौक्तिकवैडूर्यं मरकतं स्फटिकं तथा
पुष्परागं चन्द्रकान्तमिन्द्रनीलं तथैव च १०
पद्मरागं विशेषेण नवरत्नं प्रकीर्तितम्
पूर्वे तु स्थापयेद्वज्रमाग्नेय्यां मौक्तिकं न्यसेत् ११
याम्ये वैडूर्यकं न्यस्त्वा मरकतं निर्ऋतौ न्यसेत्
वारुणे स्फटिकं न्यस्त्वा वायव्यां पुष्परागकम् १२
चन्द्रकान्तं तु कौबेर्यामैशान्यामिन्द्रनीलकम्
मध्यमे पद्मरागं तु न्यसेच्छ्वभ्रस्य मध्यमे १३
सौवर्णवृषभं कृत्वा न्यसेच्छ्वभ्रस्य मध्यमे
नवरत्नानामलाभे सौवर्णं दिक्षु निक्षिपेत् १४
श्वभ्रावगाढमारभ्य विष्णुभागान्तरे समम्
नन्द्यावर्तशिला कार्या चत्वार्येवं विधीयते १५
विस्तारोत्सेधमानं तु सममेव तु तं पुनः
विस्तारद्विगुणं दैर्घ्यं कर्तव्यं कार्यवित्तमैः १६
पादाधारावटे मध्ये स्थापयेल्लिङ्गमुत्तमम्
प्रदक्षिणं स्यात्पूर्वात्तु नन्द्यावर्तशिला न्यसेत् १७
नपुंसकशिलायां तु नन्द्यावर्तशिलाकृतिः
पूर्वपश्चिममायान्तं तथा वै दक्षिणोत्तरम् १८
एवं तु विन्यसेद्विद्वाञ्चूर्णबन्धेन बन्धयेत्
तदूर्ध्वे पीठिकां कुर्यादष्टबन्धेन बन्धयेत् १९
आचार्यशिल्पी सहितौ कुर्यातां पीठबन्धनम्
पीठबन्धेन तत्काले नवरत्नानि विन्यसेत् २०

लिङ्गं संस्थाप्य पूर्वं तु पश्चात्पीठस्य बन्धनम्
उपलिङ्गवशात्पीठपूर्वमेवाथ बन्धनम्  २१
हीनमानं न कुर्यात्तु कारयेत्कर्तृनाशनम्
सर्वलक्षणसंयुक्तं योजयेच्छास्त्रपारगः  २२
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे पादशिलालक्षणं नाम पञ्चदशः पटलः

## षोडशः पटलः
## प्रतिमालक्षणम्

अथातः संप्रवक्ष्यामि प्रतिमालक्षणं परम्
सकलं निष्कलं चैव द्विविधं भेदमुच्यते  १
सकलं प्रतिमारूपं निष्कलं लिङ्गरूपकम्
अधुना संप्रवक्ष्यामि सकलोन्माननाहकम्  २
शैलजं मृण्मयं चैव लोहजं दारुजं तथा
यथावत्संभवद्द्रव्यैः कुर्यात्प्रतिममुत्तमम्  ३
प्रासादवशमानेन गर्भमानेन वा पुनः
द्वारमानेन वा पश्चात्स्तम्भमानेन कारयेत्  ४
हस्तमानेन वा कुर्यान्मूलबेरं प्रमाणतः
आदिप्रासादविस्तारं पश्चाद्बाह्यसुनिश्चितम्  ५
तदर्धमुत्तमोत्सेधं तस्यार्धं मध्यमं भवेत्
तदर्धमधमं ज्ञेयं प्रतिमोच्चं विधानतः  ६
त्रिविधं तत्समाख्यातं प्रतिमां प्रासादमानतः
गर्भमानप्रमाणेन द्विविधं चोच्यते मया  ७
यस्य गर्भगृहस्यार्धं कन्यसं प्रतिमोच्छ्रयम्
पञ्चभागसमे गर्भे त्रिभागं मध्यमं भवेत्  ८
त्रिभागद्वयमित्युक्तं प्रतिमोत्सेधमुत्तमम्
गर्भमानमथान्येन वक्ष्यते क्रमशोऽधुना  ९
गर्भगेहं त्रिधा भज्य एकैकं तु त्रिधा पुनः
अधस्तात्कन्यसं त्रीणि मध्यमे त्रीणि मध्यमम्  १०
उत्तमं त्रीणि चाग्रे तु एकैकं प्रतिमोच्छ्रयम्

नवधा मानमित्युक्तं कनिष्ठादि त्रयं त्रयम् ११
द्वारमानेन कर्तव्यमुत्तमं द्वारतत्समम्
नवभागैकहीनं तु मध्यमं प्रतिमोच्छ्रयम् १२
अधमेऽष्टांशहीनं तु त्रिविधं प्रतिमोच्छ्रयम्
तदेव स्तम्भमानं स्यादुत्तमाधममध्यमम् १३
स्तम्भमानमिदं प्रोक्तं हस्तमानमथ शृणु
दशपञ्चाधिकैर्हस्तैः प्रतिमा ज्येष्ठ उच्यते १४
दशहस्तं मध्यमं स्यात्पञ्चहस्तं तु कन्यसम्
त्रिभूम्यादिद्वादशान्ते हस्तमानं विधीयते १५
अल्पप्रासादरूपस्य हस्तमानं न कारयेत्
पूजाभागसमं मानं कन्यसं परिकीर्तितम् १६
द्विगुणं मध्यमं ज्ञेयं नाहमानमथोत्तमम्
प्रतिमां च त्रिधा कृत्वा भागैकं पीठिकोच्छ्रयम् १७
चतुर्भागैकभागं तु पीठिकां चासने विदुः
पञ्चभागैकभागं स्यात्स्थानके तु विशेषतः १८
अथेदानीमहं वक्ष्ये तालसङ्ख्याक्रमं क्रमात्
दशतालं नवतालमष्टतालं तु सप्तकम् १९
षट्तालं पञ्चतालं स्याच्चतुस्तालं त्रितालकम्
एषां तालक्रमं प्रोक्तं सर्वदेवेषु योग्यकम् २०
दशतालं नवतालं चैकैकं तु त्रिभेदकम्
उत्तमं दशतालं स्याच्चतुर्विंशच्छताङ्गुलम् २१
मध्यमं विंशतिशतमधमं षोडशाधिकम्
उत्तमं मध्यमं चैव कनिष्ठं दशतालकम् २२
दशतालं त्रिविधं स्यान्नवतालं शृणुष्व हि
नवतालोत्तमं विद्धि द्वादशाधिकतच्छतम् २३
मध्यमं नवतालं तु अष्टाधिकशताङ्गुलम्
चतुरङ्गुलाधिकशतं नवताले तु कन्यसम् २४
उत्तमदशतालेन ब्रह्मविष्णुमहेश्वराः
उमा दुर्गा महालक्ष्मीः चामुण्डी च मही तथा २५

ब्रह्माणी ज्येष्ठा रौद्राणी वैष्णवी च सरस्वती
मध्यमदशतालेन क्षेत्रपालं तथैव च २६
आदित्यं गुहरुद्रांश्च आर्यकं वज्रधारिणम्
ऋषयोऽप्सरसोऽश्विन्यौ कनिष्ठदशतालकैः २७
वाराही च तथेन्द्राणी कौमारी चान्यदेवताः
कारयेल्लक्षणैर्युक्तं नवार्धतालेन चानल २८
अग्निं चण्डेश्वरं चैव यमं च वरुणं तथा
वायुं चापि कुबेरं च गरुडगन्धर्वयक्षकान् २९
सिद्धचारणनागेन्द्रान्विद्याधरगणेश्वरान्
उत्तमनवतालेन कारयेल्लक्षणान्वितान् ३०
अर्धतालविहीनाः स्युर्विघ्नेशा निर्ऋतिस्तथा
तद्द्व्यङ्गुलविहीनं स्याद्दिव्यमानुषमानकम् ३१
राक्षसानसुरांश्चैव मध्यमनवतालकैः
अधमं नवतालं स्यादन्येषां देवमानकम् ३२
अष्टताला नरास्तत्र सप्ततालाः पिशाचकाः
षट्तालं कुब्जकानां तु पञ्चतालो विनायकः ३३
वामनं च तथैवं स्याच्चतुस्तालं तु भूतकम्
त्रितालाः किन्नरा ज्ञेया एवं तालक्रमं विदुः ३४
प्रतिमायाममानं तु तालगण्येन भाजितम्
लब्धोत्सेधस्य मानं तु चतुर्विंशच्छतं कुरु ३५
तत्तद्भागैकमानं यत्तदङ्गुलमिति स्मृतम्
अङ्गुलं तु भवेन्मात्रं मात्रादष्टविभाजितम् ३६
एकभागं यवं विद्याद्यवाष्टगुणिताङ्गुलम्
द्व्यङ्गुलं कोलकं विद्यात्त्र्यङ्गुलेन कुला भवेत् ३७
भागं स्याच्छतुरङ्गुल्यं भागद्विगुणयावकम्
भागयावकसंयुक्तं मुखमेवं प्रकीर्तितम् ३८
मुखं तालसमं चैव द्वादशाङ्गुलसंज्ञकम्
मानं प्रमाणमुन्मानं लम्बमानोपमानकम् ३९
पञ्चमानसमायुक्तां प्रतिमां कारयेद्बुधः

यथावत्प्रतिमोत्सेधं तस्य मानमिहोच्यते ४०
तत्तिर्यग्गतमानं यत्तत्सर्वं तु प्रमाणकम्
तस्यावृतं तु यन्मानं तन्मानोन्मानमुच्यते ४१
सर्वेषां सूत्रदेहे तु लम्बयेल्लम्बमानकम्
निम्नोन्नतक्षयं चैव उपमानमिति स्मृतम् ४२
मानं स्यात्कायमित्युक्तमनुकायं प्रमाणकम्
नाहमुन्मानमेवं तु लम्बमानं तु सूत्रकम् ४३
क्षयवृद्धिविधानं यद् उपमानमिति स्मृतम्
मानहीने महाव्याधिरधिके शत्रुवर्धनम् ४४
नाहहीने विनाशः स्याद् वृद्धिः स्यात्क्षयदं भवेत्
प्रमाणहीने दारिद्र्यमधिके दारनाशनम् ४५
लम्बमानविहीने तु राजराष्ट्रस्य दोषकृत्
उपमानाधिके हीने शिल्पिनं हन्ति देशिकम् ४६
सर्वलक्षणसंयुक्तं कर्तृभर्तृप्रजा ददेत्
कायमध्यममेढ्रं तु मेढ्रमूलमिति स्मृतम् ४७
ऊर्ध्वकायमधःकायं समं तु शुभलक्षणम्
किञ्चिन्न्यूनाधिकं वर्ज्यं कारयेच्छुभमादरात् ४८
मूर्धपादान्तयोर्मध्ये एतन्मानमुदाहृतम्
उत्तमं दशतालं स्यान्मानं तस्य विधीयते ४९
उष्णीषं द्वियवं मात्रं केशमानं कला भवेत्
केशान्तादक्षिसूत्रान्तं भागं तु द्वियवाधिकम् ५०
अक्षिसूत्रात्तु नासाग्रं तत्समं चैव कारयेत्
नासाग्राद्धनुपर्यन्तं द्विकोलकं यवाधिकम् ५१
गलवृद्ध्यर्धाङ्गुलं विद्धि ग्रीवामानं द्विकोलकम्
ग्रीवामूलात्स्तनान्तं स्यात्त्रयोदशार्धाङ्गुलेन तु ५२
स्तनाभ्यां मेढ्रमूलान्तं सप्तविंशाङ्गुलं भवेत्
मेढ्रमूलात्तु जानु स्यात्सप्तविंशाङ्गुलायतम् ५३
जानुमण्डलं द्विकोलं जङ्घायां चोरुतत्समम्
चरणं चतुरङ्गुल्यं मानमेतत्प्रशस्यते ५४

द्वादशाङ्गुलविस्तारं मुखं पूर्वक्रिया भवेत्
उष्णीषात्पृष्ठकेशान्तं षट्कोलकमिति स्मृतम् ५५
उष्णीषात्पूर्वकेशान्तं नवमात्रं विधीयते
उष्णीषात्पार्श्वकेशान्तं एकैकं तु नवाङ्गुलम् ५६
लकाराक्षरसंयुक्तं केशान्तस्याकृतिर्भवेत्
कर्णयोरन्तरं पूर्वं दशकोलमिति स्मृतम् ५७
नासाग्रात्कर्णपाल्यन्तं कलाचतुरनिर्गमम्
पृष्ठस्य कर्णयोर्मध्ये त्रिभागार्धाङ्गुलं भवेत् ५८
कोलकं कर्णविस्तारं द्विगुणं चायतं भवेत्
कर्णश्रोत्रायतं तारं मात्रमर्धाङ्गुलं विदुः ५९
यवद्वयं कर्णपाल्यं तत्समं कर्णपट्टिका
मात्रार्धं कर्णदीपाल्यं तदंशं कर्णनालकम् ६०
लकारवक्त्रयोर्मध्ये पिञ्जुषी कर्णचूलिका
अधस्तान्नालमायामं चतुष्कयवविस्तरम् ६१
अपाङ्गात्कर्णमूलान्तं ऋषिमात्रं विधीयते
नेत्रायामं द्विमात्रं स्याद्यवाधिक्यमिति स्मृतम् ६२
षड्यवं नेत्रविस्तारं करवीरो यवो भवेत्
मध्यमं च यवं तारं तज्ज्योतिर्यवमात्रकम् ६३
दृष्टिर्यूकप्रमाणेन त्रिविधाकारमण्डलम्
श्वेतं रक्तं तथा कृष्णं त्रिविधं लोचनान्वितम् ६४
नवतीपक्ष्मरोमं च भ्रमराञ्जनसंनिभम्
मत्स्याभं धनुराकारं चोत्पलाकारमेव च ६५
भ्रूरेखा चक्षुरेखा च कोलकं यवमुच्यते
भ्रूरेखादूर्ध्वकेशान्तं तत्समं तत्र कारयेत् ६६
ऊर्ध्ववर्मविशालं स्याद्यवं पञ्चैव कारयेत्
अधस्ताद्द्वियवं विद्याद् योजयेत्तु विचक्षणः ६७
भ्रूदीर्घं भूतमङ्गुल्यं विस्तारं यवमुच्यते
दृगन्तरप्रमाणं हि यवहीनद्वयाङ्गुलम् ६८
अक्षिसूत्राद्भ्रुवोत्सेधमङ्गुलं तस्य संगमे

गोजेश्च नासिकोत्सेधं कोलकं परिकीर्तितम्  ६९
पुटयोः पुष्करं तिर्यक्कोलकं तु यवाधिकम्
वंशमङ्गुलविस्तारं पुटं पञ्चयवोच्छ्रयम्  ७०
पुष्करं तु यवोत्सेधं पुरस्तात्षड्यवं तथा
पुटद्वारोन्नतं तारं यवं सप्तार्धमङ्गुलम्  ७१
द्व्यंशं वामेन वपुषा पुष्करस्य प्रमाणतः
तिलपुष्पसमाकारं नासाग्रपुटयोर्भवेत्  ७२
पुटसूत्राधरोष्ठान्तं कोलकं यवमुच्यते
दशनादृश्यदृश्यं तु द्वात्रिंशच्च विधीयते  ७३
यवत्रयं तु विस्तारमुत्सेधं तत्समं भवेत्
दंष्ट्रायामं यवाधिक्यं स दंशो मुकुलाकृतिः  ७४
ऊर्ध्वे षोडशदन्तं स्यादधस्तात्तावदेव तु
अधो दशनविस्तारं द्वियवं तावदुच्छ्रयम्  ७५
जिह्वायामं षडङ्गुल्यं कोलका यवविस्तृतम्
अधरोष्ठस्य विस्तारमङ्गुलं तु यवाधिकम्  ७६
सप्तयवा रक्ततारमायामं च द्विमात्रकम्
द्विकोलं च यवाधिक्यमास्यतारं विधीयते  ७७
उत्तरोष्ठस्य विस्तारं यवत्रयमिति स्मृतम्
यवेन पालिं त्रियवम् उत्तरोष्ठं विधीयते  ७८
चतुर्यवं गोजिका तु ऊर्ध्वे निम्नं यवार्धकम्
द्वियवार्धं गोजिविस्तारं कारयेत्तु विचक्षणः  ७९
हनुः स्याद्द्व्यङ्गुलायामं तदूर्ध्वे तु यवाङ्गुलम्
सप्तयवोच्चमधरात्त्रिमात्रं हनुवर्धनम्  ८०
त्रियवं चोन्नतं विद्यान्मात्रार्धं चिबुनिर्गमम्
पूर्णचन्द्राकृतिर्वक्त्रं सर्वलक्षणसंयुतम्  ८१
गण्डिकात्पृष्ठग्रीवं च भागायतमिहोच्यते
अधस्तात्कोलकायामं शूर्पं तस्याकृतिर्भवेत्  ८२
ककुदा कटिसन्धिश्च दशकलाङ्गुलार्धकम्
तत्समं कक्षयोर्मध्ये प्रमाणं परिकीर्तितम्  ८३

पृष्ठान्तं कटिसन्धिश्च त्रयोदशार्धाङ्गुलायतम्
ब्रह्ममात्रार्धविस्तारं पृष्ठमण्डलमेव च ८४
तत्समाततविस्तारं तदर्धं चोन्नतं भवेत्
ग्रीवाग्रास्य तु विस्तारं वसुमात्रार्धमङ्गुलम् ८५
ग्रीवमूलस्य विस्तारं नवमात्रार्धमिष्यते
सुवृत्तं ग्रीवमेवोक्तं द्विरेखापरिवेष्टितम् ८६
हिक्कासूत्रे तथा ज्ञेया बाहुभ्यां सप्तविंशतिः
प्रकोष्ठं दशमायाममङ्गुल्याधिक्यमिष्यते ८७
कोलकं कूर्परायामं मानमेतन्न संशयः
मणिबन्धं मध्याङ्गुल्यं षट्कोलकं तु षड्यवम् ८८
हिक्कासूत्रे तथा मध्ये ऋजुमानं भानुकोलकम्
वसुकोलकमायाममुपबाहु प्रकीर्तितम् ८९
हिक्कासूत्रात्तु कक्षान्तं नवमात्रार्धमिष्यते
हिक्कासूत्रोपरि चैव स्कन्धपर्यन्तमिष्यते ९०
द्विकोलकं कोलकाज्ज्ञेयं कोलकार्धं क्षयं भवेत्
बाहुमूलस्य विस्तारं नवमात्रार्धमुच्यते ९१
बाहुमध्यमविस्तारं वसुमात्रं यवाधिकम्
कोर्परस्य तु विस्तारम् ऋषिमात्रमुदीरितम् ९२
प्रकोष्ठमध्यविस्तारं पञ्चाङ्गुलयवाधिकम्
मणिबन्धस्य विस्तारं त्रिमात्रार्धं यवाधिकम् ९३
त्रिकोलं मध्यमायामं शेषं च तलमायतम्
षडङ्गुलं करतलं तिर्यक्स्यात्परिकीर्तितम् ९४
कराङ्गुष्ठोन्नतं ज्ञेयं चतुर्मात्रयवाधिकम्
कनिष्ठं तत्समं ज्ञेयं पूर्वोक्तविधिना सह ९५
अनामिका षडङ्गुला प्रदेशिन्यायामतत्समम्
यावं दशार्धं सप्तार्धमष्टार्धाष्टममुच्यते ९६
षड्यवार्धं कनिष्ठं च अङ्गुष्ठादीनि विस्तरम्
सप्तार्धं चतुरर्धं च पञ्चार्धं चतुरर्धकम् ९७
त्रियवार्धं यवं तारमङ्गुष्ठादि नखाः स्मृताः

स्वविस्तारयवाधिक्यं नखायामं च कारयेत् ९८
मध्यमूलं तु नाहं स्यादक्षनाहं यवक्षयम्
अङ्गुष्ठं तु द्विपर्वं स्यात्त्रिपर्वं चतुरङ्गुलम् ९९
पादहस्ततलं रेखा शङ्खचक्रे तु योजयेत्
द्विरेखा तु तलं विद्यात्सर्वलक्षणसंयुतम् १००
कक्षयोरन्तरं प्रोक्तं त्र्यङ्गुलं दशकोलकम्
हिक्काचूचुकयोर्मध्ये त्रयोदशार्धाङ्गुलं भवेत् १०१
स्तनयोरन्तरं तत्स्यात्तत्समं तत्र कारयेत्
चूचुकं तिलकाकारं तद्यवं विस्तरं भवेत् १०२
स्तनचूचुकयोरुत्सेधं त्र्यङ्गुलं स्तनमण्डलम्
हृदयस्य च विस्तारमष्टादशाङ्गुलार्धकम् १०३
उदरस्य तु विस्तारं पञ्चदशाङ्गुलार्धकम्
नाभिप्रदक्षिणावर्तं षड्यवं तत्र कारयेत् १०४
निम्नं तु तद्यवार्धं च तत्पूर्वोक्तविधिक्रमम्
श्रोणीप्रदेशविस्तारं सप्तदशाङ्गुलार्धकम् १०५
नागेन्द्रस्य फणाकारमुच्छ्रायं बाणमङ्गुलम्
कटिप्रदेशविस्तारं नवमार्धदशाङ्गुलम् १०६
शरीरं गोमुखाकारं कटेरूर्ध्वं प्रशस्यते
अल्पं विषं महत्कायं पूर्वोक्तं तु प्रशस्यते १०७
बाणमात्रं यवाधिक्यं तन्मेढ्रान्तमिहोच्यते
मुष्कायाश्चतुरङ्गुल्यं विस्तारायामतत्समम् १०८
एकैकं द्व्यङ्गुलं ज्ञेयं मुष्कविस्तारमेव च
कोलकं च यवाधिक्यं मेढ्रविस्तारमुच्यते १०९
ऊरुमूलस्य विस्तारं त्रयोदशार्धाङ्गुलं विदुः
मूलाच्च द्व्यङ्गुलाधस्तात्तारं त्रयोदशाङ्गुलम् ११०
ऊरुमध्यमविस्तारं द्वादशाङ्गुलमेव च
जानुमध्यमविस्तारं नवमात्रार्धमिष्यते १११
जङ्घामध्यमविस्तारं सप्तार्धमङ्गुलं भवेत्
नालप्रदेशविस्तारं चतुर्मात्रायवाधिकम् ११२

तलप्रदेशविस्तारं पञ्चाङ्गुलयवाधिकम्
पादाङ्गुष्ठा यथा ज्ञेया द्विकोलं तच्च कारयेत् ११३
चतुर्मात्रा यवाधिक्यं देशिन्यायाममिष्यते
मध्यायामं त्रिमात्रं वानामिका त्र्यङ्गुलं भवेत् ११४
कनिष्ठा द्व्यङ्गुलार्धं च मानमेतद्विधीयते
त्रयोदशनवाष्टं च सप्तार्धं षड्यवाधिकम् ११५
अङ्गुष्ठादिषु विस्तारं यथावदनुपूर्वशः
अङ्गुष्ठं चैव पञ्चार्धं चतुरर्धं चतुर्यवम् ११६
त्रयार्धं त्रियवं तारं पञ्चाङ्गुलिनखाः स्मृताः
विस्तारं तत्समायामं नखानां परिकीर्तितम् ११७
विस्तारं त्रिगुणं नाहं सर्वेषां च यथाऽब्रवीत्
अङ्गोपाङ्गं च प्रत्यङ्गं पञ्चमानेन संयुतम् ११८
लम्बमानमथो वक्ष्ये शृणुष्वेतेषु चानल
लम्बस्य फलकामानं पञ्चतालायतं भवेत् १
द्वितालं विस्तृतं चैव चाङ्गुलं घनमेव च
एतदायामविस्तारे मध्यसूत्राणि कल्पयेत् २
चतुष्कोणं मध्यसूत्रं मूर्ध्निमध्ये प्रषीकृतम्
लम्बस्य मध्यसूत्रात्तु पुरसूत्रोऽष्टमाङ्गुलम् ३
अग्रमौली च सूत्रं तु त्रिकोलकसमन्वितम्
मध्यमौली तु सूत्रान्तं चतुरंशमुदीरितम् ४
केशान्तमङ्गुलाध्यर्धं भ्रूसन्धौ यवहीनकम्
नासिकासूत्रमूलं तु अङ्गुलं षड्यवाधिकम् ५
गोजिं च तत्समं प्रोक्तं अधममङ्गुलम्भवेत्
हनुमध्ये च सूत्रान्तमङ्गुलस्यार्धमेव वा ६
कण्ठरेखा चतुर्मात्रं पञ्चार्धं हिक्कमेव च
स्तनमध्यप्रदेशं तु अङ्गुल्यमिति कथ्यते ७
नाभिश्चैव तु निम्नस्य कटिमध्यद्व्याङ्गुलम्
त्र्यङ्गुलं मेढ्रमूलान्तं सूत्रान्तं परिनिश्चितम् ८
ऊर्वोर्जानु च जङ्घायां पादमध्ये च लम्बयेत्

सुखासनं च कर्तव्यं पृष्ठसूत्रं विधीयते ९
पूर्वसूत्रे पुरे चैव चतुरङ्गुलमन्तकम्
लम्बितं सूत्रमित्याहुः पादमक्षं प्रतिष्ठितम् १०
मध्यसूत्रार्धसूत्रं तु षडङ्गुलं चैव लंबितम्
अग्रमौली च सूत्रान्तम् अङ्गुलद्वयमिष्यते ११
मध्ये तु द्व्यङ्गुलं ज्ञेयं मूले चार्धाङ्गुलान्तकम्
कर्णबाह्या प्रलंबं च स्कन्धदेशे प्रतिष्ठितम् १२
मध्यसूत्रार्धसूत्रं तु षडङ्गुलावलंबितम्
अग्रमौली च सूत्रान्तमङ्गुलद्वयमिष्यते १३
कर्णसूत्रान्तपार्श्वे तु द्वादशाङ्गुलमुच्यते
बाहुबाह्यन्तं चैव कोर्पराभ्यन्तरेण तु १४
वाससाग्रे पुरे चैव पादपार्श्वे प्रतिष्ठितम्
बाहुसूत्रं च तद्बाह्यं द्वादशाङ्गुलमेव च १५
चतुरङ्गुलं पुरे कृत्य कर्तरी बाह्यतो गता
परा पार्श्वगतं चैव कर्तरीसूत्रमेव च १६
मध्यसूत्रपरे कृत्वा षडङ्गुलं चैवमीरितम्
मौलीपृष्ठगतं सूत्रं पृष्ठकेशान्तलंबितम् १७
परसूत्रपरं चैव त्र्यङ्गुलान्तरलंबितम्
शिरश्चक्रपरं चैव ककुद्देशे प्रतिष्ठितम् १८
लम्बं च स्फिजोर्मध्ये च पादमध्ये प्रतिष्ठितम्
पूर्वतोऽपरबाहुश्च तद्घनं द्वादशाङ्गुलम् १९
पूर्वबाहुकौ वा बाहुस्तद्बाहु च तत्समम्
एवं चतुर्भुजं कुर्यादष्टबाहुं च वक्ष्यते २०
पूर्वबाहुप्रमाणार्धं परभुजकमुच्यते
नवसूत्रं तु वक्ष्यामि यथावदनुपूर्वशः २१
पञ्चतालं च तद्दीर्घं द्वितालं विसृतं भवेत्
फलका धनुराकारा अङ्गुलं घनमेव च २२
मकुटोपरि कर्तव्यं ब्रह्मसूत्रं तु मध्यतः
ब्रह्मसूत्रस्य तत्पार्श्वे कर्णसूत्रद्वयं तथा २३

कक्षसूत्रद्वयं तस्य बाहुसूत्रद्वयं भवेत्
परहस्तद्वयं चैव नवसूत्रं विधीयते २४
मध्यमे ब्रह्मसूत्रं तु मूर्ध्निमध्ये प्रतिष्ठितम्
तथा भ्रुवन्तरे चैव नासाग्राद्योजितं भवेत् २५
उष्णीषमौलिबन्धौ तु अष्टार्धं मात्रमिष्यते
उज्ष्णीषस्तवनीमध्ये नानाभू हि मुनाहि च २६
पादाङ्गुष्ठान्तरे चैव ब्रह्मसूत्रस्य लम्बितम्
षण्मात्रं कर्णपाल्यन्तं चुबुकान्तस्य मध्यमे २७
पादं मध्ये स्थितं ज्ञात्वा परसूत्रं समर्पयेत्
कर्णसूत्रं बहिर्भागं कक्षसूत्रमिहोच्यते २८
क ऊरुपास्तसंस्पृश्य पादपर्श्वमिहोच्यते
कक्षसूत्रबहिश्चैव द्विभागे बाहुसूत्रकम् २९
बाहुबाह्यगतं सूत्रं नासाग्रे पीठरास्थितम्
बाहुं च परहस्ताभ्यां त्रिभागं कन्यसाङ्गुलम् ३०
कन्यसां संस्पृशेच्चैव बाहुं चोपरि कल्पयेत्
सर्वेषां तेषु सूत्रेषु वापयेन्मतिमान्नरः ३१
इत्थं सूत्रं परं दैवं यथास्थाने विधीयते
आसने विधिमित्याहुः वोर्ध्वकायसमान्वितम् ३२
शयने ब्रह्मसूत्रात्तु अर्धरिं चाग्रशैतिकम्
स्थानं चातनशैतस्यं सूत्रमेतदुदाहृतम् ३३
अलक्षणेन कृतं चेत्कर्ता भर्ता विनश्यति
स्थानशून्यं च दुर्भिक्षं राजराष्ट्रविनाशनम् ३४
वैदिनान्तत्त्रिभागा समालेख्यं चित्रकर्मणि
वैदिकं मोक्षकामस्य तान्त्रिकं सर्वकामदम् ३५
ब्रह्मस्थाने भवेच्चार्धं सचित्रं वैदिका स्मृता
कुर्यात्तान्त्रिकचित्रं तु आभासे लेख्यमिष्यते ३६
चतुर्मात्रे कृतं चित्रमाभासं तु तथैव च
मानं प्रमाणं यत्तेषां आलेख्यमिति विद्यते ३७
सास्थिकं निरस्थिकं चैव साकल्यं च विशेषतः

सास्थिकं तु सहासीनान्ननावर्णे तु चास्थिकम्  ३८
निरस्थिकं चास्थिहीनानीरास्थिकं न प्रवक्ष्यते
साकल्यं सकलं चापि वैकल्यं विकलो भवेत्  ३९
सास्थिकं रूपमेवं तु अस्थित्वात्स्यात्तथैव च
निरस्थिकं रूपमेवं लोहादीनां तु कारयेत्  ४०
साकल्यरूपमेवं तु शिलादारुमयं भवेत्
न रूपविक्रिया ज्ञात्वा वैशेषिकमिति स्मृतम्  ४१
अस्थि काष्ठा सिरा रज्जु चाष्टबन्धेन रक्तकम्
मृन्मांसा नस्वरा चर्म शकदुश्चत्करमेव च  ४२
वर्णकेशमिदं विद्यात्प्रवक्ष्याम्यनुपूर्वशः
अस्थि स्यात्काष्ठमित्याहुः सिरा रज्जुश्च संस्मृतम्  ४३
अष्टबन्धेन तद्वृत्त मृन्मांसांबरचर्मकम्
कटुशर्करया कारमेदसा वर्णकेशकम्  ४४
धातुरूपमिति प्रोक्तं आयव्ययादिकं शृणु
आयं व्ययं च योनिं च नक्षत्रं वारमंशकम्  ४५
अलुब्धे चार्धाङ्गुलमानेन विभजेत्समभागशः
बेरोदयाऽष्टगुणिते द्वादशाङ्गुल निर्भरित्  ४६
शिष्टमायं तु संग्राह्यं नवभिर्गुणितं भवेत्
दशभिर्वर्गते सम्यक्शेषं वै व्ययसंग्रहम्  ४७
त्रिगुणाष्टविहीनं तु शेषं योनिं विनिर्दिशेत्
ध्वजधूमं सिंहश्वानौ ख्यात वृषगर्दभहस्तिका  ४८
एकत्रयं पञ्च सप्त एते वै शुभयोनिजाः
अष्टेन गुणितं यच्च सप्तविंशतिना हरेत्  ४९
अश्विन्यादिस्तथा शिष्टं जन्मनक्षत्रसंयुतम्
बेरनक्षत्रसंग्राह्यं यथा युक्तिर्विशेषतः  ५०
षष्टिभिर्गुणितश्चैव भि++र्बर्हिणं भवेत्
अष्टमंशकमेवोक्तं यथा युक्तिक्रमेण तु  ५१
अभवं निर्दनमृद्धिर्नवांशकादिर्भवेदिह
नवभिर्गुणितं सप्त हरेत्सूर्यादिवारकम्  ५२

सौरं विशाखमन्या च संबन्धं च चतुश्चतुः
रणमृत्युर्भयं विद्धि प्रयोक्तव्यं यथा क्रमम् ५३
आयादिशुभं गृह्णीयात्कारयेत्तु विचक्षणः ५४
षोडशप्रतिमाकारं वक्ष्यते विधिनाधुना
प्रथमं सुखासनं प्रोक्तं वैवाह्यं च द्वितीयकम् ११९
तृतीयमुमया युक्तं वृषारूढं चतुर्थकम्
पञ्चमं त्रिपुरघ्नं च नृत्तरूपं च षष्ठकम् १२०
चन्द्रशेखरमेवोक्तं सप्तमं तु विधीयते
अष्टमं चार्धनारी च नवमं हरिरर्धकम् १२१
चण्डेश्वरप्रसादं तु दशमं परिकीर्तितम्
कामार्येकादशं प्रोक्तं द्वादशं कालनाशनम् १२२
त्रयोदशं दक्षिणामूर्तिं भिक्षाटनमतः परम्
सदाशिवं पञ्चदशं लिङ्गोद्भवं च षोडश १२३
आसने तु सुखासीनं वरदाभयहस्तकम्
अभयं दक्षिणं हस्तं वरदं वामहस्तकम् १२४
वामदक्षिणहस्ताभ्यां कृष्णापरशुधारिणम्
शयनं दक्षिणं पादं वामपादं तु लम्बितम् १२५
एवं सुखासीनं प्रोक्तं कल्याणमधुनोच्यते
किञ्चित्त्रिभङ्गिकं कार्यं वामपादं तु कुञ्चितम् १२६
देवस्य दक्षिणं हस्तं देवीहस्तेन संयुतम्
वरदं वामहस्तं च कृष्णापरशुसंयुतम् १२७
दुकूलवसनां देवीं कुर्यादेवं विशेषतः
लक्ष्मीं कनकरूपां तु द्विभुजां च सुलोचनाम् १२८
सर्वाभरणसंयुक्ताम् उमापार्श्वे व्यवस्थिताम्
कल्याणं कारयेद्देवम् उमासहितमुच्यते १२९
देवस्य वामपार्श्वे तु देवीं कुयाद्द्विबाहुकाम्
उमाशङ्करसुखासीनौ स्कन्दो मध्ये तु संस्थितः १३०
महेश्वरौ स्थितौ सम्यग्वृषभः पृष्ठतः स्थितः
वृषस्य मस्तके देशे न्यसेद्वै वामकोर्परम् १३१

लम्बितं दक्षिणं हस्तं कृष्णापरशुधारिणम्
वृषारुढमिति प्रोक्तं त्रिपुरारिरिहोच्यते १३२
सुस्थितं दक्षिणं पादं वामपादं तु कुञ्चितम्
धनुर्बाणसमायुक्तं कृष्णापरशुधारिणम् १३३
उमया सहितं देवं कुर्याद्वै त्रिपुरान्तकम्
डमरुं दक्षिणे हस्ते वामहस्ते धृतानलम् १३४
त्रिशूलं परशुं खड्गं वज्रबाणं तु दक्षिणे
खेटकं नागपाशं च दण्डघण्टा शरासनम् १३५
भुजङ्गललितं ह्येतद्भुजङ्गाञ्चितमुच्यते
तदेवं वामदक्षिण्यं हस्तदण्डपताकया १३६
उद्धृतं वामपादं तु जान्वन्तं स्याद्विशेषतः
कुञ्चितं दक्षिणं पादम् एवमेवं प्रकल्पयेत् १३७
गजहस्तोपमं बाहूरास्तीरं गतम् +++
अभयं दक्षिणं हस्तं डमरुकानलसंयुतम् १३८
भुजङ्गत्रासमेतद्धि त्रिधा भेदेन कारयेत्
ऋज्वागतस्थितं देवं वरदाभयहस्तकम् १३९
कृष्णापरशुसंयुक्तं कुर्याद्वै चन्द्रशेखरम्
दक्षिणांशे हरं कुर्यात्तद्वामे पार्वती भवेत् १४०
जटामकुटसंयुक्तं नयनार्धं ललाटके
परशुधारिणं सव्ये सव्यपादं तु सुस्थितम् १४१
उमांशे तु स्तनं कुर्याद्द्विभुजं तिलकान्वितम्
अलकामण्डितं चोर्ध्वे किञ्चित्कुञ्चितपादयुक् १४२
दर्पणं चोत्पलं हस्ते तच्छ्रोत्रे दत्तपत्रकम्
वामभागे हरिं कुर्याद्द्विभुजं चक्रधारिणम् १४३
किरीटमकुटोपेतं पीताम्बरधरं हरिम्
ईशानं द्विभुजं कुर्यादभयं परशुं क्रमात् १४४
हरिरर्धमिति प्रोक्तं सर्वलक्षणसंयुतम्
चण्डेश्वरप्रसादं तु वक्ष्यते विधिनाऽधुना १४५
चण्डप्रचण्डविक्रान्तं चण्डेश्वरं चतुर्विधम्

चण्डं कृतयुगे प्रोक्तं चाष्टभिर्दोर्भिरन्वितम् १४६
त्रिनेत्रं श्वेतवर्णं तु पद्मपीठोपरि स्थितम्
परशुं वज्रशूलं च दक्षिणे तु करे दधत् १४७
हरिणं शक्तिघण्टां च वामहस्ते तु धारयन्
हृदयेऽञ्जलिसंयुक्तं चण्डं कुर्याद्विशेषतः १४८
प्रचण्डं षड्भुजैर्युक्तं त्रेतायां परिकल्पयेत्
शूलघण्टा च हीनं स्याच्छेषं पूर्ववदेव तु १४९
विक्रान्तं द्वापरे प्रोक्तं चतुर्बाहुं द्विनेत्रकम्
कृताञ्जलिसमायुक्तं वज्रशक्तिसमन्वितम् १५०
कलौ चण्डेश्वरः प्रोक्तो द्विबाहुश्च द्विनेत्रकः
टङ्कं तु दक्षिणे हस्ते वरदं वामहस्तके १५१
देवस्य वामपार्श्वे तु चण्डेशं परिकल्पयेत्
देवस्याभिमुखं कुर्यात्कामरूपं प्रमादितम् १५२
उग्ररूपं विशालाक्षं चासीनं चासने हरम्
कामहारिर्भवेदेवं कालनाशमथोच्यते १५३
उद्धृतं दक्षिणं पादं वामपादं तु कुञ्चितम्
दक्षिणे तु करे शूलं परशुं वामबाहुके १५४
दक्षिणे नागपाशं तु वामहस्ते तु सूचिकम्
खड्गं वै दक्षिणे हस्ते वामहस्ते तु खेटकम् १५५
टङ्कं तु दक्षिणे हस्ते वामहस्ते तु पुस्तकम्
दक्षिणे चाक्षमाला स्याद्वामहस्ते तु चानलम् १५६
श्वेतरूपं त्रिनेत्रं स्याद् द्विपचर्मोत्तरीयकम्
आर्द्रतालङ्कृतं भङ्गि चन्द्रार्ककुसुमान्वितम् १५७
शयनं दक्षिणं पादं वामपादं तु कुञ्चितम्
ऋषिभिश्च समायुक्तं दक्षिणेशं प्रकल्पयेत् १५८
भिक्षाटनं च कर्तव्यं नग्नरूपं त्रिलोचनम्
चतुर्भुजसमायुक्तं कपालपिञ्छधारिणम् १५९
हरिणीमुखगं हस्तमपरे डमरुं भवेत्
पादे पादुकसंयुक्तं कुर्याद्वै गमनोन्मुखम् १६०

सदाशिवस्य रूपं तु प्रवक्ष्यामि विशेषतः
त्र्यक्षं दशभुजं शान्तं जटामकुटमरिडतम्  १६१
पञ्चवक्त्रयुतं देवं पञ्चमूर्धभिरन्वितम्
शूलं परशुवज्रं च खड्गाभयं च दक्षिरो  १६२
पाशाङ्कुशं च नागं च घराटावह्निं च वामके
नेत्रैः पञ्चदशैर्युक्तं सर्वलक्षरासंयुतम्  १६३
लिङ्गोर्ध्वे पक्षसंयुक्तं ब्रह्माणं परिकल्पयेत्
ग्रधोभागगतो विष्णुः सूकरानन एव च  १६४
हृदयेऽञ्जलिसंयुक्तं स्वस्वरूपसमन्वितम्
लिङ्गमध्ये स्थितो देवो पूर्ववच्चन्द्रशेखरः  १६५
एवं षोडशमूर्तीनां भेदः प्रोक्तो विशेषतः
सुखासनस्य कामारेरर्धनार्यो विशेषतः  १६६
भिक्षाटने च हर्यर्धे दक्षिरामूर्तिविग्रहे
उमादेवी न कर्तव्या कृतं चेद्वंशनाशनम्  १६७
शेषाराां प्रतिमानां तु देवीं कुर्याद्विशेषतः  १६८
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे प्रतिमालक्षरापटलः षोडशः

ग्रधुना संप्रवक्ष्यामि ब्रह्मरूपं महानल
चतुर्वक्त्रं चतुर्बाहुं कमराडल्वक्षधारिराम्  १
रक्तवर्राजटायुक्तं यज्ञसूत्रोत्तरीयकम्
रक्तक्षौमधरं देवं वरदाभयहस्तकम्  २
ग्रक्षमालाधारं सव्ये वामहस्ते कमराडलुम्
ग्रासीनं वा स्थितं वाथ कुर्यात्पद्मासनास्थितम्  ३
सावित्री वाक्पती चैव उभयोः पार्श्वयोः स्थिताः
विष्णुं किरीटकेयूरं कटिसूत्रोपशोभितम्  ४
ग्रतसीपुष्पसङ्काशं शश्वद्बालस्वरूपिराम्
शङ्खचक्रगदाहस्तं ग्रभयं च द्विलोचनम्  ५
पीताम्बरधरं देवं श्रीभूमिसहितं हरिम्
श्यामाभं वा विभक्ताङ्गं कुर्याद्विष्णुं विशेषतः  ६

तरुणादित्यसङ्काशं शश्वद्बालस्वरूपिणम्
हस्तैर्द्वादशभिर्युक्तं चतुर्हस्तं द्विहस्तकम् ७
सर्वाभरणसंयुक्तं हारकेयूरभूषितम्
दिव्यांबरधरं देवं कुर्यान्मयूरवाहनम् ८
शक्तिघण्टाङ्कुशं चैव तोमराभयमुद्गरम्
दक्शिणे धारयेदेतान्पाशखेटकचापकम् ९
घण्टावरदपिञ्च्छांश्च वामहस्तेषु दर्शयेत्
आरण्ये राजधान्यां तु पत्तने द्वादशं भुजम् १०
पर्वते सागरे तीर्थे गह्वरे वापि षड्भुजम्
पिञ्छमुद्गरहीनं स्याद्घण्टातोमरहीनकम् ११
चापांशकं तथा हीनं षड्भुजे तु विशेषतः
ग्रामके खेटके चैव चतुर्भिर्दोर्भिरान्वितम् १२
खड्गखेटकहीनं स्यात्कारयेल्लक्षणान्वितम्
स्कन्दस्य लक्षणं प्रोक्तं विघ्नेशस्य विबोधमे १३
नागारिजातवो नाम गजकर्णो गजाननः
गजहस्तो ब्रह्मचण्डो भूतरूपो महाबलः १४
कालाग्निसदृशक्रोधो महामेघसमस्वनः
लोके हन्ति सुरान्सर्वान्मदपूरितविग्रहः १५
तेन युद्धं महाघोरं वर्षकोटि प्रवर्तते
देवानां तु भुजां दृष्ट्वा केन वाक्य इदं ब्रवीत् १६
दानवास्यामतुल्येन सुतेनैशेन धारयेत्
अन्यथा नोपसादेयं युष्मादिभिरिह दानवाः १७
तच्छ्रुत्वा हि महादेवं श्रीमत्कैलासमन्दिरम्
स्तुत्यांशशंभुर्विशेषेण क्रीडयान्ति स्थितं फलम् १८
भवो नापि वसुप्रीतः स्पृष्ट्वा तद्रूपनिग्रहम्
उमायोगान्महाविघ्नः सद्योजातो विशेषतः १९
किं करोमि वद स्वामिन्व्यालयज्ञोपवीतिनम्
स्वदन्तं दक्षिणे हस्ते वामहस्ते लड्डुकम् २०
परशुं दक्षिणे हस्ते पाशं वै वामतः करे

लम्बोदरं बृहत्कुक्षिं क्षौमवस्त्रधरं परम्  २१
कौशिकीं कारयेद्धीमान् ++++++न्विताम्
सुवक्त्रां नीलकेशां च नीलोत्पलदलक्षणाम्  २२
सुवासां च सुमध्यां च सुस्तनीं चारुभाषिणीम्
शुलं खड्गधरं चैव पाशा वै+++++  २३
पाशखेटकार्गं च शङ्खं वै वामतः करे
दुर्गां च कारयेद्देवीं महिषस्य शिरास्थिताम्  २४
पद्मासनं तु कर्तव्यं स्थानं चासनयानकम्
उमादेवी प्रकर्तव्यां सर्वलक्षणसंयुताम्  २५
सुगला नीलकेशा च स्वरूपा च सुयौवना
सुनासाकर्ण +++++++++++  २६
नितंबतटविस्तीर्णा मध्यक्षामा स्तनोन्नता
दिव्यांबरधरा नित्या सर्वाभरणभूषिता  २७
सर्वाभरणसंयुक्ता कलिपत्नीं तु कारयेत्
सुस्तनीं चारुवदनां सुमध्यां च सुयौवनाम्  २८
रक्तकुण्डलसंयुक्तां कञ्चुलिकुञ्चितस्तनाम्
वागीशीं कारयेत्तत्र पद्मासनसमायुताम्  २९
नवरत्नबलैर्युक्तां करण्डमकुटोज्वलाम्
द्विभुजां च द्विनेत्रां च किञ्चित्प्रहसिताननाम्  ३०
दर्पणं दक्षिणे हस्ते वामहस्ते तु पुस्तकम्
मातृणां लक्षणं वक्ष्ये वर्णवाहनचिह्नकैः  ३१
पद्मासनस्थं भद्रेशं कुर्याल्लक्षणसंयुतम्
शङ्खकुन्देन्दुवर्णाभं कृष्णापरशुसंयुतम्  ३२
चतुर्भुजं चारुवदनं वटवृक्षसमाश्रितम्
चतुर्वक्त्रधरं देवं वरदाभयहस्तकम्  ३३
पीतवर्णजटायुक्तकमण्डल्वक्षधारिणम्
सर्वाभरणसंयुक्तं हंसध्वजविभूषितम्  ३४
ब्रह्माणीं कारयेदेवं ब्रह्मवृक्षसमाश्रितम्
चतुर्भुजं शान्तिरूपं सर्वाभरणभूषितम्  ३५

त्रिनेत्रं श्वेतरूपं च जटामकुटमण्डितम्
कपालशूलहस्तं च वरदाभयहस्तकम् ३६
माहेशीं कारयेद्धीमान् चन्दनद्रुमसंयुतम्
कुक्कुटध्वजसंयुक्तां कुङ्कमस्तनभूषिताम् ३७
शक्तितोमरसंयुक्तां वरदाभयहस्तकाम्
जटामकुटसंयुक्तामौदुंबरसमाश्रिताम् ३८
क्षौमवस्त्रधरां देवीं कारयेत्तु गुहात्मनीम्
शङ्खचक्रधरां देवीं वरदाभयहस्तकाम् ३९
किरीटमकुटैर्युक्तां हारकेयूरभूषिताम्
सुस्तनां चारुवदनां श्यामवर्णां सुलोचनाम् ४०
राजवृक्षाश्रितां देवीं गरुडध्वजसंयुताम्
वैष्णवीं कारयेद्देवीं वाराहीं च ततः शृणु ४१
नीलवर्णमहारूपां करण्डमकुटोज्वलाम्
कृष्णांबरधरां दंष्ट्रां वराहसदृशाननाम् ४२
वरदाभयदं हस्तं करञ्जद्रुमसंयुताम्
सिंहद्रुमसमायुक्तां सर्वाभरणसंयुताम् ४३
गजध्वजसमायुक्तां श्यामवर्णां चतुर्भुजाम्
ऊर्ध्वगाभिः शिखाभिश्च शोभितां शवकुण्डलीम् ४४
प्रेतध्वजसमायुक्तां वटवृक्षसमाश्रिताम्
विघ्नेशं पूर्ववत्कुर्यात्सर्वलक्षणसंयुतम् ४५
ग्रामाणामुत्तरस्थामीशान्यायामतिदुरतः
प्राक्प्रत्यगायता वासा शालाकारशिरान्वितम् ४६
पूर्वस्यामुत्तरस्यां वा दिशि द्वारसमायुता
ब्राह्म्यादिना तु संस्थाप्य दक्षिणादि क्रमेण तु ४७
इन्द्ररूपमहं वक्ष्ये शृणु वह्ने विशेषतः
दिव्याकारं बृहद्रूपं द्विनेत्रं हसिताननम् ४८
श्यामवर्णं गजारूढमावृतं चाप्सरोगणैः
दिव्याभरणसंयुक्तं दिव्यमालाविभूषितम् ४९
वज्रपाणिं गजारुढं कुर्यादिन्द्रं सुराधिपम्

दिव्यरूपं सुलावरायं तप्तकाञ्चनसान्निभम् ५०
रक्तांबरधरं भीममूर्ध्वगं च शिखान्वितम्
शक्तितोमरसंयुक्तं ज्वालामालाविभूषितम् ५१
अग्निं कुर्याद्गजारूढं सप्तजिह्वाभिरन्वितम्
महामहिषमारुढं नीलाञ्जनसमप्रभम् ५२
दराडपाशधरं देवं दीप्ताग्निसमलोचनम्
कुर्याद्वैवस्वतं रूपं क्रुद्धं लोकभयङ्करम् ५३
राक्षसेशं विशालाक्षं खड्गहस्तं सखेटकम्
सिंहारूढं विशालाक्षं रक्तकेशं सुयौवनम् ५४
सुदंष्ट्रं नीलवर्णं च कुर्यात्तं निर्ऋतिं ततः
शङ्खकुन्देन्दुधवलं पाशहस्तं महाबलम् ५५
हारकेयूररुचिरं कुराडलाभ्यामलङ्कृतम्
मकरस्थं महाकूटं कुर्याद्वरुणमुत्तमम् ५६
युवानं वायुं धूम्राभं पिङ्गाक्षं शबरांबरम्
कुटिलभ्रुवं महावीर्यं मृगारूढं महाबलम् ५७
सर्वाभरणसंयुक्तं वायुं कुर्याद्विशेषतः
कुबेरं यक्षराजानं सर्वावयवसुन्दरम् ५८
मकुटेन तु चित्रेण कुराडलाभ्यामलङ्कृतम्
हारकेयूररुचिरं हयारूढं गदाधरं ५९
रक्तांबरधरं देवं कुर्याद्यक्षेश्वरं प्रभुम्
ईशानं वृषभारूढं जटामकुटमरािडतम् ६०
त्रिशूलपाणिनं देवं त्र्यक्षं लोकेश्वरं हरम्
त्रिनेत्रं श्वेतवर्णाभं कुर्यादीशानमुत्तमम् ६१
सूर्यरूपमहं वक्ष्ये शृणु वह्ने विशेषतः
दिव्यरूपं जगत्कान्तिं पद्मकिञ्जल्कमुत्तमम् ६२
प्रभामराडलसंयुक्तं कम्बुग्रीवं सुलोचनम्
उषासन्ध्यासमायुक्तं कराडमकुटान्वितम् ६३
करोद्धृतं रक्तवस्त्रपीतांबरधरं प्रभुम्
सर्वाभरणसंयुक्तं कुर्यादादित्यमुत्तमम् ६४

गोक्षीरधवलप्रख्यं द्विभुजं च द्विनेत्रकम्
रश्मिमण्डलसंयुक्तं वैपुल्यमकुटान्वितम् ६५
रोहिणीसहितं कुर्याद्वै कुमुदहस्तकम्
अनन्तेशस्तथा सूक्ष्मः शिवोत्तमश्चैकनेत्रकः ६६
एकरुद्रस्त्रिमूर्तिस्तु श्रीखण्ठश्च शिखाण्डिनः
चतुर्भुजास्त्रिनेत्राश्च टङ्कशूलौ च धारिणः ६७
वरदाभयहस्ताश्च क्षौमवस्त्रधरा इमे
नासत्यौ दस्त्रकौ चैव अश्विन्यौ च प्रकीर्तितम् ६८
शुक्लवस्त्रधरोष्णिष पुस्तक +++++
भवश्शर्वस्तथैशानः पशुपत्युग्रावेव च ६९
रूद्रो भीमो महादेवो चाष्टमूर्तिः प्रकीर्तितः
चतुर्भुजास्त्रिणेत्रास्तु जटामकुटधारिणः ७०
वरदाभयहस्ताश्च कृष्णापरशुधारिणः
सर्वाभरणसंयुक्ता रक्तक्षौमधरा इमे ७१
वैकर्तनो विवस्वांश्च मार्ताण्डो भास्करो रविः
लोकप्रकाशकश्चैव लोकसाक्षी त्रिविक्रमः ७२
आदित्यश्च तथा सूर्यः अंशुमाली दिवाकरः
एतावद्द्वादशादित्यः पद्महस्ता द्विबाहुकाः ७३
रक्तपद्मासनारूढा रत्नमण्डलमण्डिताः
धरो ध्रुवश्च सोमश्च आपश्चैवनिलोऽनलः ७४
प्रत्यूषश्च प्रभावश्च वासवश्चाष्ट एव च
रक्तवर्णा इमे वीरा खड्गखेटकसंयुताः ७५
पीतवस्त्रधराः सर्वे सर्वाभरणभूषिताः
महादेवो हरो रुद्रः शङ्करो नीललोहितः ७६
ईशानो विजयो भीमो देवदेवो भवोद्भवः
कपालीश इमे सर्वे रुद्राश्चैकादश स्मृताः ७७
रुद्रवेषधरा नित्या जटामकुटधारिणः
कपालशूलहस्ताश्च वरदाभयहस्तकाः ७८
उर्वशी मेनका रम्भा मोहिनी च तिलोत्तमा

पञ्च तेऽप्सरसः प्रोक्ताः पीनोन्नतपयोधराः ७९
पीनोरुजघनापीना सुनेत्रास्तनुमध्यमाः
कम्बुग्रीवविभक्ताश्च सर्वाभरणभूषिताः ८०
सुकेशाः सौम्यवदनाः दुकूलवसनान्विताः
विरामो महिषश्चैव अग्निष्टुत्वा अमूर्तिकाः ८१
सव्या बहूशिकश्चैव अर्यमा सकलस्तया
एते पितृगणा अष्टौ छत्रदण्डधरास्तथा ८२
पीतवर्णाः सुवृध्या तु शुक्लवस्त्रसमन्विताः
अत्रिर्वसिष्ठोऽङ्गिरसः काश्यपो नारदस्तथा ८३
उपमन्युर्भृगुश्चैव ऋषयः परिकीर्तिताः
जाटावल्कलसंयुक्ताः कमण्डल्वक्षधारिणः ८४
शुक्लवस्त्रधरोष्णीषाश्शिवध्यानपरायणाः
प्रकीर्तिता जया पूर्णा रोहिणी रेवती मघा ८५
रोहिण्यः सप्त उच्यन्ते नागाभरणभूषिताः
स्वरूपा नागहस्ताश्च केशहारसमन्विताः ८६
दिव्यपुष्पधराः सर्वे दुकूलवसनान्विताः
भगास्थि स्पर्शनो वायुरनिलो मारुतस्तथा ८७
प्राणः प्राणेन जीवेश मरुतोऽष्टौ प्रकीर्तिताः
द्विभुजाश्च द्विनेत्राश्च अङ्कुशध्वजसंयुताः ८८
पीताक्षाः पीनवक्षाश्च श्वेतवस्त्रधराः सदा
अनन्तो वासुकिश्चैव तक्षकार्कोटकस्तथा ८९
शङ्खपालश्च गुलिको महापद्मश्च पद्मकः
पौरुषश्चोर्ध्वकायश्च अधोकायस्तु वालकः ९०
शिरोपञ्चफणैर्युक्ताः सर्वाभरणभूषिताः
ऊर्ध्वकेशं विरूपाक्षं शिखाकोटिसमुज्ज्वलम् ९१
शक्तिशूलधरं देवं कुर्यात्कालाग्निरूपकम्
सृष्टिरादौ महारुद्रस्त्वष्टा विष्णुर्विशेषतः ९२
संक्षेपतो महाविष्णुः प्रातःप्रकृतिविग्रहः
ईशानाकृतिरूपस्तं स्थाप्य वीर्यं निषिक्तवान् ९३

तस्मिन्काले महातेजः सर्वशास्त्रार्थचिन्तकः
षढस्तपौष्टिकं प्रोक्तं अष्टहस्तं जयप्रदम् ९४
ब्रह्मचारिस्वरूपेण तस्यां जातो महाबली
क्षेत्रपालश्च इत्युक्तं क्षेत्रपाल इति स्मृताः ९५
द्विहस्तं वश्यकं ज्ञेयं चतुर्हस्तं तु शान्तिकम्
शूलं कपालं द्विभुजे घण्टापाशं चतुर्भुजे ९६
खड्गखेटकमाधिक्यं षड्भुजे तु विशेषतः
डमरुं चैव खट्वाङ्गं अधिकं चाष्टबाहुके ९७
ऊर्ध्वकेशं विरूपाक्षं भीमरूपं वृकोदरम्
नागाभरणसंयुक्तं नग्नरूपं महाबलम् ९८
क्षेत्रं च कारयेदेवं नागयज्ञोपवीतिनम्
कामरूपमहं वक्ष्ये रतियुक्तं सुयौवनम् ९९
वृत्तं ललाटनयनं दुकूलवसनान्वितम्
सर्वाभरणसंयुक्तं हारकेयूरभूषितम् १००
इक्षुचापसमायुक्तं पञ्चबाणसमायुतम्
कारयेल्लक्षणोपेतं सर्वकामफलप्रदम् १०१
प्रतिमालक्षणं प्रोक्तं स्त्रीणां मानमथ शृणु
अनुबन्धौ समाप्तौ
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे प्रतिमालक्षणपटलः षोडशः

## सप्तदशः पटलः
## देवीलक्षणम्

अथातः संप्रवक्ष्यामि उमादेव्यास्तु लक्षणम्
उमा दुर्गा च लक्ष्मी च चामुण्डा च मही तथा १
ब्राह्मी ज्येष्ठा च रौद्री च वैष्णवी च सरस्वती
मध्यमदशतालेन कारयेत्तु विचक्षणः २
मूर्धपादान्तयोर्मध्ये मानं तत्र निबोधयेत्
उष्णीषमङ्गुलं प्रोक्तं त्र्यङ्गुलं शिर उच्यते ३
केशान्तादक्षिसूत्रान्तं पञ्चाङ्गुलमिति स्मृतम्

अक्षिसूत्रात्पुटान्तं तु चतुर्मात्रार्धमिष्यते ४
नासिकाद्धनुपर्यन्तमर्धाधिक्यं त्रयङ्गुलम्
गलवृद्धिर्न कर्तव्या ग्रीवायां चतुरङ्गुलम् ५
हिक्कासूत्रात्स्तनान्तं च त्रयोदशाङ्गुलमिष्यते
अधस्तान्नाभिसीमान्तं तत्समं कारयेद्बुधः ६
नाभिसीमात्स्वयोन्यन्तं द्वादशाङ्गुलमिष्यते
तद्योन्या जानुसीमान्तं षड्विंशत्यङ्गुलायतम् ७
जानुमण्डलं भागं स्याज्जङ्घा चोरू च तत्समम्
तलोत्सेधं चतुर्मात्रमूर्ध्वमानं प्रकीर्तितम् ८
तत्पार्ष्णी चतुरङ्गुल्यं पुरस्ताद्द्वादशाङ्गुलम्
पादाग्रं पञ्चमाङ्गुल्यम् उत्सेधं चतुरङ्गुलम् ९
पादाङ्गुष्ठायतं भागं प्रादेशिन्यास्तु तत्समम्
त्रिमात्रार्धं मध्याङ्गुल्यं त्र्यङ्गुलानामिका भवेत् १०
कनिष्ठायां द्विमात्रार्धं पादाङ्गुल्यायतं भवेत्
द्वादशं च नवाष्टं च सप्तार्धं षड्यवं तथा ११
अङ्गुष्ठादिकनिष्ठान्तं पादाङ्गुल्यस्य विस्तृतम्
तत्तदङ्गुलविस्तारं तदर्धं नखविस्तृतम् १२
अक्षात्पार्ष्ण्यायतं भागमुत्सेधं तु कला भवेत्
अक्षगुल्फद्वयोर्मध्ये विस्तारं पञ्चमाङ्गुलम् १३
नलप्रदेशविस्तारं चतुरङ्गुलमिष्यते
जङ्घामध्यमविस्तारं षण्मात्रं तु प्रकीर्तितम् १४
जानुमध्यमविस्तारं सप्ताङ्गुलमिति स्मृतम्
ऊरुमध्यमविस्तारं त्रिभागाङ्गुलहीनकम् १५
ऊरुमूलस्य विस्तारं चतुर्भागाङ्गुलक्षयम्
गजहस्तं यथाकारं नलका चोरुमूलयोः १६
योनिमूलस्य विस्तारं पञ्चाङ्गुलमिति स्मृतम्
अग्रैकमङ्गुलं तारमानुपूर्वक्षयं क्रमात् १७
पिप्पलस्य दलाकारं तद्योन्याकृतिरुच्यते
कटिप्रदेशविस्तारमष्टाविंशतिरङ्गुलम् १८

श्रोणीप्रदेशविस्तारं षड्विंशत्यङ्गुलं भवेत्
नाभिप्रदक्षिणावर्तं षड्यवं विस्तृतं भवेत् १९
निम्नं यवद्वयं विद्यान्नाभिकामानमिष्यते
उदरं मध्यविस्तारमुक्तमेकादशाङ्गुलम् २०
स्तनान्तं तस्य विस्तारं चतुर्दशाङ्गुलं भवेत्
स्तनमण्डलविस्तारं नवमात्रार्धमिष्यते २१
तत्समायतमेवोक्तं तदर्धं स्यात्तदुन्नतम्
द्वियवार्धं चूचुकं तारं द्व्यङ्गुलं स्तनमण्डलम् २२
नालिकेरफलाकारं रमणीयं स्तनद्वयम्
कक्षयोरन्तरं तिर्यगष्टादशाङ्गुलं भवेत् २३
बाहुद्वयान्तरं तिर्यग्द्वात्रिंशाङ्गुलमीरितम्
हिक्कासूत्रादधो बाहुष्षड्विंशाङ्गुलमायतम् २४
प्रकोष्ठं विंशदङ्गुल्यं मानमेतन्न संशयः
कराग्रान्मध्यमाङ्गुल्यायामं द्वादशमुच्यते २५
तस्यार्धं तु तलायामं शेषं मध्याङ्गुलं भवेत्
आयामं च प्रदेशिन्या भागं पञ्चयवाधिकम् २६
द्विकोलं षड्यवाधिक्यं आयामानामिका भवेत्
भागायतं कराङ्गुष्ठं कनिष्ठं तत्समायतम् २७
यवैर्दश च सप्तार्धमष्टसप्तार्धषड्यवम्
अङ्गुष्ठादि कनिष्ठान्तं पञ्चाङ्गुलविशालकम् २८
मूलादग्रं क्षयं तारमष्टभागविहीनकम्
सप्तार्धं चतुरर्धं च पञ्चार्धं चतुरर्धकम् २९
त्रियवाश्च नखा ज्ञेया विस्तारा आनुपूर्विका
विस्तारं द्वियवाधिक्यं नखायामं च कारयेत् ३०
त्रिपर्वं चतुरङ्गुल्यमङ्गुष्ठात्तु द्विपर्वकान्
तलमध्ये ततो रेखा पाशाङ्कुशसमन्वितम् ३१
मणिबन्धस्य विस्तारं त्र्यङ्गुलं स्यात्प्रमाणकम्
मूलादग्रक्षयं तारमष्टभागविहीनकम् ३२
प्रकोष्ठमध्यविस्तारं चतुरङ्गुलमिष्यते

कोर्परस्य प्रमाणं तु पञ्चाङ्गुलं यवाधिकम्  ३३
बाहुमध्यमविस्तारं षण्मात्रं परिकीर्तितम्
बाहुमूलस्य विस्तारं सप्तार्धमङ्गुलं भवेत्  ३४
हिक्कासूत्रोपरि चैव स्कन्धपर्यन्तमिष्यते
कोलकं कोलकार्धं च अङ्गुलार्धं क्षयं भवेत्  ३५
गजहस्ताकारमुक्तं बाह्वोरुपरि कीर्तितम्
षण्मात्रं ग्रीवविस्तारं सुवृत्तं ग्रीवमुच्यते  ३६
त्र्यङ्गुलाद्द्वियवाधिक्यं चिबुकस्य तु निर्गमम्
अङ्गुलद्वियवाधिक्यमधो मध्यायतं भवेत्  ३७
हनुश्च षड्यवा ज्ञेया अधरोष्ठस्य निर्गमम्
अधरोष्ठस्य विस्तारमङ्गुलं स्याद्यवाधिकम्  ३८
तिर्यक् च कोलका ज्ञेया रक्तभागमिति स्मृतम्
अधरोष्ठस्य विस्तारं मध्यमं यावकं विदुः  ३९
शेषं हि रक्तधारं च अधरोष्ठं प्रशस्यते
तिर्यक्त्र्यङ्गुलार्धं च आस्यतारमिति स्मृतम्  ४०
त्रियवमुत्तरोष्ठं च त्रियवं कोलकं भवेत्
चतुर्यवं गोजिकायास्तस्यार्धं विस्तृतं भवेत्  ४१
पञ्चदशयवोत्सेधं नासिकायाममिष्यते
पुटद्वयोः पुष्करान्ते पञ्चदशयवं विदुः  ४२
पुष्करं षड्यवोत्सेधं विस्तारं यवमुच्यते
यवसप्तपुटं तारं चतुर्यवपुटोन्नतम्  ४३
यवद्वयं चाग्रनासी तिलपुष्पसमाकृतिः
नेत्रं द्व्याङ्गुलायामं द्वियवाधिकमिष्यते  ४४
षड्यवं नेत्रविस्तारं करवीरो यवो भवेत्
मध्ये पञ्चयवं तारं ज्योतिर्यवप्रमाणतः  ४५
दृष्टिर्यूकप्रमाणेन त्रिविधाकारमण्डलम्
शेषं वै शुक्लभागं च त्रिवर्णं लोचनं भवेत्  ४६
भ्रूरेखा चक्षूरेखा च द्व्यङ्गुलं त्रियवाधिकम्
भ्रूरेखादूर्ध्वकेशान्तं कला पञ्चयवाधिकम्  ४७

भ्रूदीर्घं पञ्चमात्रं स्याद्विस्तारं यवमुच्यते
आपूर्णकार्मुकाकारौ भ्रुवौ लक्षणसंयुतौ ४८
मूलं नासिभ्रुवोत्सेधमङ्गुलं तस्य संगमम्
अक्षिद्वयान्तरं तिर्यग्यवहीनद्वियङ्गुलम् ४९
कर्णयोरन्तरं पूर्वं विंशत्यङ्गुलमेव च
अपाङ्गात्कर्णमूलान्तं यवहीनमृषिमात्रकम् ५०
द्विमात्रं कर्णविस्तारं द्विगुणादायतं विदुः
अधस्तात्कोलकं ज्ञेयं तन्नालायाममिष्यते ५१
मात्रार्धं पूर्वनालं स्यात्परनालाङ्गुलं विदुः
भ्रूरेखा च यवाधिक्यं कर्णोच्छ्रयं विशेषतः ५२
उष्णीषात्पुरपृष्ठान्तं केशान्तं त्रिंशदङ्गुलम्
उष्णीषात्पार्श्वकेशान्तमेकैकं तु नवाङ्गुलम् ५३
ललाटं पञ्चाङ्गुलं तारं केशान्तस्याकृतिर्भवेत्
पृष्ठस्य कर्णयोर्मध्ये षट्कोलकमिति स्मृतम् ५४
देवदेहप्रमाणं तु त्रिविधं मानमिष्यते
प्रतिमोत्सेधमानेन देवीमानं प्रचक्षते ५५
नास्यन्तं चापि चास्यान्तम् हनुबाह्वन्तमेव च
नास्यन्तमुत्तमं ज्ञेयमास्यान्तं मध्यमं भवेत् ५६
बाह्वन्तमधमं ज्ञेयं देव्यास्तुङ्गमिहोच्यते
पूर्वोक्तलक्षणोपेतमुमाद्याः कारयेद्बुधः ५७
स्थानके स्थानकं देवी आसीने चासनं भवेत्
सुखासनस्य देवस्य देवी चासनमेव हि ५८
अन्यथा च न कर्तव्यं कर्ता भर्ता च नश्यते
शैलजे शैलजा देवी दारुजे दारुजा तथा ५९
मृण्मये मृण्मयं प्रोक्तं लोहजे लोहजं भवेत्
अन्यथा च न कर्तव्यं राजराष्ट्रं विनश्यति ६०
एवं य कुरुते ज्ञात्वा पृथिव्यामेकराड्भवेत्
एवं युक्तिविशेषेण योजयेत्तु विचक्षणः ६१

इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे देव्या लक्षणपटलः सप्तदशः

## अष्टादशपटलः
## ब्रह्मसूत्रलक्षणम्

अतः परं प्रवक्ष्यामि ब्रह्मसूत्रस्य लक्षणम्
लिङ्गं च निर्व्रणं कृत्वा पूजाभागे तु विन्यसेत् १
पूजाभागसमस्तं तु षोडशांशैर्विभाजयेत्
वेदभागोपरि त्यज्यमश्विन्यौ वर्जयेदधः २
दशमे लक्षणोद्धारं हेमसूच्या पुनर्लिखेत्
नवांशं मध्यमं सूत्रं पक्षसूत्रे तु लम्बयेत् ३
मध्यमेन तु यत्सूत्रं तत्सूत्रं समलम्बयेत्
एकांशे मुकुलं कुर्याद्यवाकाराग्रसंयुतं ४
यवविस्तारनिम्नं तु त्रिसूत्रं चैव लक्षणम्
एकैकान्तरमानं तु त्रियवं वा चतुर्यवम् ५
मुकुले मूलविस्तारमङ्गुलं द्वियवाधिकम्
तस्याग्रादेकहीनं तु मुकुलस्य तु लक्षणम् ६
कद्रुद्रायेति मन्त्रेण मध्यसूत्रं तु लेखयेत्
ब्रह्मजज्ञानमन्त्रेण लिखेद्दक्षिणसूत्रकम् ७
इदं विष्णिवति मन्त्रेण वामसूत्रं तु लेखयेत्
स्निग्धगम्भीरमधुना न स्थूलं न कृशं तथा ८
न वक्रन्नापि विच्छिन्नं न बिन्दुकलशान्वितम्
एते शुभास्तु रेखाया ब्रह्मसूत्रस्य लक्षणम् ९
गवाक्षं महिषाक्षं च खट्वाङ्गं करपुटाकृतिः
गवाक्षं ब्राह्मणस्योक्तं खट्वाङ्गं क्षत्रियस्य तु १०
महिषाक्षं तु वैश्यानां शूद्रे करपुटाकृतिः
सर्वेषां करपुटाकारं समुदायविधानकम् ११
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे ब्रह्मसूत्रपटलोऽष्टादशः

## एकोनविंशतिः पटलः
## वास्तुहोमविधिः

अथातः संप्रवक्ष्यामि वास्तुहोमविधिक्रमम्
वास्तु संपूजयेत्पूर्वमेकाशीतिपदेषु च १
आद्यशैलेष्टकाधाने लिङ्गस्थापनकर्मणि
सकलस्थापने चैव प्रोक्षणे बालमन्दिरे २
मण्डपे नृत्तरङ्गे च सभासत्राग्निमण्डपे
वास्तुहोमः प्रकर्तव्यः सर्वशम्बरसंयुतः ३
दीक्षितश्चाग्निहोत्री च सर्वेन्द्रियविनिग्रहः
तन्त्रज्ञो विधिमान्वास्तुशास्त्रज्ञः सपरिग्रहः ४
नाङ्गहीनो विशुद्धात्मा वास्तुहोममथाचरेत्
समरीयपदे सम्यक्स्थण्डिलं विधिना कुरु ५
हस्तमात्रं तु विस्तारमुत्सेधं स्यात्त्रयाङ्गुलम्
जलावर्तं न्यसेदैन्द्रे शालिमध्ये विशेषतः ६
गन्धतोयेन संपूर्य हेमं तत्रैव निक्षिपेत्
दूर्वापालाशशाखांश्च तन्मध्ये तु विनिक्षिपेत् ७
गन्धपुष्पादिना पूज्य द्वारस्थाने पदे क्रमात्
उल्लेखनं प्रकर्तव्यं शास्त्रदृष्टेन कर्मणा ८
पूर्वाग्रतिसृरेखाभिरुत्तराग्राभिरेव च
रुद्रं विवस्वतं सोमं वरुणाग्नीन्द्रमेव च ९
अघोरेण समालिख्य प्रोक्षयेत्पुरुषेण तु
मथित्वाऽग्निं विनिक्षिप्य हृदयेन तु मन्त्रतः १०
वास्तोष्पतेति मन्त्रेण ह्युपस्थानं समाचरेत्
प्रागग्रैरुदगग्रैश्च दर्भैश्चैव परिस्तरेत् ११
अग्नेश्चैवाथ दिग्दर्भान्संपरिस्तीर्य देशिकः
तत्रैव सादयेत्पात्रानधोवक्त्रान्द्वयं द्वयम् १२
आज्यस्थालीं स्त्रुवं चैव प्रणीतां प्रोक्षणीं तथा
समित्कूर्चचरुं दर्वीमुपस्पृश्य कमण्डलुम् १३
एतानि द्वन्द्वरूपेण सादयेत्तु विशेषतः
प्रोक्षणीपात्रमादाय जलेनैव प्रपूरयेत् १४
वितस्तिमात्रमायामं मध्यमे ग्रन्थिसंयुतम्

अङ्गुष्ठानामिकाग्राभ्यामुदकोत्प्लवनं कुरु १५
पात्राणि प्रोक्षयेत्तेन चोत्पूर्य स्वस्तिमन्त्रतः
उद्धृत्य सर्वपात्राणि समिद्बन्धं विसर्जयेत् १६
ब्रह्माणं दक्षिणे स्थाप्य पूजयित्वा यथाक्रमम्
प्रणीतापात्रमादाय जलेनापूर्य मन्त्रतः १७
ऊर्ध्वतो दर्भसंयुक्तं प्रणीतां उत्तरे न्यसेत्
लोकपालान्यथास्थाने पूजयित्वा स्वनामतः १८
आज्याधिश्रयणं कृत्वा पश्चिमे चोत्तरेऽपि वा
व्यपोह्याङ्गारकान्विद्वांस्तत्रैवाज्यं विनिक्षिपेत् १९
द्वौ दर्भाग्रावभिद्योत्य द्वौ दर्भाग्रौ विनिक्षिपेत्
घृतमादाय हृदिना अभिद्योतनमारभेत् २०
ततः पवित्रमादाय पूर्ववच्छुद्धिमाचरेत्
विसृज्य ग्रन्थिं संप्रोक्ष्य चाग्निमध्ये विनिक्षिपेत् २१
तापयेत्तु स्रुवं पश्चाद्दर्भैर्मृज्य पुनः पुनः
अग्रमग्रेण संस्पृश्य मूलं मूलेन संस्पृशेत् २२
मध्यं मध्येन संस्पृश्य दर्भानग्नौ विनिक्षिपेत्
परिधिं न्यस्त्वा तत्रैव दक्षिणोत्तरपश्चिमे २३
आघारसमिधौ न्यस्त्वा चाग्नेयैशानकोणके
परिषेचनं ततः कृत्वा ह्यदितेन्वादिमन्त्रतः २४
आज्याक्तौ समिधौ हुत्वा ब्रह्मवृक्षसमुद्भवौ
आघारमाज्यभागं च जुहुयात्तदनन्तरे २५
प्रजापतये स्वाहा १ इन्द्राय स्वाहा २ अग्नये स्वाहा ३
सोमाय स्वाहा ४
सद्यादीशानपर्यन्तं दिक्षु मध्ये च होमयेत्
अहमस्मीति मन्त्रेण चरुं हुत्वा विशेषतः २६
वास्तोष्पतेति मन्त्रेण आज्यं हुत्वा विशेषतः
वास्तुदेवतानाम्ना तु होमं कुर्याद्घृतेन तु २७
ईशानाय स्वाहा १ पर्जन्याय स्वाहा २ जयन्ताय स्वाहा ३
महेन्द्राय स्वाहा ४ आदित्याय स्वाहा ५ सत्यकाय स्वाहा ६

भृशाय स्वाहा ७ अन्तरिक्षाय स्वाहा ८ अग्नये स्वाहा ९ पूषाय स्वाहा १० वितथाय स्वाहा ११ गृहक्षताय स्वाहा १२ यमाय स्वाहा १३ गन्धर्वाय स्वाहा १४ भृङ्गराजाय स्वाहा १५ मृशाय स्वाहा १६ पित्रे स्वाहा १७ दौवारिकाय स्वाहा १८ सुग्रीवाय स्वाहा १९ पुष्पदन्ताय स्वाहा २० वरुणाय स्वाहा २१ असुराय स्वाहा २२ शोषाय स्वाहा २३ पापयक्ष्मणे स्वाहा २४ रोगाय स्वाहा २५ वायवे स्वाहा २६ नागाय स्वाहा २७ मुख्याय स्वाहा २८ भल्लाटाय स्वाहा २९ सोमाय स्वाहा ३० मृगाय स्वाहा ३१ अदितये स्वाहा ३२ दितये स्वाहा ३३ आपाय स्वाहा ३४ आपवत्साय स्वाहा ३५ सवित्रे स्वाहा ३६ सावित्राय स्वाहा ३७ इन्द्राय स्वाहा ३८ इन्द्रजयाय स्वाहा ३९ रुद्राय स्वाहा ४० रुद्रजयाय स्वाहा ४१ समर्याय स्वाहा ४२ विवस्वते स्वाहा ४३ मित्राय स्वाहा ४४ पृथिवीधराय स्वाहा ४५ ब्रह्मणे स्वाहा ४६ चरक्यै स्वाहा ४७ विदार्यै स्वाहा ४८ पूतनायै स्वाहा ४९ पापराक्षस्यै स्वाहा ५० स्कन्धाय स्वाहा ५१ अर्यम्णे स्वाहा ५२ जृम्भकाय स्वाहा ५३ बलिपिञ्छाय स्वाहा ५४

एवं क्रमादग्नौ हुत्वा वै पायसं चरुम्
जयादिरभ्याधानं च राष्ट्रभृच्च हुनेत्क्रमात् २८
मिन्दाहुतिं च कूष्माण्डं प्रायश्चित्तं हुनेत्क्रमात्
हव्यवाहं पुरः स्तुत्य स्विष्टमग्नेति होमयेत् २९
स्विष्टान्ते कारयेद्धीमान्यदस्येति विशेषतः
परिषेचनं ततः कृत्वा प्रासावीरिति मन्त्रतः ३०
परिस्तरणपरिधीनाज्यात्क्तं तत्र दापयेत्
ब्रह्मणे तु वरं दद्याद् गौर्वा वै होममेव च ३१
प्रणीतोदकेन संप्रोक्ष्य चात्मानं पवमानकैः
एवं समाप्य होमं तु प्रणीताप्रत्यक्षमाचरेत् ३२
वास्तुहोममिति ख्यातं प्रतिष्ठां च ततः शृणु

इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे वास्तुहोमपटलः एकोनविंशतिः

विंशतिः पटलः
लिङ्गस्थापनविधिः

अथातः संप्रवक्ष्यामि लिङ्गस्थापनमुत्तमम्
अयने पक्षनक्षत्रे तिथिवारांशराशयः १
मुहूर्तं तत्र संवीक्ष्य स्थापनं च समारभेत्
पुष्यमासादि षण्मासं देवानां तु दिवा स्मृतम् २
तत्राषाढादि षण्मासं देवानां तु निशा स्मृता
दिवाकाले प्रकर्तव्यं लिङ्गस्थापनमुत्तमम् ३
सितपक्षे द्वितीया च तृतीया पञ्चमी तथा
षष्ठी च सप्तमी चैव दशमी च त्रयोदशी ४
एकादशी च तिथयः प्रतिपत्पौर्णमास्यपि
प्राजापत्यं च सौम्यं च शैवमादित्यसौम्यके ५
पौष्णा बृहस्पतिश्चैव मैत्रं वैष्णवनैर्ऋते
वायव्यं चाश्वयुक् त्वाष्ट्रं पैतृकं चोत्तरत्रयम् ६
एषु नक्षत्रयोगेषु प्रतिष्ठां च समाचरेत्
मेषकर्कटकं तौल्यं मकरं च विवर्जयेत् ७
शेषेषु स्थापयेल्लिङ्गं धनूराशिं च वर्जयेत्
गुरुभार्गवसौम्यानां वारः सोमस्य शोभनम् ८
एषां द्रेष्काणहोराश्च अंशकं दर्शनं शुभम्
एषामेवोदयं शस्तं वर्ज्यं सोमोदयं सदा ९
भानुमन्दारसोमाश्च त्रिषडायगताः शुभाः
सर्वे ग्रहा विवर्ज्याः स्युरष्टमस्था विशेषतः १०
षट्सप्तदशमं हित्वा शुक्राश्चान्ये च शोभनाः
उत्तराषाढसंयुक्तसोमवारस्तु शोभनः ११
हस्तश्चाश्वयुजं वह्ने बुधवारेण वर्जयेत्
मृगशीर्षोत्तरा चेह अन्यवारेण वर्जयेत् १२
वैष्णवं चैव तिष्यं च शुक्रवारेण वर्जयेत्
बुधयुक्ता द्वितीया च षष्ठीयुक्तो बृहस्पतिः १३

चन्द्र एकादशीयुक्तः प्राणहानिं च कारयेत्
सप्तमी पौष्णसंयुक्ता वह्निवद्दहते प्रजाम्  १४
अन्धं षण्ढं च नक्षत्रं वर्ज्यं स्थापनकर्मणि
पांसुलोहितवर्षेषु मेघानां स्तनितेषु च  १५
उल्कापाते दिशां दाहे ग्रहणे चन्द्रसूर्ययोः
षडशीतिमुखे चैव स्थापनं न समाचरेत्  १६
प्रतिष्ठादिवसात्पूर्वे नवमे सप्तमेऽपि वा
अङ्कुराण्यर्पयेद्धीमान् शास्त्रदृष्टेन कर्मणा  १७
पालिका घटिका चैव शरावं च त्रिधा भवेत्
प्रत्येकं द्वादशं गृह्य ततः स्थापनमारभेत्  १८
मण्डपे प्रासादाग्रे तु स्थण्डिलं कुरु देशिक
प्रागग्रं दशसूत्राणि उदगग्रं तथैव च  १९
मध्ये चैकपदं त्यक्त्वा लोपयेदभितोऽष्टकम्
चतुर्दिक्षु चतुर्द्वारं पदमेकं परित्यजेत्  २०
द्वारस्थापनपार्श्वे तु पदमेकं परित्यजेत्
मध्यमे तु पदे कुर्यात्स्थण्डिलं पद्मसंनिभम्  २१
आग्नेयादिसु कोणेषु त्रिषु त्रिषु पदेष्वथ  २२
स्थण्डिलं कारयेद्धीमान्प्रत्येकं प्रस्थशालिना
आग्नेयादिषु कोणेषु पञ्चपञ्चपदेष्वथ  २३
स्थण्डिलं कारयेत्तत्र द्वारस्थपदमध्यमे
तण्डुलैः शोभितं कृत्वा तिलदर्भैः परिस्तरेत्  २४
गन्धादिना समभ्यर्च्य ततः स्थापनमारभेत्
कर्णिकायां न्यसेत्कुम्भं वारुणोदकपूरितम्  २५
सकूर्चं सापिधानं च सवस्त्रं हेमसंयुतम्
पूजयित्वा यथान्यायं वारुणं मन्त्रमुच्चरन्  २६
पायसान्नं ददेद्धीमान् ताम्बूलं च निवेदयेत्
आग्नेयादिपदे न्यस्त्वा द्वादशघटिकान्तिके  २७
आदित्ये भ्रंशवितथे याम्यायां भृङ्गराजके
सुग्रीवे वरुणे शोषे मुख्ये सोमपदेषु च  २८

अदितौ जयन्ते स्थाप्य पालिका च विशेषतः
शेषस्थाने शरावाणि न्यसेद्वै देशिकोत्तमः २९
ब्रह्मादिष्णिवन्द्रदैवत्यान्पात्रान्मृत्कार्षपूरितान्
बीजानि वापयेत्पश्चात्पवमानमुदीरयन् ३०
तिलसर्षपमुद्गानि माषशिम्बाढकानि च
कुलुत्थं सप्तबीजानि वापयेद्धृदयेन तु ३१
पूजयित्वा यथान्यायं कुम्भतोयेन सेचयेत्
पिधाय सर्वपात्राणि स्वनुगुप्ते निधापयेच्च ३२
यागार्थमण्डपं कुर्यात्प्रासादस्याग्रतोऽन्तिके
सूत्रेण सुमितं कृत्वा भूमिशल्यं विवर्जयेत् ३३
द्वात्रिंशद्धस्तविस्तारं मण्डपं चोत्तमं स्मृतं
चतुष्षष्टिस्तम्भयुक्तं द्वादशं तालमुछ्रयम् ३४
मण्डपस्य तु तन्मध्ये चतुर्गात्राणि संत्यजेत्
विंशद्धस्तप्रविस्तारं मण्डपं मध्यमं भवेत् ३५
षट्त्रिंशद्गात्रसंयुक्तं दशतालसमुच्छ्रयम्
चत्वारि मध्यस्तम्भानि त्यजेद्वै देशिकोत्तमः ३६
हस्तैर्द्वादशभिर्युक्तं मण्डपं चाधमं भवेत्
अधमत्रयलिङ्गस्य मण्डपं चाधमं भवेत् ३७
मण्डपस्य त्रिभागैकं मध्यमे वेदिका भवेत्
अरत्निमात्रमुत्सेधं दर्पणोदरसंनिभम् ३८
वेद्यधश्चोपवेदीं च कल्पयेत्तु समन्ततः
विस्तारमष्टमाङ्गुल्यमुत्सेधं स्यात्तदर्धकम् ३९
द्व्यङ्गुलद्व्यङ्गुलं हीनं मध्यमस्याधमस्य तु
कुण्डवेदिकयोर्मध्ये त्यक्त्वा हस्तद्वयं पुनः ४०
चतुरश्रं धनुर्वृत्तं पद्मं पूर्वादिदिक्षु च
योनित्रिकोणपञ्चाश्रमष्टाश्रं स्याद्विदिक्षु वै ४१
उत्तमत्रयलिङ्गस्य द्वात्रिंशत्कुण्डमारभेत्
मध्यमत्रयलिङ्गस्य चतुर्विंशत्कुण्डमुच्यते ४२
अधमत्रयलिङ्गस्य कुण्डान्यष्टौ प्रकल्पयेत्

देवेन्द्रेशानयोर्मध्ये कुण्डं प्राधानिकं कुरु ४३
हस्तमात्रप्रविस्तारम् एवं मात्राङ्गुलेन तु
मेखलात्रयसंयुक्तमेकैकं तु त्रयाङ्गुलम् ४४
नाभियोनिसमायुक्तं निम्नोन्नतविवर्जितम्
अश्वत्थपत्रवद्योनिः नाभिः पद्माकृतिर्भवेत् ४५
त्र्यङ्गुलं योनिविस्तारं त्रिगुणं दैर्घ्यमुच्यते
चतुरङ्गुलविस्तारं पद्मं कुण्डस्य मध्यमे ४६
कुर्याद्वि विष्टरं कुण्डे परितोऽष्टाङ्गुलेन तु
दर्पणोदरसंकाशं वितानोपरिशोभितम् ४७
चतुर्द्वारसमायुक्तं मण्डपं तोरणान्वितम्
पञ्चहस्तसमुत्सेधं विस्तारं स्यात्तदर्धकम् ४८
शूलं हस्तप्रमाणं स्यान्नाहं तस्य षडङ्गुलम्
अधमाधममेतद्धि वक्ष्यते तत्परं क्रमात् ४९
पञ्चहस्तं समारभ्य यावत्स्यान्नवहस्तकम्
तावत्तालाधिकं कुर्यात्तत्तदर्धं तु विस्तृतम् ५०
तस्मात्तद्द्व्यङ्गुलाधिक्यं नाहं प्रत्येकमाचरेत्
नवधा तोरणं प्रोक्तं नवलिङ्गे यथाक्रमम् ५१
अष्टदिक्षु ध्वजानष्टौ लम्बयेत्तु प्रदक्षिणम्
नीलवर्णं तु पूर्वस्यां आग्नेय्यां रक्तवर्णकम् ५२
कृष्णवर्णं तु याम्यायां धूम्रवर्णं तु नैर्ऋते
शङ्खाकृतिनिभाकारं वारुण्यां दिशि लम्बयेत् ५३
वायव्यां शाबलं ज्ञेयं शातकुम्भाभमुत्तरे
ऐशान्यां पीतवर्णं तु तेषां लक्षणमुच्यते ५४
विंशत्यङ्गुलविस्तारं त्रिदशाङ्गुलमायतम्
विस्तारेण समं पुच्छं तदर्धं शिखरं भवेत् ५५
ध्वजमध्ये लिखेद्धीमान्दिग्गजांश्च विशेषतः
ऐरावतं पुण्डरीकं पुष्पदन्तं तु कौमुदम् ५६
अञ्जनं वामनं चैव सुप्रदीपं च सर्वकम्
दर्भमालाभिरावृत्य समन्तान्मण्डपं ततः ५७

पञ्चदर्भैस्तु संयोज्यं हस्तमात्रं प्रलम्बकम्
पर्वे पर्वे तु संयोज्य रज्जुं कुर्यान्मनोरमम् ५८
मङ्गलाष्टकरूपाणि उपवेद्युपरि न्यसेत्
द्वादशाङ्गुलमायामं विस्तारं स्यात्तदर्धकम् ५९
अधस्तात्पद्मपीठं स्याच्चतुरङ्गुलमानतः
तन्मध्यमे लिखेद्धीमान्दर्पणं पूर्णकुम्भकम् ६०
वृषभं भेरीमत्स्यं च श्रीवत्सं वज्रदीपकम्
सुवस्त्रपट्टदेवाङ्गैर्मुक्तादामैर्विभूषयेत् ६१
मण्डपस्योत्तरे पार्श्वे लक्षणोद्धारणाय च
मण्डपं कारयेद्धीमान्पूर्वोक्तार्थमनुस्मरन् ६२
तन्मध्ये वेदिकां कुर्याल्लिङ्गायामप्रमाणतः
तालमात्रं समुत्सेधं दर्पणोदरसंनिभम् ६३
तस्यास्तु पश्चिमे स्थाने स्नानश्वभ्रं प्रकल्पयेत्
लिङ्गानुरूपमन्तरे दारुपीठसमन्वितम् ६४
उत्तरे जलमार्गः स्यादवटेन समन्वितम्
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ६५
शिल्पिनं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः
संयतः शिल्पिभिः सार्धं गच्छेत्कर्मकुटीं बुधः ६६
लिङ्गं प्रक्षालयेद्धीमानष्टमृत्सलिलेन तु
पञ्चगव्यैः कषायैश्च स्नापयेद्गन्धतोयकैः ६७
रक्तवस्त्रेण संवेष्ट्य दर्भैः पुष्पैर्विचक्षणः
पिण्डिकां स्थापयेत्तत्र ह्युमाबीजमनुस्मरन् ६८
रथं संपूज्य गन्धाद्यैरलंकृत्य विशेषतः
तस्मिन्नारोपयेल्लिङ्गं सर्वातोद्यसमन्वितम् ६९
लक्षणोद्धारणार्थाय नयेदुत्तरमण्डपे
स्थण्डिलं कारयेद्विद्वान्शालिभिस्तण्डुलैः सह ७०
तिलदर्भैः परिस्तीर्य लिङ्गं तत्रैव शाययेत्
राक्शिरस्कं शयित्वा तु परितोऽष्टघटान्यसेत् ७१
सकूर्चान्सापिधानांश्च सवस्त्रान्वारिपूरितान्

लोकपालाधिदैवत्यान्पूजयेत्स्वस्वनामतः ७२
लिङ्गमूले न्यसेत्पीठं पीतवस्त्रेण वेष्टयेत्
वेदिकायास्तु पूर्वस्यां स्थण्डिले होममाचरेत् ७३
आपो राजेति मन्त्रेण इदं विष्णिवति मन्त्रतः
ब्रह्मजज्ञानमन्त्रेण घृतेनाष्टशतं हुनेत् ७४
पृथगष्टशतं हुत्वा स्विष्टान्तं हि समाचरेत्
अधिवसेदेव रात्रौ लिङ्गे कौतुकमाचरेत् ७५
पूजाभागे हृदा बध्वा कौतुकं शिल्पिने ददेत्
प्रभाते सुमुहूर्ते तु लक्षणोद्धारणं कुरु ७६
पायसं घृतसंयुक्तं शिरःस्थाने बलिं ददेत्
मुद्गान्नं घृतसंयुक्तं दध्यन्नं गुलसंयुतम् ७७
लिङ्गमानप्रमाणेन रेखाविस्तारमुच्यते
पूजाभागोच्छ्रयं सर्वं भज्य षण्णवतिक्रमात् ७८
एकभागं यवं विद्यात्तन्मानं सूत्रविस्तृतम्
अस्मादन्यप्रकारेण वक्ष्यते विधिनाऽधुना ७९
उत्तमोत्तमलिङ्गस्य सूत्रं च यवकं भवेत्
शेषाणां चैव लिङ्गानां यवार्धं प्रतिवर्धयेत् ८०
सूत्रविस्तारमेवं स्यात्खातं तन्मानमेव च
कन्यावर्तितसूत्रेण घटिकापूजितेन तु ८१
विष्कम्भं मध्यमं कृत्वा तत्र सूचीं विनिक्षिपेत्
भ्रामयेत्तु शिरस्सूत्रं मस्तकान्तं विचक्षणः ८२
नागोष्ठेन नलोष्टेन नवाङ्गारेण वञ्चना
ब्रह्मभागं चतुर्दिक्षु मध्यं ज्ञात्वा विशेषतः ८३
अष्टाश्रं मध्यमं कृत्वा गैरिकाक्तेन पातयेत्
ब्रह्मभागं समारभ्य यावल्लिङ्गस्य मस्तकम् ८४
ततश्चास्फोटयेन्मध्ये रेखा सा मध्यमा स्मृता
रेखा लेखान्तरं लक्ष्य ततः सूत्रं समालिखेत् ८५
+++++++++उभयोः पार्श्वयोरपि
सूत्रमास्फालयेद्विद्वानष्टादशयवान्तरम् ८६

तयोरन्तरमानेन चतुर्दिक्षु च लेखयेत्
अष्टाश्रं हि समारभ्य रन्ध्रभागे तु लक्षयेत्  ८७
मुखभागस्य तन्मध्ये नालं कुर्यात्सलक्षणम्
यवत्रयान्तरं नालं सूत्रं स्यादुभयोरपि  ८८
दृढसूत्राविति ज्ञेयौ सीमायाश्च बहिः स्थितौ
विस्तारं यवमात्रं स्यात्खातं वै तत्प्रमाणतः  ८९
पूजाभागं त्रिधा कृत्वा द्विभागे लक्षणं भवेत्
द्विभागं दशधा कृत्वा मुकुलं चैकभागिकम्  ९०
विस्तारं तत्प्रमाणं स्यादधिकं स्याद्यवद्वयम्
क्रमेण कृशतां कृत्वा मुकुलाग्रं तु सन्धयेत्  ९१
तयोरेव दृढं सूत्रमष्टांशं नालदैर्घ्यकम्
मुकुलमूलादारभ्य यावद्बिन्दुविलक्षितम्  ९२
तयोः संगमनं कुर्यादुभयोः पार्श्वयोरपि
बिन्दोरेतद्गतं सूत्रं यावत्पृष्ठान्तगोचरम्  ९३
दृढसूत्राविमौ ज्ञेयौ मणिरेखाविति स्मृतौ
प्रथमं लक्षणं प्रोक्तं द्वितीयं लक्षणं शृणु  ९४
पूजाभागसमस्तं तु भज्य षोडशधा पुनः
अधोभागद्वयं त्यक्त्वा चोर्ध्वे चत्वारि संत्यजेत्  ९५
मुकुलं चैकभागं स्यान्नवकं नालमेव च
सव्यापसव्यसूत्रौ तु पूर्ववल्लेखयेद्बुधः  ९६
पूजाभागसमस्तं तु भज्य द्वादशधा पुनः
ऊर्ध्वे भागत्रयं त्यक्त्वा भागमेकमधस्त्यजेत्  ९७
मुकुलं चैकभागं स्यान्नालं सप्तांशमेव तु
मणिरेखाद्वये कार्ये पूर्वोक्तविधिना सह  ९८
तृतीयं लक्षणं प्रोक्तं चतुर्थं लक्षणं शृणु
पूजाभागं त्रिधा कृत्वा एकैकं तु त्रिधा भवेत्  ९९
ऊर्ध्वभागद्वयं कृत्वा भागमेकमधस्त्यजेत्
शेषं तु पूर्ववत्कार्यं सर्वशास्त्रविशारदैः  १००
पद्माभं मुकुलाभं वा खड्गाकारं त्रिकोणकम्

करिनेत्रोपमं कार्यं करपुटाकृतिं तु वा १०१
छत्राकारं त्रिशूलाभं लिङ्गाकारमथापि वा
दृढसूत्रं समालिख्य धनुसूत्रं प्रमार्जयेत् १०२
नालं वै रुद्रदैवत्यं वामरेखा तु वैष्णवी
दक्षिणे ब्रह्मरेखा स्यात्त्रिसूत्रस्याधिदेवताः १०३
हेमसूच्या लिखेद्विद्वान्तत्तन्मन्त्रमुदाहरन्
आपो राजेति मन्त्रेण नालसूत्रद्वयं लिखेत् १०४
इदं विष्णिवति मन्त्रेण विष्णुरेखां समालिखेत्
ब्रह्मजज्ञानमन्त्रेण ब्रह्मरेखां समालिखेत् १०५
नकृशा न च विस्तीर्णा न वक्रा न च खण्डिता
न निम्ना न समा ऋज्वी सहजा इव संस्थिता १०६
मधुना तर्पयेद्धीमान्मधुवातेति मन्त्रतः
घृतं मिमिक्षेति मन्त्रेण तरयेद्वै घृतेन तु १०७
ततः शय्यां शलाकां च हेमसूचीमथान्यकम्
तत्सर्वं शिल्पिने दत्त्वा ततः स्नानं समारभेत् १०८
स्नानश्वभ्रे न्यसेत्पीठं यथाविभवशक्तितः
हेमं वा रजतं ताम्रं कौशेयं दारुजं तथा १०९
तस्मिल्लिङ्गं समारोप्य आचार्यो मूर्तिपैः सह
नृत्तगेयसमायुक्तं सर्वातोद्यसमन्वितम् ११०
अर्घ्यं दत्वा तु शिरसि स्नाप्य गन्धोदकेन तु
सकलीकृत्य मतिमान्पञ्चगव्यकुशोदकैः १११
पञ्चब्रह्म समुच्चार्य स्नाप्य लिङ्गं कषायकैः
भस्मना चाष्टमृद्भिश्च उदकैः शकृता पुनः ११२
एतान्विन्द्रेति मन्त्रेण शुद्धतोयेन सेचयेत्
यवगोधूमचूर्णैश्च हरिद्रातिलचूर्णकैः ११३
पत्रतोयेन संस्नाप्य पवमानमुदीरयन्
पाद्यमाचमनं चार्घ्यं वक्त्रमन्त्रेण दापयेत् ११४
चन्दनागरुगन्धैश्च विलिप्य शिवमादरात्
पुष्पं दत्वा हृदा मन्त्री दद्याच्छीतारिधूपकम् ११५

प्रच्छाद्य वस्त्रयुग्मेन हृदयेन तु मन्त्रतः
पिण्डिकां स्नापयेदेवमावेष्ट्याहतवस्त्रकैः ११६
आरोप्य मूर्तिपैः सार्धं रथे लिङ्गं तु देशिकः
पिण्डिकां तु समारोप्य प्रवेश्याथ जलाशयम् ११७
जलमध्ये प्रपां कृत्वा वितानध्वजभूषितम्
दर्भमालासमायुक्तं पुष्पदामप्रलम्बितम् ११८
चतुर्गात्रस्य मध्ये तु प्राक्शिरस्कं तु शाययेत्
नृत्तगेयसुवाद्यं च सदा कालं समाचरेत् ११९
एकरात्रं द्विरात्रं वा त्रिरात्रं वा जलोषितम्
आरोप्य सुदिने पश्चात्स्नानवेद्युपरि न्यसेत् १२०
कृत्वा तु पूर्ववच्छुद्धिं पिण्डिकासहितं बुधः
रक्तवस्त्रेण संवेष्ट्य लिङ्गमामस्तकान्तकम् १२१
पीठं च वेष्टयित्वा तु स्यन्दने स्थाप्य देशिकः
आलयं तु परिभ्राम्य नयेन्मण्डपमध्यतः १२२
पर्यग्निकरणं कृत्वा पुण्याहं तत्र कारयेत्
स्थण्डिलं कारयेद्वेद्यामष्टद्रोणैश्च शालिभिः १२३
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि
मध्यमे पद्ममालिख्य दलाष्टकसमन्वितम् १२४
नवशक्तिं तु तत्रैव पूज्य गन्धादिना पुनः
दर्भैश्च संपरिस्तीर्य तिललाजसमन्वितम् १२५
पूर्वाग्रमुत्तराग्रं च स्थण्डिलोपरि विन्यसेत्
चर्मजं रोमजं चैव मुण्डजं चाण्डजं क्रमात् १२६
उपर्युपरि विन्यस्य यथा च परिपूरणम्
उमागायत्रिमन्त्रेण शयनं पूजयेद्बुधः १२७
लिङ्गं तु प्राङ्मुखं कृत्वा ब्रह्माङ्गानि कला न्यसेत्
त्रितत्त्वं विन्यसेत्पश्चात्त्रितत्त्वं हृदयैरपि १२८
मूर्तिवक्त्राणि नेत्राणि विद्याङ्गानि च विन्यसेत्
प्राक्शिरस्कमधःसूत्रं शयने शाययेच्छिवम् १२९
सद्योमन्त्रेण चावाह्य स्थापयेद्वाममन्त्रतः

स्वागतं वामदेवेन पाद्यार्घ्यं हृदयेन तु १३०
अघोरेण तु सांनिध्यं संमुखं पुरुषेण तु
पाद्यं दत्वा हृदा मन्त्री शिरसाचमनं ददेत् १३१
पुरुषेण ददेदर्घ्यं पुष्पमीशानमन्त्रतः
शीतारिधूपमादद्यात्कवचेन विचक्षणः १३२
हविर्निवेदयेत्पश्चाद्धृदयेन तु मन्त्रतः
ताम्बूलं दापयेद्विद्वान्पुरुषेण तु मन्त्रतः १३३
कौतुकं बन्धयेल्लिङ्गे शिरःस्थाने हृदा बुधः
हैमैर्वा राजतैर्वापि सूत्रैः कार्पासकैरपि १३४
मुकुलीपद्ममुद्रां च दर्शयेत्पञ्चवक्त्रिकाम्
पिण्डिकामधिवसेन्मूले शयनस्योपरि क्रमात् १३५
पौर्विका पौनःपुन्यं च सहजा च त्रिधा स्मृताः
उपलिङ्गवशात्पीठं पूर्वमेव तु कल्पितम् १३६
तत्पौर्विकमिति ज्ञेयं सन्ततं सहजं स्मृतम्
पूर्वकाले तु संस्थाप्य लिङ्गं पिण्डिकया सह १३७
वैकल्पनेन या पश्चाद्योजिता पौन्यका स्मृता
गेहे चाधिवसेत्पौर्वे लिङ्गेन सहजेन सह १३८
मण्डपेऽधिवसेत्पौन्यं त्रिधा चैवाधिवासनम्
कौशेयास्तरणं पूर्वं वस्त्रेणास्तरणं तथा १३९
नवशक्तिसमोपेतं पूजयित्वा यथाविधि
पीठं चाधिवसेच्छुद्धस्नानं कृत्वा यथाविधि १४०
गौरीबीजं समुच्चार्य गन्धपुष्पादिभिर्यजेत्
रक्तवस्त्रेण संवेष्ट्य लिङ्गमुद्रां प्रदर्शयेत् १४१
पादाधारशिला चैव नन्द्यावर्तशिलापि वा
पिण्डिकां विन्यसेत्पश्चात्पूज्य ब्रह्म हृदा बुधः १४२
शिरःप्रदेशे लिङ्गस्य शिवकुम्भं च विन्यसेत्
ससूत्रं सापिधानं च सकूर्चं वस्त्रवेष्टितम् १४३
पूरितः स्याच्चतुर्विंशत्प्रस्थतोयैः सुगन्धिभिः
शिवकुम्भमिदं प्रोक्तं सरत्नं साधिदैवतम् १४४

कुम्भमध्ये न्यसेद्बीजं प्रासादाख्यं च गन्धितम्
कूटं भान्तं च यान्तं च मान्तमौकारसंयुतम्  १४५
बिन्दुनादसमायुक्तं शिवमन्त्रमिति स्मृतम्
क्षकारं पृथिवी ज्ञेया मकारो वारुणः स्मृतः  १४६
रेफश्चैवानलो ज्ञेयो यकारोऽनिल उच्यते
व्योम औकारमेवं स्यात्पञ्चभूताक्षरं परम्  १४७
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः
पञ्चभूताधिदैवत्यं भुक्तिमुक्तिफलप्रदम्  १४८
कालाग्न्यादिशिवान्तं स्यान्मन्त्रैः सर्वं व्यवस्थितम्
ज्ञात्वा तु सर्वगं बीजं छेदयेत्पशुपाशकम्  १४९
ध्यात्वा सदाशिवं रूपं पञ्चमूर्तिभिरन्वितम्
दिव्याम्बरधरं देवं दिव्याभरणभूषितम्  १५०
शुद्धस्फटिकसंकाशं कुन्देन्दुधवलप्रभम्
कुण्डलैः कर्णगैर्हारैर्यज्ञसूत्रविभूषितम्  १५१
शूलं परशुवज्रं च खड्गाभयं च दक्षिणे
पाशाङ्कुशं च वह्निं च खेटकं वरदं परे  १५२
कुम्भे ध्यात्वा विशेषेण पद्ममुद्रां प्रदर्शयेत्
आवाहनादिकं सर्वं पूर्वोक्तविधिना कुरु  १५३
शिवमन्त्रं समुच्चार्य गन्धपुष्पादिनार्चयेत्
वर्धनीं विन्यसेद्वामे द्रोणतोयप्रपूरिताम्  १५४
सकूर्चां सापिधानां च सवस्त्रां हेमसंयुताम्
कान्तान्तं यान्तसंयुक्तं औकारस्वरसंयुतम्  १५५
बिन्दुनादसमायुक्तं वर्धनीमध्यमे न्यसेत्
ध्यात्वा गणाम्बिकां देवीं पीनोन्नतपयोधराम्  १५६
श्यामाभां द्विभुजां शान्तां सर्वाभरणभूषिताम्
दुकूलवसनां देवीं ध्यात्वा वर्धनीमध्यमे  १५७
उमागायत्रिमन्त्रेण गन्धपुष्पादिनार्चयेत्
दर्शयेल्लिङ्गमुद्रां च नमस्कारं मनोरथम्  १५८
अभितः कलशानष्टौ द्रोणार्धोदकपूरितान्

अष्टविद्येश्वरैर्युक्तान्सकूर्चान्सापिधानकान् १५९
सवस्त्रान्पल्लवैर्युक्तान्स्थापयेत्साधिदैवतान्
हेमशूलसमायुक्तान्हेमकूटसमायुतान् १६०
स्वनामाद्यक्षरं बीजं बिन्दुनादसमन्वितम्
घटयोर्मध्यमे न्यस्त्वा तत्तन्मूर्तींश्च भावयेत् १६१
त्रिनेत्रान् चतुर्भुजान्देवान् जटामकुटधारिणः
अनन्तादिशिखण्ड्यन्तानष्टविद्येश्वरान्न्यसेत् १६२
तत्तन्मन्त्रं समुच्चार्य गन्धपुष्पादिना यजेत्
उपवेद्युपरि न्यस्त्वा लोकपालाधिदैवतान् १६३
कलशान्लक्षणोपेतान्हेमवस्त्रसमन्वितान्
ससूत्रान्सापिधानांश्च सकूर्चान्वारिपूरितान् १६४
तत्तन्मन्त्रं समुच्चार्य पूजयित्वा यथाविधि
अष्टमङ्गलरूपाणि उपवेद्युपरि न्यसेत् १६५
पूजयित्वा यथान्यायं तोरणादिघटान्न्यसेत्
द्वारकुम्भं तथा स्थाप्य द्वारं द्वारं प्रति द्वयम् १६६
नन्द्यादिपशुपत्यन्तं तत्तत्कुम्भे तु योजयेत्
कुर्यादध्ययनं दिक्षु जपेन्मन्त्रं विदिक्षु वै १६७
ऋग्वेदं दिशि पूर्वस्यां यजुर्वेदं तु दक्षिणे
साममुत्तरदेशे तु पश्चिमेऽथर्वमेव च १६८
प्रासादमीशकोणे तु अघोरं वह्निगोचरे
नैर्ऋत्यां मृत्युबीजं तु उमाबीजं तु वायवे १६९
आचार्यो मूर्तिपैः सार्धं होमं कुयाद्विशेषतः
समिदाज्यचरुं लाजान्सक्तुमिद्धार्थमाषकान् १७०
यवनीवारश्रीपत्रतिलास्त्वेकादशा इमे
अश्वत्थोदुम्बरप्लक्षवटं पूर्वादिदिक्षु च १७१
शमीखादिरश्रीवृक्षमयूराश्च विदिक्षु च
पलाशं तु प्रधानस्य सर्वेषामिध्ममुच्यते १७२
स्वदिक्स्था मूर्तिपाः सर्वे सर्वशम्बरसंयुताः
शिवाग्निं जनयेत्पूर्वं आचार्यो विधिना सह १७३

सोष्णीषश्चोत्तरीयश्च दिव्यगन्धानुलेपनः
कुण्डं तु शोधयेत्पूर्वं क्षालनं तदनन्तरम्  १७४
तृतीयं शोषणं कृत्वा चतुर्थं पचनं भवेत्
उल्लेखनं पुरास्त्रेण वर्मणाभ्युक्षणं स्मृतम्  १७५
रेखाश्च प्राङ्मुखास्तिस्त्रो ब्राह्मरौद्राख्यवैष्णवाः
उत्तराभिमुखा ह्येका सा शिवा तु न संशयः  १७६
गन्धपुष्पाक्षतैः पूज्य शिवाग्निं जनयेद्गुरुः
मथित्वा वह्निमादाय श्रोत्रियागारजं तु वा  १७७
शरावे ताम्रपात्रे वा निक्षिप्याग्निं परिग्रहेत्
अस्त्रमन्त्रेण संशोद्य कवचेनावकुण्ठयेत्  १७८
बीजमुख्येन मन्त्रेण अमृतीकरणं कुरु
अग्निबीजेन चाभ्यर्च्य गन्धपुष्पादिभिः क्रमात्  १७९
विष्टरं कुण्डमध्ये तु हृदयेन प्रकल्पयेत्
स्थाप्य वागीश्वरीं तत्र ऋतुस्नातां विशेषतः  १८०
भ्रामयेत्तु त्रिधा चाग्निं योनिमार्गेण निक्षिपेत्
संस्थाप्य सद्यमन्त्रेण प्रशान्तेति त्रिधा स्मरन्  १८१
गर्भाधानमिदं प्रोक्तं ततः पुंसवनं शृणु
वामदेवेन शिरसा गन्धैरभ्यर्च्य देशिकः  १८२
भवेत्पुंसवनं ह्येतत्सीमन्तं तु ततः शृणु
पुष्पं दद्याद्विशेषेण शिरसा बहुरूपिणा  १८३
वक्त्रेण वर्मयुक्तेन अर्घ्यं दद्यात्सुजातकम्
ईशानं नेत्रयुक्तेन धूपदीपं प्रदापयेत्  १८४
नामकर्म इति रोक्तं पञ्चसंस्कारमुच्यते
पाद्यमाचमनं चार्घ्यं गन्धपुष्पं च धूपकम्  १८५
हृदयेनैव मन्त्रेण दद्यात्सर्वं विशेषतः
शिवाग्नेरग्निमादाय अग्निकुण्डेषु योजयेत्  १८६
प्रागग्रैरुदगग्रैश्च कुण्डं दर्भैः परिस्तरेत्
आज्यस्थालीं प्रणीतां च प्रोक्षणीं समिधः कुशान्  १८७
स्रुक्स्रुवौ च चरुस्थालीं द्वन्द्वरूपेण साधयेत्

प्रोक्षणीपात्रमादाय पूरयेदुदकेन तु १८८
तिरः पवित्रेणापूर्य कुशाग्रं तत्र निक्षिपेत्
पात्रान्संप्रोक्षयेत्तूष्णीमुत्तानानि च सर्वशः १८९
ब्रह्माणं दक्षिणे स्थाप्य कूर्चं तत्रैव निक्षिपेत्
विष्णुं वै वामतः स्थाप्य प्रणीतां तत्र निक्षिपेत् १९०
पूर्वपश्चिमकुण्डे तु उत्तराभिमुखः स्थितः
अन्येषु प्राङ्मुखो भूत्वा होमं कुर्याद्विशेषतः १९१
आज्यशुद्धिं ततः कृत्वा पर्यग्निं प्लवनादिभिः
स्रुचः संस्कारमेवं तु स्रुवसंस्कारमेव च १९२
तिस्रः परिधयः स्थाप्य पश्चिमे दक्षिणोत्तरे
अग्नीशानदिशि स्थाप्यावाघारसमिधावुभौ १९३
अदितेनुमन्यस्व मन्त्रेण परिषेचनमारभेत्
आघारमाज्यभागं च विदिक्षु जुहुयाद्बुधः १९४
पुरुषाघोरसद्यैश्च वामेन जुहुयाद्दिशि
ईशानं मध्यतो हुत्वा वह्निबीजं दशं हुनेत् १९५
क्षुरिकेणोद्घाटयेद्वक्त्रमन्त्रेणैव तु निष्कृतिः
शिवाग्निजनितो ह्येवं पश्चान्निक्षिप्य विष्टरम् १९६
आवाहनादि यत्कर्म पूर्वोक्तविधिना सह
शिवाग्नौ शिवमावाह्य पञ्चावरणसंयुतम् १९७
भवश्च पूर्वदिग्भागे आग्नेय्यामुग्र एव च
शर्वश्च दक्षिणे कुण्डे वामस्तु नैर्ऋते ततः १९८
रुद्रश्च पश्चिमे भागे भीमो वै वायुगोचरे
पशुपतिश्चोत्तरे कुण्डे ऐशान्यामीश एव च १९९
त्रिणेत्राश्चतुर्भुजाश्चैव जटामकुटधारिणः
कुण्डमध्ये न्यसेद्देवान् तद्बाह्ये च वसवः स्थिताः २००
तद्बाह्ये मरुतश्चैव लोकपालाश्च तद्बहिः
लोकपालविहीनः स्यान्मध्यमे होमकर्मणि २०१
मरुतो वसवो हीनाः कन्यसे होमकर्मणि
कुण्डाधिदेवताः सर्वा विन्यसेत्कुण्डमध्यमे २०२

पाद्यादिदीपपर्यन्तमर्चयेत्तु विधानतः
शिवमन्त्रं समुच्चार्य शिवाग्नौ जुहुयाच्छतम्  २०३
अन्येषां देवतानां च तत्तन्मन्त्रैर्दशाहुतिः
ब्रह्माङ्गैश्च ततो हुत्वा प्रत्येकं तु शताहुतिः  २०४
त्रियम्बकेन मन्त्रेण समिधाहुतिमाचरेत्
सहस्रं वा तदर्धं वा तदर्धार्धमथापि वा  २०५
शतमष्टोत्तरं वापि प्रत्येकं जुहुयात्क्रमात्
आज्यं हुत्वा हृदा मन्त्री पूर्वसंख्याक्रमेण तु  २०६
घृतं मिमिक्षेति मन्त्रेण जुहुयात्सङ्ख्यया घृतम्
चरुं हुत्वा तु सद्येन देवस्यत्वा चरुं हुनेत्  २०७
शिरसा तु लाजं हुत्वा एषामीशेति मन्त्रतः
सक्तुं वामेन मन्त्रेण आपो राजेति मन्त्रतः  २०८
सिद्धार्थं शिखया हुत्वा यो रुद्रस्तदनन्तरम्
माषं हुत्वा तु घोरेण एष ते रुद्र मन्त्रतः  २०९
कवचेन यवं हुत्वा त्र्यम्बकेनैव मन्त्रतः
नीवारं पुरुषेणैव आप्यायस्वेति मन्त्रतः  २१०
अस्त्रेण जुहुयात्पत्रमप्सु मे सोम इत्यपि
तिलान्हुत्वेशमन्त्रेण यतयत्तेति मन्त्रतः  २११
द्रव्यान्ते व्याहृतिं हुत्वा स्पृशेल्लिङ्गस्य मस्तकम्
तदन्ते होमयेद्धीमान्गौरीं ब्रह्माङ्गविद्यया  २१२
गौरीगायत्रीमन्त्रेण गौरीमिमायेति मन्त्रतः
हुत्वा हुत्वा स्पृशेत्पीठं पञ्चविंशतिसंख्यया  २१३
ब्रह्मजज्ञानमन्त्रेण हुत्वा ब्रह्मशिलां स्पृशेत्
गर्भगेहस्य तन्मध्ये वास्तुहोमं समाचरेत्  २१४
पुण्याहं वाचयित्वा तु दद्यादर्घ्यं विशेषतः
एकरात्रं द्विरात्रं वा त्रिरात्रं वाधिवासयेत्  २१५
एवं जागरणं रात्रौ नृत्तगेयसमन्वितम्
आचार्यो मूर्तिपैः सार्धं स्नानं कृत्वा विशेषतः  २१६
न्यासं कृत्वा यथान्यायं सोष्णीषः सोत्तरीयकः

पञ्चाङ्गभूषणैर्युक्तो वस्त्राङ्गुलिविभूषितः २१७
हैमिकैर्यज्ञसूत्रैश्च हैमिकैः कटिसूत्रकैः
अधमं विंशनिष्कं स्याद्द्विगुणं मध्यमं भवेत् २१८
उत्तमं त्रिगुणं प्रोक्तमाचार्यस्य तु दक्षिणा
पिण्डिकास्थापकस्यार्धं अष्टांशं मूर्तिपस्य तु २१९
द्विगुणं वास्तुहोमस्य अर्धमध्ययनस्य तु
दैवज्ञस्य तथैव स्याद्भक्तानामस्त्रजापिनाम् २२०
भक्तानां परिचाराणां यथाश्रद्धा तु दक्षिणा
गत्वा तु मूर्तिपैः सार्धं प्रासादं शिल्पिभिः सह २२१
शिवाम्भसा तु संप्रोक्ष्य गर्भगेहं विचक्षणः
गोमयालेपनं कृत्वा पुण्याहं तत्र कारयेत् २२२
ब्रह्मसूत्रं पुरा कृत्वा देशिकः शिल्पिभिः सह
यमसूत्रं पुनः कृत्वा मत्स्यद्वयवशाद्बुधः २२३
तत्तत्सूत्रं न्यसेद्भित्तौ दक्षिणोत्तरपृष्ठतः
शालिपिष्टमयं वापि गैरिकामयमेव वा २२४
भित्त्यभावे विना सूत्रं प्रत्यग्रे तु महानल
यष्टिमास्थापयेत्तत्र तन्मध्ये सूत्रमानयेत् २२५
एवं सुनिश्चितं सूत्रं ब्रह्माख्यं च यमाख्यकम्
एकविंशतिभागेन विभजेद्द्वारविस्तृतम् २२६
दशांशं दक्षिणे त्यक्त्वा न्यस्त्वा वै चोत्तरे तथा
भजेत्षडंशमध्यांशं दक्षिणे चतुरं त्यजेत् २२७
द्वितीयमुत्तरे त्यक्त्वा सूत्रमास्फालयेच्छनैः
पृष्ठतो ब्रह्मसूत्रं तु तन्मानं चोत्तरे न्यसेत् २२८
तत्र सूत्रं समास्फाल्य तत्सूत्रं शिवसूत्रकम्
तत्प्रमाणं न्यसेत्सूत्रं यष्ट्यायां तु विशेषतः २२९
तत्सूत्रं मध्यमे स्थाप्य तल्लिङ्गं सर्वकामिकम्
शिवसूत्रं न्यसेत्सूचिभिन्नयष्ट्या विशेषतः २३०
सूच्या तु रज्जुं बद्ध्वा तु यथा ऋजु तथा बुधः
यमसूत्रं न्यसेत्सूचिमुभयोः पार्श्वयोरपि २३१

ताभ्यां तु रज्जुं बद्ध्वा तु ज्ञात्वा वै रज्जुमध्यमे
दृढमध्यमिति ज्ञात्वा लम्बसूत्रं तु बन्धयेत् २३२
शिवसूत्रोभयोः पार्श्वे पिण्डिकासूत्रमानयेत्
यस्य पीठस्य विस्तारं परिमेयप्रमाणतः २३३
तस्यार्धं दक्षिणे कृत्वा शिवसूत्रस्य मध्यमात्
शिवसूत्रोत्तरे ह्यर्धं रक्षयेत्तु विशेषतः २३४
तत्प्रमाणे न्यसेत्सूत्रमुभयोरपि पार्श्वयोः
पूर्वापरे तथा कुर्यात्पिण्डिकासूत्रमुत्तमम् २३५
मध्यमे ह्यवटं कुर्यात्पीठविस्तारमानतः
अथवा श्वभ्रविस्तारं गर्भाष्टार्धार्धमुच्यते २३६
ब्रह्मभागप्रवेशं हि ज्ञात्वा ब्रह्मशिलोच्छ्रयम्
श्वभ्रं समतलं कृत्वा घनीकृत्वेह पादतः २३७
पादशैलं न्यसेन्मध्ये जलेन समतां विदुः
नवेन शुक्लवस्त्रेण जलमाहृत्य देशिकः २३८
मध्यमं लम्बसूत्रेण लक्षयित्वा प्रयत्नतः
अवटं पूजयित्वा तु गन्धपुष्पादिभिः शुभैः २३९
त्वमेव परमाशक्तिस्त्वमेवासनधारिके
आसनाधारभूता सा तिष्ठते शिवधर्मिणी २४०
उपलिङ्गं प्रकर्तव्यं क्षीरदारुमयं समम्
श्वभ्रे स्थाप्य विदित्वा तु कौटिल्यमृजुतां तथा २४१
उपलिङ्गवशात्पीठं पूर्वमेव तु कल्पयेत्
विदित्वार्जवतां सम्यगुपलिङ्गवशेन तु २४२
पूर्वं लिङ्गं प्रतिष्ठाप्य पश्चाद्वा योज्य पिण्डिकाम्
प्रतिलिङ्गं सूत्रयष्टिं च व्यपोह्य सकलं तथा २४३
रत्नधारीणि रन्ध्राणि शोधयित्वा विशेषतः
विलिप्य चन्दनेनैव न्यस्तव्यं हृदयेन तु २४४
वज्रमैन्द्रे तु विन्यस्य वैडूर्यं वह्निगोचरे
इन्द्रनीलं तु याम्यायां मुक्तां नैर्ऋतिगोचरे २४५
वारुणे स्फटिकं न्यस्त्वा पुष्परागं तथानिले

पद्मरागं तु सौम्यायां नीलमीशानगोचरे २४६
माणिक्यं मध्यमे स्थाप्य ततो धातूंश्च विन्यसेत्
हरितालमञ्जनं सीसं माक्षिकं गैरिकाभ्रकम् २४७
सिन्दूरं गन्धिकं चैव न्यसेत्पूर्वादितः क्रमात्
गोधूमं यवनीवारं तिलसर्षपमाषकम् २४८
व्रीहिमुद्गौ क्रमेणैव न्यसेत्पीठक्रमेण तु
चन्दनं चागरुं चैव रक्तचन्दनमेव च २४९
लोहं पूर्वादितः प्रोक्तमाग्नेयाद्यौषधं न्यसेत्
उशीरविष्णुक्रान्तं च सहलक्ष्मीं च विन्यसेत् २५०
रत्नानामप्यलाभे तु वज्रं सर्वत्र विन्यसेत्
धातूनामप्यलाभे तु हरितालं तु विन्यसेत् २५१
बीजानामप्यलाभे तु यवं सर्वत्र विन्यसेत्
गन्धानामप्यलाभे च चन्दनं तत्र विन्यसेत् २५२
औषधीनामलाभे तु सहदेवीं तु विन्यसेत्
पृथिवीमेरुपद्मं च वृषभं हैमकामयम् २५३
यथा पीठक्रमान्न्यस्त्वा मध्ये ब्रह्मशिलावटे
ब्रह्मबीजेन वृषभं न्यस्त्वा पूर्वादिदिङ्मुखः २५४
गुल्मायां दापयित्वा तु पायसेन समन्वितम्
द्रव्याणां निश्चलार्थं तु रत्नाधारे च निक्षिपेत् २५५
मुकुलीं पद्ममुद्रां च लिङ्गमुद्रां च दर्शयेत्
पूजयित्वा तु रत्नादि गन्धपुष्पादिभिर्हृदा २५६
आधारशक्तिं संकल्प्य ततोऽनन्तासनं न्यसेत्
कल्पोक्तविधिना कल्प्य ततः पद्मासनं न्यसेत् २५७
तथैव विधिना न्यस्त्वा नवशक्तिसमन्वितम्
ततो योगासनं न्यस्त्वा मण्डलादिक्रमान्न्यसेत् २५८
गुणत्रयेण संछाद्य तत्तन्मन्त्रमनुस्मरन्
कालाग्निरुद्रपर्यन्तमासनोपरि कल्पयेत् २५९
गन्धपुष्पादिना पूज्य वस्त्रेणावेष्ट्य सर्वतः
ततो देवान्तिकं गत्वा पूजयित्वा यथाविधि २६०

अग्निं प्रज्वालयेत्पश्चाद् ब्रह्माङ्गैर्जुहुयात्ततः
जयादिरभ्याधानं च राष्ट्रभृज्जुहुयात्क्रमात् २६१
हव्यवाहमनुस्मृत्य स्विष्टमग्नेति होमयेत्
हृदा पूर्णाहुतिं दद्याद् यदस्येति च मन्त्रतः २६२
हुत्वा पूर्णाहुतिं पश्चात् प्रणीताब्रह्मसर्जनम्
एवं कृत्वाग्निकार्योक्तमाचार्यो मूर्तिपैः सह २६३
शङ्खभेरीनिनादैश्च स्वस्तिमङ्गलवाचकैः
नृत्तगेयसमायुक्तं लिङ्गमुत्थाप्य देशिकः २६४
सद्योजातेन मन्त्रेण लिङ्गस्थापनमारभेत्
रथे वामेन संरोप्य अघोरेणावकुण्ठयेत् २६५
पूजयेद्वक्त्रमन्त्रेण पञ्चमेनार्घ्यमाददेत्
छत्रचामरपिञ्छैश्च ध्वजयूथसमाकुलम् २६६
ऋग्यजुः सामशब्दैश्च स्तोत्रमङ्गलवाचकैः
प्रदक्षिणं ततः कृत्वा प्रासादं तु विशेषतः २६७
आचार्यो ह्यग्रतो गच्छेदर्घ्यहस्तो विशेषतः
यजमानोऽनुगच्छेत्तु पुत्रमित्रकलत्रकैः २६८
अनुगच्छन्ति ये मर्त्या लिङ्गं वै सार्वकामिकम्
पदे पदेऽश्वमेधस्य फलं प्राप्नोति मानवाः २६९
द्वारदेशं समानीय लिङ्गं संपूजयेद्गुरुः
कालं निरीक्ष्य कालज्ञो गुरवे सन्निवेदयेत् २७०
शिवं प्रणम्य विज्ञाप्य पूजयित्वा विशेषतः
आचार्यो मूर्तिपैः सार्धं लिङ्गस्थापनमारभेत् २७१
पञ्चमेन ततः स्थाप्य लिङ्गं द्वारे तु दिङ्मुखम्
चलिते स्फुटिते वक्रे भ्रमते शब्दिते यदि २७२
चलिते तु महादुःखं स्फुटिते द्रव्यनाशनम्
सवक्रं शिल्पिनं हन्ति भ्रमते रोगसंभवम् २७३
दोषानेतान्समुद्वीक्ष्य निष्कृतिं च समाचरेत्
बहुरूपेण मन्त्रेण सर्वदोषप्रशान्तये २७४
शतमष्टोत्तरं हुत्वा शिवाग्नौ शिवमन्त्रतः

नन्द्यावर्तशिला योज्य वालुकाभिः सुपूरयेत् २७५
गत्वा तु पिण्डिकां तत्र पूजयित्वा विशेषतः
विलिप्य गन्धवस्त्रेण शीतधूपेन धूपयेत् २७६
उत्थाप्य गौरीबीजेन स्यन्दनेऽरोप्य देशिकः
प्रासादे द्वारदेशे तु पूजाकर्म समाचरेत् २७७
नवलिङ्गे समायोज्य गौरीमन्त्रेण मन्त्रवित्
सन्धाय मूर्तिपैः सार्धं लिङ्गस्योपरि यत्नतः २७८
शनैर्निवेश्य कं पीठं वालुकाभिः सुपूरयेत्
समं सुनिश्चलं ज्ञात्वा बन्धयेदष्टबन्धनैः २७९
शुद्धं कृत्वा यथान्यायं ततः पुण्याहमाचरेत्
समभ्यर्च्य यथा लिङ्गं गन्धपुष्पादिभिः शुभैः २८०
निधाय दक्षिणं हस्तं गुरुर्लिङ्गस्य मूर्धनि
व्योमव्यापि समुच्चार्य एकचित्तः प्रयत्नतः २८१
नवत्रिंशत्कलान्यासं मकुटादीनि योजयेत्
शिवाङ्गानि न्यसेद्विद्वान्नेत्राणि क्षुरिकां ततः २८२
संबध्वावाहिनीमुद्रां पुष्पहस्तमुखासनम्
आवाह्य देवदेवेशं सद्योजातेन मन्त्रतः २८३
शुद्धस्फटिकसंकाशं तरुणादित्यसंनिभम्
त्र्यक्षं दशभुजं शान्तं पञ्चवक्त्रं स्मिताननम् २८४
दिव्याम्बरधरं देवं दिव्यगन्धानुलेपनम्
पिण्डिकां सुपशां वर्णं पञ्चमूर्धानसंयुतम् २८५
जटामकुटसंयुक्तं जटाचन्द्रार्धशेखरम्
विद्याविद्येश्वरैरष्टगुणैर्लोकेश्वरैर्युतम् २८६
ध्यात्वा सदाशिवं देवं सर्वज्ञं कारणेश्वरम्
संस्थाप्य वामदेवेन अघोरेण निरोधयेत् २८७
पुरुषेणैव सांनिध्यमीशानेन प्रणम्य च
पिण्डिकां पूजयेत्तत्र उमागायत्रिमन्त्रतः २८८
षडध्वा विन्यसेत्तत्र कालाग्न्यादिगुणान्तकम्
सतीमावाहयेत्पीठे दुकूलवसनान्विताम् २८९

सर्वाभरणसंयुक्तां नीलालकसमन्विताम्
सुकेशां कम्बुग्रीवां च पीनोन्नतपयोधराम्  २९०
मकुटकुण्डलाहारकेयूराद्यैरलंकृताम्
ध्यात्वा तु पिण्डिकामध्ये गौरीं सम्यग्विचिन्तयन्  २९१
स्थापनं संनिरोधं च उमामन्त्रेण कल्पयेत्
दर्शयेल्लिङ्गमुद्रां च मुकुलीपद्ममुद्रिकाम्  २९२
शिवकुम्भं समादाय शिरसा धार्य देशिकः
वर्धनीं शिरसा धार्य विद्येशकलशांस्तथा  २९३
शिरसा मूर्तिपैस्सार्धं शनैर्गत्वा प्रदक्षिणम्
द्वारपूजां ततः कृत्वा स्थाप्य लिङ्गस्य संनिधौ  २९४
सुमुहूर्ते सुलग्ने तु मन्त्रन्यासं समारभेत्
शिवकुम्भाच्छिवं बीजं लिङ्गस्य हृदये न्यसेत्  २९५
लिङ्गस्य शिरसि न्यस्त्वा मेढ्रमूले तु विन्यसेत्
ब्रह्माङ्गं च यथास्थाने न्यसेद्वै देशिकोत्तमः  २९६
पिण्डिकायां न्यसेद्बीजमुमाख्यं वर्धनीघटात्
विद्येशबीजमादाय तत्तत्स्थाने विचक्षणः  २९७
पूजयित्वा यथान्यायं पञ्चमावरणैः सह
स्नपनं कारयेदन्ते पूर्वोक्तविधिना सह  २९८
पाद्यमाचमनं चार्घ्यं हृन्मन्त्रेण प्रदापयेत्
ददेद्वस्त्रं हृदा मन्त्री यज्ञसूत्रं हृदा तथा  २९९
लेपनं चाञ्जनं पट्टं कुण्डलं पादुकं तथा
हारं च कटिसूत्रं च कटकं चाङ्गुलीयकम्  ३००
केयूरमकुटं छत्रं हृदयेन प्रदापयेत्
शीतारिधूपनैवेद्यं हृदयेन तु दापयेत्  ३०१
द्वारपालवृषादींश्च यक्षरक्षः पिशाचकान्
दिक्पालान्बलिदानेन तोषयेन्मन्त्रदेवताः  ३०२
देवस्याचमनं दद्यान्निर्माल्यं तु विसर्जयेत्
तच्छेषं चण्डमूर्तेस्तु दद्यादाचमनीयकम्  ३०३
चण्डस्याचमनं दत्वा निर्माल्यं तु विसर्जयेत्

मुखवासं च कर्पूरं शिवस्य परिकल्पयेत् ३०४
हरिद्रासर्षपं लोध्रमञ्जनं तु मनश्शिलाम्
घृतं गोरोचनं चैव सप्ताङ्गं लेपयेत्क्रमात् ३०५
प्रतिष्ठोत्सवं तु कर्तव्यं यावत्सप्तदिनान्तकम्
पूर्वोक्तविधिना कुर्याच्चराडयागमतः परम् ३०६
यस्मिन्राष्ट्रे कृतं ह्येवं राजा विजयमाप्नुयात्
पुत्रपौत्राश्च वर्धन्ते तद्राष्ट्रमभिवर्धते ३०७
सुभिक्षं क्षेममारोग्यं वर्धन्ते च सदा भुवि
एवं यः कुरुते मर्त्यस्त्रिसप्तकुलसंयुतः ३०८
शिवलोकमवाप्नोति न पुनः परिवर्तते
शिवसायुज्यमाप्नोति क्रीडते कालमक्षयम् ३०९
लिङ्गस्य स्थापनं प्रोक्तं पिरिडकास्थापनं शृणु
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे लिङ्गस्थापनपटलो विंशतिः

## एकविंशतितमः पटलः
### पिरिडकास्थापनम्

अतः परं प्रवक्ष्यामि पिरिडकास्थापनं परम्
आयुरारोग्यबलदं पुत्रपौत्रविवर्धनम् १
पिरिडकायामुमादेवी लिङ्गस्य परमेश्वरः
तयोर्योगक्रिया या तु सा प्रतिष्ठा महानल २
मानोन्मानप्रमाणानि पीठाध्याये समुच्यते
त्रिविधं स्थापनं प्रोक्तं पिरिडकायां विशेषतः ३
पौर्वं च पौनःपुन्यं च सहितं च त्रिधा मतम्
उपलिङ्गवशात्पीठं पूर्वमेवं प्रकल्पितम् ४
तत्पौर्वकमिति ज्ञेयं पश्चाल्लिङ्गस्य कल्पितम्
लिङ्गेन सहितं स्थाप्य सहितं चेति कीर्तितम् ५
स्थापितस्यैव लिङ्गस्य पश्चात्पीठं सुयोजितम्
पौनःपुन्यमिति ज्ञेयं सर्वकामार्थसाधनम् ६
पीठाधिवासनं वक्ष्ये पौनःपुन्यस्य चानल

अधिवसेद्दर्भगेहे पौर्विकस्य विचक्षणः ७
तत्राधिवसेत्सहिते लिङ्गेने सह देशिकः
पौनःपुन्यमधिवसेत्प्रासादाग्रे तु मण्डपे ८
यावत्पीठस्य विस्तारं तावत्स्याद्वेदिका स्मृता
रत्निमात्रं तदर्धं वा वेदिकोच्छ्रयमुच्यते ९
कुण्डानि परितः कुर्याद्दिग्विदिक्षु समन्ततः
उत्तमत्रयलिङ्गानां होमं षोडशमारभेत् १०
मध्यमत्रयलिङ्गानां होमानष्टौ प्रकल्पयेत्
पीठानामधमानां तु चतुर्दिक्षु चतुर्ष्वपि ११
चतुरश्रं धनुर्वृत्तं पद्मकुण्डं चतुर्दिशि
आग्नेयादीशकोणान्तं योन्याकाराणि कल्पयेत् १२
कुण्डं हस्तप्रविस्तारं मेखलात्रयसंयुतम्
चतुस्त्रिद्व्यङ्गुलोत्सेधं विस्तारं तावदेव तु १३
नाभियोनिसमायुक्तं खातं हस्तप्रमाणतः
स्थण्डिले वा प्रकर्तव्यं हस्तमात्रप्रमाणतः १४
चतुर्द्वारसमायुक्तं दर्पणोदरसंनिभम्
मण्डपं मण्डयेद्धीमान्पूर्वोक्तविधिना सह १५
पिण्डिकां स्थापयेत्तत्र पञ्चगव्यकषायकैः
हरिद्रातिलचूर्णैश्च पत्रतोयैश्च सेचयेत् १६
पवमानं समुच्चार्य पञ्चगव्याभिषेचनम्
कुर्याच्चूर्णोदकेनैव पत्रतोयं हृदा तथा १७
गन्धपुष्पादिना पूज्य स्वस्वबीजमनुस्मरन्
शयनं कल्पयेद्धीमानण्डजाद्यैरनुक्रमात् १८
पूजयित्वा यथान्यायं शन्नोदेवीमनुस्मरन्
तत्रैव शाययेत्पीठं शयनोपरि देशिकः १९
हृदयं मन्त्रमुच्चार्य गन्धपुष्पादिना यजेत्
मुकुलीं पद्ममुद्रां च बीजमुद्रां प्रदर्शयेत् २०
हविर्निवेदयेत्पश्चाद्गौरीगायत्रिमन्त्रतः
पूर्वभागे न्यसेत्कुम्भमुमाख्यं द्रोणपूरितम् २१

सकूर्चं सापिधानं च सवस्त्रं हेमसंयुतम्
गौरीबीजं न्यसेन्मन्धे पञ्चाङ्गेन समन्वितम् २२
कान्तान्तं यान्तसंयुक्तं चतुर्दशसमन्वितम्
बिन्दुनादसमायुक्तं गौरीबीजमिदं स्मृतम् २३
द्वितीयेन चतुर्थेन षष्ठेन द्वादशेन च
षोडशेन समायुक्तं पञ्चाङ्गमिति कीर्तितम् २४
सुस्तनां चारुवदनां किंचित्प्रहसिताननाम्
सुश्रोणीं तनुमध्यां च दुकूलवसनान्विताम् २५
सर्वाभरणसंयुक्तां कुम्भमध्ये तु भावयेत्
परितः पिण्डिकायास्तु कलशानष्ट विन्यसेत् २६
सकूर्चान्सापिधानांश्च सवस्त्रान्वारिपूरितान्
सहेमान्पल्लवोपेतान्साधयेत्साधिदैवतान् २७
वामां ज्येष्ठां च रौद्रीं च कालीं कलविकारिणीम्
बलविकरिणीं चैव बलप्रमथनीं तथा २८
सर्वभूतदमनीं तु पर्णावासां समुच्यते
वामां नीलनिभां चैव मकुटादिविभूषिताम् २९
शङ्खचक्रधरां देवीं कुम्भमध्ये तु भावयेत्
पीतवर्णां तथा ज्येष्ठां पद्मधृक्पद्मलोचनाम् ३०
सर्वाभरणसंयुक्तां सुस्तनां च सुयौवनाम्
रौद्रीं श्वेतनिभां देवीं त्रिणेत्रां शूलधारिणीम् ३१
नीलमेघनिभां देवीं कालीं मुद्गरधारिणीम्
कलविकरिणीं रक्ताभां पाशहस्तां महाबलाम् ३२
पीताभां बलविकरिणीं खड्गखेटकसंयुताम्
बलप्रमथनीं देवीं नीलालकसमप्रभाम् ३३
दण्डधारीं महारूपां मकुटादिविभूषिताम्
सर्वभूतदमनीं च मेघवर्णां सुयौवनाम् ३४
शक्तिहस्तां महावीर्यां मकुटादिविभूषिताम्
दिक्कुम्भेषु न्यसेदेताः पूजयेत्स्वस्वनामतः ३५
पीठे मनोन्मनीं न्यस्य शुद्धस्फटिकसंनिभाम्

चतुर्भुजां त्रिणेत्रां च नीलालकविभूषिताम्  ३६
सुस्तनां चारुवदनां सुपाशाङ्कुशधारिणीम्
पिण्डिकायां न्यसेदेताः स्वस्वबीजेन पूजयेत्  ३७
द्वारकुम्भं न्यसेद्धीमान्द्वारं द्वारं प्रति द्वयम्
गङ्गा च यमुना चैव नर्मदा च सरस्वती  ३८
सिन्धु गोदावरी चैव शोणा पुष्करिणी तथा
पूर्वादिद्वारकुम्भानामधिदेवाः प्रकीर्तिताः  ३९
पूजयेत्तु यथान्यायं स्वस्वनाम्ना तु देशिकः
एवमभ्यर्च्य विधिना ततो होमं समाचरेत्  ४०
पालाशखादिराश्वत्थप्लक्षं चैव दिशासु वै
अर्कोदुम्बरबिल्वाश्च मयूरं च विदिक्षु वै  ४१
समिदाज्यचरुं लाजान्तिलसर्षपमाषकान्
शतमर्धं तदर्धं वा जुहुयात्क्रमशः पुनः  ४२
अग्न्याधानादिकं सर्वमग्निकार्योक्तमार्गतः
अयं तु इध्म मन्त्रेण इध्मं हुत्वा विचक्षणः  ४३
गौरीमिमायमन्त्रेण समिद्धोमं समाचरेत्
गौरीगायत्रिमन्त्रेण घृतं हुत्वा विचक्षणः  ४४
हृदयेन चरुं हुत्वा शिरसा लाजमेव च
शिखामन्त्रेण च तिलं सर्षपं कवचेन तु  ४५
अस्त्रेण जुहुयान्माषं प्रत्येकं व्याहृतिं हुनेत्
शक्तिमन्त्रं समुच्चार्य प्रत्येकं जुहुयाद्दिशि  ४६
मिन्दाहुतिं ततो हुत्वा महाव्याहृतिमेव च
एवं जागरणं रात्रौ पौनःपुन्ये विशेषतः  ४७
साधयेद्गर्भगेहं तु शक्तिकुम्भं समं ततः
वर्धनीं पूर्वभागे तु पूजयित्वा स्वनामतः  ४८
अष्टौ वा चतुरो वाथ होमं कुर्याद्यथाविधि
पौर्वाधिवासनं ह्येवं सहजं सहितं भवेत्  ४९
आचार्यो मूर्तिपैः सार्धं स्नानत्रयमथाचरेत्
पिण्डिकामर्चयित्वा तु ततो होमं समाचरेत्  ५०

गौर्या ब्रह्माङ्गबीजैश्च हुत्वा पीठं स्पृशेद्गुरुः
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत् ५१
पुण्याहं कारयेत्तत्र पीठं लिङ्गतलं क्रमात्
पीठविस्तारमानेन लिङ्गस्य परितः क्रमात् ५२
सूत्राणि विन्यसेद्धीमान्गैरिकाक्तेन तन्तुना
विलिप्य शस्तगन्धेन लिङ्गं सर्वं समस्तकम् ५३
आचार्यं पूजयेत्तत्र कल्पोक्तविधिना सह
मूर्तिपान्पूजयेत्पश्चाद्दैवज्ञं पूजयेत्ततः ५४
गौरीगायत्रिमन्त्रेण पिण्डिकां च समुद्धरेत्
सर्वातोद्यसमायुक्तं नृत्तगेयसमन्वितम् ५५
पिञ्छचामरसंयुक्तं धूपदीपसमाकुलम्
शनैः प्रदक्षिणं कुर्यात्प्रासादं गुरुणा सह ५६
द्वारदेशं समानीय पूजयित्वा यथाविधि
मुहूर्तं तु निरीक्ष्यैव गुरवे सन्निवेदयेत् ५७
उमाबीजं समुच्चार्य पीठं लिङ्गे सुयोजयेत्
शिरोमार्गेण लिङ्गस्य वेशयेद्धृतवारिणि ५८
उत्तराभिमुखानां तु तद्देशे वदनं भवेत्
वालुकाभिश्च संपूर्य बन्धयेदष्टबन्धनैः ५९
नवेन सितवस्त्रेण लिङ्गमावेष्ट्य सर्वतः
पूजयित्वा यथान्यायं विवरे तस्य योजयेत् ६०
सुस्निग्धं कारयित्वा तु पूजयित्वा यथाविधि
अधोऽनन्तासनं कल्प्य योगं सिंहासनं तथा ६१
पद्मासनं च विमलं मण्डलत्रयमेव च
गुणत्रयं तथात्मानं षडध्वा तत्र विन्यसेत् ६२
आचार्यो मूर्तिपैः सार्धं कुम्भानि शिरसा धृत्वा
प्रदक्षिणं ततः कृत्वा द्वारपूजां समारभेत् ६३
प्रविश्य गर्भगेहं तु कुबेराभिमुखः स्थितः
सुमुहूर्ते सुलग्ने तु मन्त्रन्यासं समारभेत् ६४
उमाकुम्भादुमाबीजं पिण्डिकायां तु विन्यसेत्

ऊर्ध्वपद्मो ह्यधोपद्मे तत्कण्ठे चैव विन्यसेत्  ६५
पूर्वादीशानपर्यन्तं न्यस्त्वा वामादिशक्तयणून्
पूजयित्वा यथान्यायं गौरीगायत्रिमन्त्रतः  ६६
पञ्चवर्णहविर्दद्यात्सोपदंशं शिवस्य तु
पायसं पिण्डिकायां तु तन्मूलेनैव दापयेत्  ६७
आचमनं हृदा दत्त्वा निर्माल्यं तु विसर्जयेत्
मुखवासं च कर्पूरं शिवोमाभ्यां तु दापयेत्  ६८
स्नपनं कारयेत्पश्चाद्यथाशक्ति विशेषतः
आचार्यं पूजयेत्पश्चाद्वस्त्राभरणकुण्डलैः  ६९
स्वर्णयज्ञोपवीतं च तप्तहेमाङ्गुलीयकैः
शय्यावाहनदासींश्च रत्नानि विविधानि च  ७०
सुपुष्टां वसुधां चैव सवत्सां गां तथैव च
एतानि गुरवे दद्यात्पश्चात्स्वयमपि भोजयेत्  ७१
अधमं पञ्चनिष्कं तु द्विगुणं मध्यमं भवेत्
उत्तमं त्रिगुणं प्रोक्तमाचार्यस्य तु दक्षिणा  ७२
पूजयित्वा यथान्यायं नैवेद्यान्तं विशेषतः
एवं यः कुरुते मर्त्यः पिण्डिकास्थापनं परम्  ७३
पुत्रपौत्राश्च वर्धन्ते स्त्रीजनानां सुखावहम्
पिण्डिकास्थापनं प्रोक्तं शृणु देशिकलक्षणम्  ७४
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे पिण्डिकास्थापनपटल एकविंशतितमः

## द्वाविंशतितमः पटलः
## देशिकलक्षणविधिः

अतः परं प्रवक्ष्यामि देशिकस्य तु लक्षणम्
आचार्यं पूर्वमन्वेष्य लिङ्गसंस्थापनार्थकम्  १
स्थापनं स्याच्चतुर्भेदं तद्भेदं शृणु चानल
शैवं पाशुपतं चैव कापालं लाकुलं तथा  २
तत्र भेदमहं वक्ष्ये शैवादीनां यथाक्रमम्
कामिकं योगजं चिन्त्यं कारणं चाजितं तथा  ३

दीप्तं सूक्ष्मं सहस्त्रं च अंशुमान्सुप्रभेदकम्
नारसिंहं च निश्वासं तथा स्वायंभुवानलम् ४
रौरवं वीरभद्रं च मकुटं विजयं तथा
चन्द्रज्ञानं च बिम्बं च प्रोद्गीतं ललितं तथा ५
सिद्धं सन्तानशर्वोक्तं वतुलं तन्त्रमेव च
किरणं पारमेशं च अष्टाविंशतिसङ्ख्यकम् ६
एव एव हि भेदत्वान्न भवेत्तन्त्रसङ्करः
शैवतन्त्रं समाख्यातं शृणु पाशुपतं तथा ७
प्राजापत्यं पाशुपतं प्रबुद्धं पद्मसंहिता
वासिष्ठं काश्यपं कल्पं वाराहं भार्गवोत्तरम् ८
प्रफुल्लं वासवं घोरं वायुप्रोक्तं तथैव च
वारुणं बार्हस्पत्यं च पारमेशं च षोडश ९
पाशुपतमथाख्यातं कापालं शृणु सुव्रत
पञ्चार्थं च पुराकल्पं शिवगुह्यप्रमाणकम् १०
रुद्रांशं हृदयं चैव तल्लक्षणप्रमाणकम्
व्योमादिदर्शनं चैव पद्मखेटकशैलकम् ११
निरुक्तं चैव सुप्रापं सिद्धार्थं च चतुर्दश
कापालमेवमाख्यातं लाकुलं शृणु चानल १२
लाकुलं च महाविद्या क्रियाकालगुणोत्तरम्
परहंसं च कौमारं निश्वासोत्तरतं तथा १३
संवर्तं लिङ्गकल्पं च नवधा भेद उच्यते
चतुर्ष्वेतेषु भेदेषु यदा येनैव दीक्षितः १४
तेनैव स्थापनादींश्च तन्त्रेणैव समाचरेत्
दीक्षान्तरेण तन्त्रेण यः कुर्यात्स्थापनादिकम् १५
तन्त्रसङ्करकं ज्ञेयं पञ्चाननेषु दीक्षिताः
कौशिकः शिवमूर्त्या तु दीक्षितः शिवगोचरः १६
काश्यपस्त्वीश्वरेणैव शिखागोचरसंज्ञकः
ईशानेन भरद्वाजो नागरीकं तु गौतमः १७
अगस्त्यश्चैव पद्धोमं गुरुस्थानं प्रकीर्तितम्

कुमारीहिमवन्मध्यं पूतं कृष्णमृगोद्भवम्  १८
तत्रजाः स्थापने योज्या आचार्यप्रवराः स्मृताः
भौतिको नैष्ठिकश्चैव शैवाचार्यो द्विधा स्मृतः  १९
भौतिकश्च सपत्नीको नैष्ठिकश्च विपत्निकः
भौतिकं चोत्तमं विद्धि लिङ्गस्थापनकर्मणि  २०
नैष्ठिको मध्यमो ज्ञेयो भौतिको ब्रह्मचारि वा
शिवेन दीक्षितश्चैव शिवद्विज इति स्मृतः  २१
स्थापको देशिकश्चैव तस्य पर्यायवाचकः
स्थापनं चोत्सवं दीक्षामादिशैवेन कारयेत्  २२
क्रियायां निपुणः सम्यक्शैवाचारसमन्वितः
हेयोपादेयतत्त्वज्ञः शैवतन्त्रपरायणः  २३
सुशीलः सात्विको वाग्मी समयाचारपारगः
जटी वाथ शिखी मुण्डी श्मश्रुलोमादिवर्जितः  २४
दीक्षितश्च विरोगश्च सर्वसङ्गविवर्जितः
पदवाक्यप्रमाणज्ञो मन्त्रमुद्राक्रियान्वितः  २५
शिवशास्त्रैकचित्तस्तु पशुशास्त्रविवर्जितः
वास्तुविद्याकृताभ्यासः शल्योद्धारविशारदः  २६
ईदृशः स्थापने योग्यः प्रतिष्ठा यदि विद्यते
यजमानादयः सर्वे चिरं जीवन्ति सुस्थिताः  २७
आलस्यो निर्दयः स्तब्धोऽशुद्धो नैपुण्यवर्जितः
व्यसनी वामनः कुब्जः चपलं कुनखः शठः  २८
सन्न्यासी तार्किको भ्रष्टः स्वशास्त्रसमयच्युतः
गुरुदेवद्विजादीनां निन्दकः श्यामदन्तकः  २९
कृतघ्नः पिशुनो दीनः खल्वाटो दन्तुरस्तथा
पत्तिरङ्गोपजीवी च मोहनो नास्तिको भिषक्  ३०
हीनाङ्गश्चाधिकाङ्गश्च शिपिविष्टोऽथ वातकः
परापवादशीलश्च पशुशास्त्रानुरञ्जकः  ३१
एभिस्तु लक्षणैर्युक्तः प्रतिष्ठायामनर्हकः
मूर्तिपानामहं वक्ष्ये लक्षणं शृणु चानल  ३२

आचार्यारम्भशास्त्रेषु निपुणो गतसंशयः
तदभिप्रायतत्त्वज्ञश्चाचार्यस्यानुकूलवान् ३३
मूर्तिज्ञो मूर्तिधारश्च सर्वकर्मसु पेशलः
कामिकं योगजं चिन्त्यं कारणं चाजितं तथा ३४
पञ्च तन्त्रा इमे ज्ञेयाः सद्योजातमुखोद्भवाः
दीप्तं सूक्ष्मं सहस्रं च अंशुमान्सुप्रभेदकम् ३५
एतानि पञ्च तन्त्राणि वामदेवमुखोद्भवाः
नारसिंहं च निश्वासं तथा स्वायंभुवानलम् ३६
रौरवं च इमे पञ्च अघोरस्य मुखोद्भवाः
वीरभद्रं च मकुटं विजयं चन्द्रसंहिता ३७
मुखबिम्बं च पञ्चैते पुरुषस्य मुखोद्भवाः
प्रोद्गीतं ललितं तन्त्रं सिद्धं सन्तानसंज्ञकम् ३८
शर्वोक्तं वातुलं तन्त्रं किरणं पारमेश्वरम्
अष्टतन्त्रा इमे वह्ने ईशानमुखसंभवाः ३९
कौशिको नमुचिर्दक्षो मनुर्वल्मीकनन्दनः
पराशरोऽप्यथ व्यासो बोधायनसनातनौ ४०
शिवगोचरिणश्चैते भ्रातरः कौशिकस्य तु
काश्यपश्चाङ्गिरा स्थूलः शाण्डिल्यो यदुकस्तथा ४१
आपस्तम्बोऽशनो भूतिः शङ्कुकर्णो विराजकः
शिखागोचरवर्गाश्च भ्रातृभावेन निश्चिताः ४२
भारद्वाजश्च शङ्खश्च मार्कण्डेयश्च रैव्यकः
भृगुः शुक्रस्तथा कृष्णः पिङ्गलो देवलः पशुः ४३
ज्योतिर्गोचरिणश्चैते भारद्वाजस्य भ्रातरः
गौतमो गालवो गार्ग्यो वसिष्ठो माधवो नदः ४४
गौलको ऋष्यशृङ्गश्च कात्यायनबृहस्पती
सावित्रीगोचराश्चैते भ्रातरो गौतमस्य तु ४५
अगस्त्यः कपिलो वत्सः कुत्सो वै मुद्गलस्तथा
पौलस्त्यवायनौ श्वेतश्चम्बको नीललोहितः ४६
व्योमगोचरवर्गाश्च भ्रातृभावेन निर्दिशेत्

एतेषां सङ्करं ज्ञात्वा वैवाह्यं कुरु देशिक ४७
आचार्यलक्षणं प्रोक्तं पूजाविधिमथ शृणु ४८
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे देशिकलक्षणपटलः द्वाविंशतितमः

## त्रयोविंशतितमः पटलः
### शिवार्चनविधिः

अथातः संप्रवक्ष्यामि शिवार्चनविधिक्रमम्
सर्वपापहरं पुण्यः सर्वरोगनिवारणम् १
महापातकनाशार्थं सर्वयज्ञफलप्रदम्
आत्मशुद्धिर्भवेत्पूर्वं स्थानशुद्धिर्द्वितीयकम् २
तृतीयं द्रव्यशुद्धिस्तु चतुर्थं लिङ्गशोधनम्
पञ्चमं मन्त्रशुद्धिस्तु उच्यन्ते पञ्चशुद्धयः ३
विधिस्नानं पुरा कृत्वा देहशुद्धिं ततः कुरु
पादप्रक्षालनं कृत्वा आचम्य विधिना बुधः ४
उत्तराभिमुखो भूत्वा रुचिरासनसंस्थितः
अस्त्रमन्त्रमनुस्मृत्य दिग्विरेचनमारभेत् ५
प्राणायामत्रयं कृत्वा प्रत्येकं दशमात्रकम्
तद्ग्राह्यमात्मतत्त्वं तु रेचकं बिन्दुमध्यगम् ६
यथा व्योमगतश्चात्मा तथा कुर्याद्धृदा पुनः
कृत्वा कायं देहत्पश्चात्सह सूर्याभिमण्डले ७
फट्कारेण तु मन्त्रेण पञ्चग्रन्थींस्तु छेदयेत्
भस्मीभूतं विचिन्त्य स्वमानीय प्राणमाश्रितम् ८
शून्यं सर्वं निरालम्बमप्रमेयमगोचरम्
अधोर्ध्वान्तस्थममृतं स्त्रवन्तं चिन्तयेत्सदा ९
प्रणवेन समायुक्तं श्वेतपद्मोपरि स्थितम्
कृत्वा शिवतनुं ध्यायेदष्टत्रिंशत्कलामयम् १०
शिवाङ्गं चैव पञ्चाङ्गं यथास्थानेषु विन्यसेत्
पूर्वं कृत्वा करन्यासमङ्गन्यासमतः परम् ११
हस्तपृष्ठतलौ चैव शिवास्त्रेणैव शोधयेत्

शक्तिद्वयं शिवं चैव द्वयोः संकल्प्य हस्तयोः १२
कृत्वा मन्त्रात्मकं कायमष्टत्रिंशत्कलामयम्
अङ्गुष्ठादिकनिष्ठान्तं सृष्टिन्यासमिति स्मृतम् १३
कनिष्ठाद्यङ्गुष्ठान्तं हि संहारन्यासमुच्यते
ईशानादि च सद्यान्तं सृष्टिन्यासमिदं परम् १४
सद्यादीशानपर्यन्तं संहारक्रममेव हि
दक्षिणाङ्गुष्ठमादि स्यात्कनिष्ठान्तं तथोत्तरे १५
दशबीजं न्यसेद्विद्वान्स्थितिन्यासमिदं परम्
मध्यादिदेशिन्यन्तं हि शिवाङ्गं विन्यसेत्क्रमात् १६
नेत्रं हस्ततले न्यस्य अस्त्रं तर्जन्यां विन्यसेत्
विद्याङ्गमेवं विन्यस्य शिवं पर्वणि विन्यसेत् १७
गृहस्थः सृष्टिमार्गेण करन्यासं तु कारयेत्
सपत्नीकवनस्थश्चेत् संहारन्यासमाचरेत् १८
करन्यासः समाख्यातश्चाङ्गन्यासमतः शृणु
मूर्धादि सृष्टिरत्रोक्तं पादादि संहृतिर्भवेत् १९
अष्टत्रिंशत्कलान्यासं मकुटादिक्रमान्न्यसेत्
ईशानं पञ्चधा कल्प्य चतुर्धा पुरुषं न्यसेत् २०
अघोरं अष्टधा कल्प्य हृद्ग्रीवांसौ स्वनुक्रमात्
जठरे नाभौ पृष्ठे च उरसीति क्रमान्न्यसेत् २१
मेढ्रे गुदे च ऊर्वोश्च जान्वोर्वै जङ्घयोरपि
स्फिक्कट्योश्च तथा पार्श्वद्वयोर्वामं तु विन्यसेत् २२
पादयोश्च तथा पाण्योर्नासौ बाह्वोः शिरःक्रमात्
अष्टधा कल्पयेत्सद्यं क्षुरिकां दक्षिणे कटौ २३
प्राकृतं भावमुत्सृज्य शिवोऽहमिति भावयेत्
आत्मानं पूजयेद्विद्वान्गन्धपुष्पादिभिः क्रमात् २४
आत्मशुद्धिक्रमः प्रोक्तः स्थानशुद्धिक्रमं शृणु
पाद्यपात्रं शरावं च शङ्खमाचमनार्थकम् २५
वर्धनीं जलभाण्डं च पुष्पपात्रार्घ्यपात्रकान्
क्षालयेदस्त्रमन्त्रेण हृदयेन निरीक्षयेत् २६

कवचेनावकुण्ठ्याथ तथैवोन्मीलनं कुरु
शिवाम्भसा तु संपूर्य शङ्खं वै वर्धनीं तथा २७
तोयमध्ये न्यसेद्ब्रह्मपाणिमन्त्रं हृदा सह
निधाय दक्षिणं हस्तं व्योमव्यापि जपेद्गुरुः २८
दर्शयेत्सुरभीमुद्रां शूलमुद्रां च दर्शयेत्
पात्राणि च हृदा प्रोक्ष्य शङ्खतोयेन सर्वशः २९
क्षीरं दधिघृतादींश्च गन्धपुष्पं च धूपकम्
वर्धनीतोयमादाय प्रोक्षयेत्पुरुषेण तु ३०
द्रव्यशुद्धिर्भवेदेवं लिङ्गशुद्धिं ततः शृणु
घण्टां तु ताडयेद्धीमान्घण्टामन्त्रमनुस्मरन् ३१
अपनीयं पटं विद्वान्हृदयं मन्त्रमुच्चरन्
नालिगेहं ततः प्राप्य लिङ्गशुद्धिं समाचरेत् ३२
पूर्वसंध्यार्चितं पुष्पमीशानेन विसर्जयेत्
कनिष्ठानामिकामध्ये पुष्पं संगृह्य देशिकः ३३
अङ्गुष्ठतर्जनीभ्यां तु पुष्पं पर्युषितं त्यजेत्
विसर्जनस्य तत्काले पुष्पं मूर्धनि दापयेत् ३४
न शून्यमस्तकं लिङ्गं भवेत्तत्र कदाचन
ऐशान्यां दापयेन्मालां चण्डेशाय हृदा बुधः ३५
लिङ्गं प्रक्षाल्य चास्त्रेण पीठं पाशुपतेन तु
लिङ्गशुद्धिर्भवेदेवं मन्त्रशुद्धिं ततः शृणु ३६
ओंकारदीपिता मन्त्रा नमस्कारान्तयोजिताः
अर्चने तु प्रयोक्तव्या मन्त्राश्चामोघशक्तयः ३७
पञ्चशुद्धिं च यो वेत्ति स पूजां कर्तुमर्हति
आसनं कल्पयेत्तत्र शास्त्रदृष्टेन कर्मणा ३८
सितपद्मासनं ध्यात्वा मूलं नालं सकर्णिकम्
पार्थिवाण्डमधःकन्दं नालमाप्यादिरेव च ३९
प्रधानतत्त्वपर्यन्तं नालं कण्टकसंयुतम्
धर्मं ज्ञानं च वैराग्यमैश्वर्यं पादमेव च ४०
आग्नेय्यां धर्मं विन्यस्य ज्ञानं निर्ऋतिगोचरे

वैराग्यं वायुदिग्भागे ऐश्वर्यं त्वीशगोचरे ४१
अधर्मादीलिकांस्तत्र शक्रादीनि क्रमान्न्यसेत्
गुणत्रयेण संछाद्य मध्यपादस्तु केशवः ४२
विद्येश्वरदलच्छन्नं शक्तिकेसरसंयुतम्
मायातत्त्वं बृहद्ग्रन्थिं शुद्धविद्याब्जशोभितम् ४३
विद्यातत्त्वमयीं तस्य कर्णिकोपरि चिन्तयेत्
बीजानि शक्तयः प्रोक्ता दलानि तु विद्येश्वराः ४४
मन्त्राणि केसराणीव रत्नबीजेन कल्पयेत्
तस्य नालं तु वैडूर्यं शातकुम्भं तु कर्णिका ४५
स्फटिकं कर्णिकाबीजं कुन्दवर्णमयं दलम्
केसराणि तथा पीतं मूलाग्रं मौक्तिकामयम् ४६
मण्डलत्रयमत्रैव कल्पयेत्तु परिक्रमात्
वामादिशक्तयश्चाष्टौ दले प्रागादि विन्यसेत् ४७
मध्ये मनोन्मनीं न्यस्त्वा आदिशक्तिमनूपमाम्
मुकुलीं प्रथमं बध्वा पद्ममुद्रां ततः परम् ४८
शशकर्णं विशेषेण कर्णिकायां तु दर्शयेत्
पूजयित्वा यथान्यायं स्वनामाद्येन वै बुधः ४९
आवाहयेत्ततो देवं मन्त्रमूर्तिमयं शिवम्
बध्वा पञ्चमुखीं मुद्रां पञ्चमूर्धसु दर्शयेत् ५०
पूर्ववद्ध्याययेल्लिङ्गे देवदेवं सदाशिवम्
सद्येनावाहयेद्देवं स्थापयेद्गुह्यकेन तु ५१
सांनिध्यं स्यादघोरेण पुरुषेण निरोधनम्
स्वागतं पञ्चमेनैव पूजयित्वा यथाविधि ५२
पादौ पाद्यं हृदा दद्यादागतस्य शिवस्य तु
वक्त्रेष्वाचमनं दद्याच्छिरस्यर्घ्यं च दापयेत् ५३
गन्धं पुष्पं च धूपं च दीपं वै हृदयेन तु
शिवाङ्गैश्चैव विद्याङ्गैर्महाव्योमेति मन्त्रकैः ५४
शिवमन्त्रैर्हृदा चैव जलेनैवाभिषेचयेत्
गव्यैर्गन्धोदकेनैव पुष्पतोयेन सेचयेत् ५५

पाद्यमाचमनं चार्घ्यं हृदयेन प्रकल्पयेत्
वस्त्रोपवीतं गन्धं च मकुटं कुण्डलं तथा ५६
हारकेयूरमालां च हृदयेन प्रदापयेत्
धूपं दीपं हृदा दत्वा पञ्चमावरणं न्यसेत् ५७
सद्यं पश्चिमतो न्यस्त्वा वामदेवं तथोत्तरे
अघोरं दक्षिणे न्यस्त्वा पुरुषं पूर्वतो न्यसेत् ५८
ईशानमीशदिग्भागे न्यस्त्वा वै साधकोत्तमः
हृदयं वह्निदिग्भागे ऐशान्यां तु शिरो न्यसेत् ५९
नैर्ऋत्यां तु शिखां न्यस्त्वा कवचं वायुदेशके
नेत्रमीशानके न्यस्त्वा दिक्षु चास्त्रं न्यसेद्बुधः ६०
ब्रह्माङ्गानि ततो न्यष्ट्वा स्वस्वबीजेन देशिकः
गर्भावरणमेवं स्याद्द्वितीयावरणं शृणु ६१
अनन्तेशश्च सूक्ष्मश्च शिवोत्तमैकनेत्रकः
दिक्ष्वेतान्विन्यसेद्धीमानेकरुद्रं त्रिमूर्तिकम् ६२
आग्नेयादिषु कोणेषु श्रीकण्ठं च शिखण्डिनम्
द्वितीयावरणं प्रोक्तं तृतीयावरणं शृणु ६३
उमामुत्तरतो न्यस्त्वा वृषभं पूर्वतो न्यसेत्
याम्यायां गणराजं च वारुणे नन्दिकेश्वरम् ६४
षण्मुखं च महाकालं भृङ्गीशं चण्डमूर्तिनम्
आग्नेयादिषु कोणेषु पूजयित्वा यथाविधि ६५
इन्द्रादिलोकपालांश्च ऐन्द्रादिषु प्रकल्पयेत्
ब्रह्माणं नैर्ऋते न्यस्त्वा विष्णुमीशानदेशके ६६
गन्धपुष्पादिना पूज्य स्वस्वमन्त्रमनुस्मरन्
चतुर्थावरणं प्रोक्तं पञ्चमावरणं शृणु ६७
वज्रादिपद्मपर्यन्तं पूर्वादिषु प्रकल्पयेत्
गन्धपुष्पादिनाभ्यर्च्य स्वस्वनाम्ना तु देशिकः ६८
तत्काले ताडयेद्घण्टां पटं तत्रापनीय च
धूपदीपौ हृदा दत्वा घण्टारवसमन्वितम् ६९
पुनराचमनं दत्वा दर्पणं दर्शयेत्ततः

नैवेद्यं दापयेत्पश्चादुपदंशसमन्वितम्  ७०
गुलखराडसमायुक्तमाज्ययुक्तं दधिप्लुतम्
हृदा चाचमनं दत्वा दिग्बन्धं च ततः परम्  ७१
हृदा निवेदयेच्छम्भोर्दिग्बन्धं च ततः कुरु
पुनराचमनं दत्वा चराडेशाय निवेदयेत्  ७२
चराडस्याचमनं दत्वा निर्माल्यं च विसर्जयेत्
ताम्बूलं दापयेत्तत्र मुखवाससमन्वितम्  ७३
अग्निकार्यं ततः कुर्यात्पञ्चब्रह्मशिवाङ्गकैः
शिवमन्त्रं जपेत्पश्चाद् यथावित्तानुसारतः  ७४
प्रदक्षिणं नमस्कारमात्मनोऽर्पणमेव च
पूजाफलं च तत्सर्वमुदकेन प्रदापयेत्  ७५
संहितां च ततः कृत्वा गन्धपुष्पादिना बुधः
एवं यः पूजयेन्नित्यं स पुरायां गतिमाप्नुयात्  ७६
कुलैकविंशमुद्धृत्य शिवलोके महीयते
शिवलिङ्गार्चनं प्रोक्तं पीठपूजामथ शृणु  ७७
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे अर्चनाविधिपटलस्त्रयोविंशतितमः

## चतुर्विंशतितमः पटलः
### पत्रच्छेदविधिः

अतः परं प्रवक्ष्यामि पत्रच्छेदविधिं क्रमात्
पत्रच्छेदविधानेन पूजिता परमेश्वरी  १
धनधान्यसमृद्ध्यर्थं सर्वरोगनिवारणम्
पत्रच्छेदमिदं लोके सर्वप्राणिसुखावहम्  २
नन्दी सद्यमुखोद्भूतं वल्ली वाममुखोद्भवम्
अघोरे फेनं संभूतं प्रकीर्णं पुरुषोद्भवम्  ३
सती वामी च ज्येष्ठा च रौद्री चैवाधिदेवताः
चतुर्णां भेदवर्णानां षष्ट्युत्तरशतत्रयम्  ४
प्रत्येकं नवतिर्ज्ञेयं तेषां सारं तिथिर्भवत्
अनुलोमक्रमं योग्यं प्रतिलोमं न कारयेत्  ५

एकपत्रं कुठारी च नाराचं सूचि नालि च
क्षुरं व्रीहिमुखं चैव त्रिशिखं वृत्तबिन्दुकम् ६
ग्रौलिकं कर्तरी चैव शस्त्रनामानि कथ्यते
नानादेवीविकल्पे तु एकपत्रं प्रयोजयेत् ७
छेद्ये कुठारिका प्रोक्ता नाराचमभिवर्धने
सूचिका प्रोतकरणे पीडे चैव तु नालिका ८
क्षुरं तु सकलच्छेद्ये रेखा व्रीहिमुखोद्भवा
त्रिशिखं त्रिवृदावृत्तं सुषिरे वृत्तबिन्दुकम् ९
ग्रौलिर्वल्लीक्रियायुक्तः चोत्कृत्ये कर्तरी भवेत्
शस्त्रेषु योगमेवं स्यात्फलकावृक्षमुच्यते १०
चूतं वा पनसं वापि शाल्मली च शिरीषका
चम्पकं चन्दनं चैव प्रोच्यन्ते दारवः क्रमात् ११
विस्तारं पिण्डकोत्सेधं भवेदध्यर्धमायतम्
दर्पणोदरसंकाशं चतुष्पादसमन्तिवम् १२
हेमरौप्यसरत्नाढ्यां कुर्यात्तु फलकां स्थिराम्
लयं स्यात्पत्रकरणं पुष्पादि च तथैव च १३
सर्वगन्धैश्च पिष्टैश्च फलकां लिप्य सर्वतः
मृदा गन्धोदकेनैव तथालिप्य प्रपूजयेत् १४
फलका पार्वती ज्ञेया पूजया सकलं व्रजेत्
ब्राह्मणस्य सिता रम्भा क्षत्रियस्य महेन्द्रवत् १५
गन्धा रम्भा तु वैश्यानां कृष्णा रम्भा चतुर्थके
सर्वेषामपि वर्णानां नालिकेराम्रपत्रकम् १६
घृतवर्तिप्रदीपे तु सम्यक्पत्रान्प्रदीपयेत्
उत्तराभिमुखो भूत्वा फलकाबन्धमाचरेत् १७
छेदयेद्विधिरूपं तु न्यस्तव्यं फलकोपरि
तत्तद्वर्णानुसारेण हृदयेन प्रकल्पयेत् १८
द्रोणं वै नन्द्यावर्तं च श्रियावर्तं च मल्लिका
श्वेतावर्तं मालती च पुन्नागं शङ्खपुष्पकम् १९
श्वेतपुष्पं च मन्दारं मालती बहुकर्णिका

एवं श्वेतं समाख्यातं रक्तपुष्पं ततः शृणु २०
रक्तपुष्पं तथा युक्तं बन्धूकं दाडिमी जपा
रक्तोत्पलं पलाशं च कुमुदं रक्तमेव च २१
लाङ्गली करवीरं च पाटली च चतुर्दली
एवं रक्तं समाख्यातं पीतवर्णमतः शृणु २२
धातकी कर्णिकारं च चम्पकारग्वधं तथा
स्वर्णकुल्ली च कूष्माण्डं मदयन्ती च धूर्धुरम् २३
सौर्यकश्च यशोनस्थः कृष्णवर्णमथ शृणु
नीलोत्पलाञ्जली चैव कृष्णं स्याद्गिरिकर्णिका २४
कृष्णलक्ष्मी च कल्हारं विष्णुक्रान्ती तथैव च
एवं कृष्णं समाख्यातं पत्राणामधुनोच्यते २५
बिल्वपत्रं च धुर्धूरं तुलसी धातकी तथा
पलाशं पद्मपत्रं च आपामार्गं तपस्विनी २६
नन्दीपत्रं मुनिपत्रं पत्रमेरण्डकस्य तु
स्नपनाङ्गानि यद्द्रव्यं पूजाङ्गानि तथा पुनः २७
उक्तं वाप्यथवानुक्तं पुष्पपत्रं सगन्धकम्
गृहीत्वा तु विशेषोऽयमिष्टसिद्धमनोरमम् २८
एवं पत्रं समाख्यातं वर्णबन्धमतः शृणु
फलकायास्तु विस्तारं षोडशांशैर्विभाजयेत् २९
अभितोऽर्कपदान्सर्वान्द्व्यंशं कृत्वा विशेषतः
अभितो रक्तमालाख्ये भूतमाला परांशके ३०
नन्दिजातेस्तु भूतं स्याद् वल्लिजातेस्तु पत्रकम्
हंसमाला च फेनस्य शफरं स्यात्प्रकीर्णके ३१
तन्मध्ये पद्मपुष्पं स्यान्नानापत्रसमन्वितम्
मालिका मण्डपं चैव प्रासादं गोपुरं सह ३२
वृषं गजाश्वरूपं च व्याघ्रसिंहालिरूपकम्
पक्षिरूपं तथा सर्पं भूतविद्याधराणि च ३३
रूपाण्येतानि संछेद्य न्यस्तव्यानि तु मध्यमे
प्राक्सूत्रं द्वादशं चैव द्विगुणं सोमसूत्रकम् ३४

मध्ये नवपदं कृष्णं तत्र शङ्खनिधिर्भवेत्
अभितः षोडशं रक्तं श्यामं स्याद्द्वादशद्वयम्  ३५
द्वात्रिंशत्पीतवर्णं स्याच्छ्वेतं रक्तं सुकृष्णकम्
तत्पार्श्वयोः पदाः शेषाः पद्मं मध्ये सुरक्तकम्  ३६
भूतमाला तथांशोर्ध्वे तस्योर्ध्वे च चतुर्दली
दक्षिणोत्तरसूत्रं स्यात् षट्सूत्रं स्यात्तु तुर्यकम्  ३७
मध्ये पद्मनिधिं पीतं रन्ध्रं रक्तसमन्वितम्
शेषं शफरबन्धं स्याच्छ्यामरक्तं सिताञ्जनम्  ३८
पूर्वाग्रमष्टसूत्रं स्याद्द्वादशं दक्षिणोत्तरे
मध्ये नवपदं पद्मं रन्ध्रं रक्तसमन्वितम्  ३९
तद्बाह्येऽष्टपदं श्याममष्टावष्टौ पदान्तकम्
तत्पार्श्वयोर्द्वयोः पीतं पञ्चपञ्चपदं तथा  ४०
तत्पार्श्वे कृष्णवर्णं तु शफराकृतिरावृतम्
शफरं भूषयेद्विद्वान्पूर्ववर्णानुरूपतः  ४१
पूर्वाग्रं दशसूत्रं स्यादुदक्सूत्रं चतुर्दश
नवपदे तु तन्मध्ये गौरीं कुर्यात्सुभूषिताम्  ४२
घनवर्णा तदाकारां रन्ध्रं रक्तेन भूषितम्
तद्बाह्ये षोडशं श्वेतं शुक्लैः षोडशभिर्युतम्  ४३
चतुर्विंशच्च तद्बाह्ये कृष्णरक्तविमिश्रकम्
शेषं शफरबन्धं स्यात् पूर्ववत्कृष्णसंकरम्  ४४
पूर्वाग्रं पञ्चसूत्रं स्यादुदगग्रं तथैव च
मध्ये चतुष्पदे काली योगिन्यौ द्वौ समायुतौ  ४५
श्यामाभा सा महाकाली रन्ध्रं रक्तसमन्वितम्
द्विगुणीकृत्य रेखां तु रन्ध्रं रक्तसमन्वितम्  ४६
रक्तपद्मं महाकोणे रन्ध्रं पीतसमन्वितम्
शेषं शफरबन्धं स्याच् छ्यामरक्तादिमिश्रितम्  ४७
प्रागग्रं दशसूत्रं स्यादुदगग्रं तथैव च
नवपदे तु तन्मध्ये प्रासादं लिङ्गसंयुतम्  ४८
अभितः श्यामलाकारं तद्बाह्ये रक्तमेव च

मिश्रं स्याच्छ्वेतपीताभ्यां द्वात्रिंशत्पदमुत्तमम् ४९
पूर्वाग्रं सप्तसूत्रं स्यादुदगग्रं तथैव च
चत्वारि पदमध्ये तु कुर्याद्गरुडमुत्तमम् ५०
गरुडं श्वेतवर्णं स्याच्छ्वभ्रं विमलसंयुतम्
तद्बाह्ये द्वादशे हंसं प्राकारं भूतरक्तकौ ५१
क्षेत्रं षोडशधा कृत्वा मध्ये चैव चतुष्पदे
कुर्यान्मनोन्मनीं मध्ये रन्ध्रं रक्तसमन्वितम् ५२
चतुर्दिक्षु पदे द्वे द्वे कुर्याच्छफरिबन्धनम्
श्वेतपद्मं महाकोणे रन्ध्रं रक्तसमन्वितम् ५३
प्रागग्रं द्वादशं सूत्रं विंशतिर्दक्षिणोत्तरम्
मध्ये नवपदे भूतं रन्ध्रं पीतसमन्वितम् ५४
अभितः षोडशं रक्तं तद्बाह्ये श्वेतमेव च
द्वात्रिंशत्तु पदं बाह्ये पीतरक्तादिमिश्रकम् ५५
तस्य बाह्यावृतं शक्तं शेषं शफरबन्धनम्
षट्सूत्रं प्राङ्मुखं ज्ञेयं दशसूत्रं तथोत्तरम् ५६
मध्ये नवपदं कृष्णमश्विनौ द्वौ प्रकल्पयेत्
अभितः षोडशं रक्तं शेषं शफरबन्धनम् ५७
शफरं भूषयेद्धीमान्पूर्वोक्तविधिना सह
कृत्वा षोडशधा क्षेत्रं मध्ये चैव चतुष्पदम् ५८
मध्ये चैव महालक्ष्मी रन्ध्रं रक्तसमन्वितम्
अभिषेकोन्मुखौ नागावङ्गयोः पार्श्वयोः स्थितौ ५९
छत्रचामरदीपैश्च गजबृन्दैश्च सेविताम्
प्रागग्रं द्वादशं सूत्रं विंशतिर्दक्षिणोत्तरम् ६०
मध्ये नवपदं कृष्णं कालाग्निस्तस्य मध्यतः
अभितः षोडशं रक्तं श्यामं वै तस्य मध्यतः ६१
चतुर्विंशति तद्बाह्ये पीतं चतुर्दलीयुतम्
द्वात्रिंशच्च पदे बाह्ये कृष्णं चतुर्दलीयुतम् ६२
चत्वारिंशत्पदं बाह्ये नानावर्णसमायुतम्
शेषं शफरबन्धं स्यात्कृष्णवर्णादिसंयुतम् ६३

चतुर्दशं स्यात्प्राक्सूत्रमुदक्सूत्रं तथैव च
मध्ये नवपदं पीतं तस्य मध्ये गणाधिपः ६४
अभितः षोडशं श्वेतं तस्य मध्ये चतुर्दली
तस्य बाह्ये चतुर्विंशज्जपाया रक्तमेव च ६५
द्वात्रिंशच्च भवेच्छ्यामं शेषं शफरबन्धनम्
प्रागग्रं द्वादशं सूत्रमुदगष्टदशं पुनः ६६
मध्ये नवपदं कृष्णं वृषभं तस्य मध्यतः
तद्बाह्ये षोडशं रक्तं श्यामवर्णं ततो बहिः ६७
शेषं पीतादिसंयुक्तमावृतं पीतमेव च
एते पञ्चदश प्रोक्ता नन्दिजातेर्महानल ६८
एकैकं षट्सुभेदेन नन्दिजातिर्विधीयते
नन्दिजातिः समाख्याता वल्लिजातिमतः शृणु ६९
प्रागग्रं दशसूत्रं स्यादुदगग्रं तु विंशतिः
तन्मध्ये नवकं पीतं तस्य मध्ये दिवाकरम् ७०
पद्महस्तं तु रक्ताङ्गं मण्डलेनैव मण्डितम्
षोडशं जपया रक्तं पीतं बाह्ये प्रकल्पयेत् ७१
प्राकारं वल्लिजातं स्याच्छेषं शफरबन्धनम्
षड्भिः षड्भिस्तथा सूत्रैः पदं वै पञ्चविंशतिः ७२
मध्ये नवपदं कृष्णं वल्लिजातिसमन्वितम्
तद्बाह्ये षोडशं रक्तं श्वेतवल्लिसमायुतम् ७३
प्रागग्रं ग्रहसूत्रं स्याद्रुद्रसूत्रमुदग्भवेत्
मध्ये चतुष्पदं रक्तं श्रीभूमिसहितं भवेत् ७४
अभितो द्वादशं श्वेतं कृष्णवर्णं ततो बहिः
प्राकारं वल्लिजातिः स्याच्छेषं शफरबन्धनम् ७५
शफरीं भूषयेद्विद्वाञ्चतुर्वर्णेन तत्क्रमात्
प्राङ्मुखं तु चतुःसूत्रमुदग्मुखं तथैव च ७६
मध्यमे च महद्रत्नं तन्मध्ये चन्द्रमा भवेत्
श्वेतवर्णदलाकारं श्वेतमण्डलमण्डितम् ७७
अष्टश्वभ्रमही स्थाप्य श्वेतरक्तं तु रक्तकम्

पूर्वाग्रं पञ्चसूत्रं स्यादुदगग्रं तथैव च ७८
मध्यमे तु महाशास्ता श्यामवर्णं सपत्निकम्
रन्ध्रं रक्तं द्वयोः पार्श्वे सुवस्त्रौ पीतवर्णकौ ७९
शेषं वल्लिसमं श्वेतं रन्ध्रं रक्तादिसंयुतम्
चत्वारिसूत्रं प्रागग्रमुदक्सूत्रं तु षड्भवेत् ८०
मध्यमे मण्डपाकारं तस्य मध्ये सरस्वती
उभयोः पार्श्वयोश्चैव ऋृषीन्सप्त प्रकल्पयेत् ८१
नानावर्णसमायुक्तं वल्लीसूत्रं च कारयेत्
रन्ध्रं रक्तसमायुक्तमृषयः श्यामवर्णकाः ८२
पूर्वाग्रं वसुसूत्रं स्यात्तावदेव तु सौम्यकम्
मध्ये नवपदं कृष्णं यज्ञमूर्तिविभूषितम् ८३
दीपचामरछत्रैश्च भूषितं सुविशेषतः
अभितः षोडशं रक्तं शेषं शफरबन्धनम् ८४
षट्सूत्रं चैव प्रागग्रमुत्तराग्रं चतुर्दशम्
मध्ये नवपदं रक्तं श्वेतपद्मविभूषितम् ८५
अभितः षोडशं कृष्णं तदूर्ध्वे तु चतुर्दली
उभयोः पार्श्वयोर्भित्तिः श्यामवर्णसमन्विता ८६
शेषं शफरबन्धं स्यात्तत्तद्वर्णानुभूषितम्
चतुरश्रीकृतं क्षेत्रं मध्ये वृत्तसमन्वितम् ८७
तन्मध्ये तु गजारूढं कुमारं परिकल्पयेत्
विद्याधरौ तु तत्पार्श्वे चामरासक्तहस्तकौ ८८
श्वेतादिवल्लिकायुक्तं रक्तवर्णादिसंयुतम्
चतुर्दशं स्यात्प्रागग्रमुदगग्रं तथैव च ८९
मध्ये नवपदं कृष्णं ब्रह्मा मध्ये तु संस्थितः
अभितः षोडशं श्यामं तन्मध्ये तु चतुर्दली ९०
तद्बाह्ये चाष्टदिक्ष्वष्ट वसवः परिकल्पिताः
द्विपदं श्वेतरक्ताभ्यामन्वितं परितः क्रमात् ९१
आवृत्यैकपदं श्यामं तन्मध्ये तु चतुर्दली
शेषं वल्लिसमायुक्तं रक्तादिसर्ववर्णभाक् ९२

प्रागग्रमृषिसूत्रं स्यादुदगग्रं तथैव च
चक्रं चतुष्पदं मध्ये छत्रचामरसंयुतम् ९३
वासवं श्यामवर्णं तु तद्रन्ध्रं पीतमेव च
अभितो द्वादशं श्वेतं शेषं शफरिबन्धनम् ९४
चतुर्भिः पूर्वगं सूत्रमुदक्सूत्रं तथैव च
चतुरश्रस्य मध्ये तु दुर्गादेवीं प्रकल्पयेत् ९५
श्यामवर्णयुता देवी तद्रन्ध्रं रक्तमेव हि
सितसिंहाष्टकैर्युक्तं रन्ध्रं रक्तविभूषितम् ९६
पूर्वाग्रमष्टसूत्रं स्यादुदक्सूत्रं चतुर्दश
रक्तपद्मं तु तन्मध्ये रन्ध्रं कृष्णसमन्वितम् ९७
तद्बाह्ये षोडशं रक्तं तस्य मध्ये तु वल्लिका
प्राकारं वल्लिकायुक्तं शेषं शफरिबन्धनम् ९८
क्षेत्रं तु चतुरं कृत्वा पूर्वाग्रं पञ्चसूत्रकम्
चतुष्पदे तु तन्मध्ये चण्डेशं परिकल्पयेत् ९९
चण्डेशः पीतवर्णः स्यात्तद्रन्ध्रं रक्तमेव च
धेनुं कुर्याच्चतुष्कोणे शेषं वाल्ल्यादिभिर्युतम् १००
चतुर्दशं स्यात्प्राक्सूत्रं विंशतिर्दक्षिणोत्तरम्
मध्ये नवपदं कृष्णं तस्य मध्ये ह्युमा भवेत् १०१
तद्बाह्ये षोडशं रक्तं तद्बाह्ये श्वेतमेव च
तद्बाह्ये श्यामवर्णं तु तस्य बाह्येऽञ्जनं तथा १०२
प्राकारं वल्लिकाबन्धं शेषं शफरिबन्धनम्
एवं वल्ली समाख्याता दशपञ्चकसङ्ख्यया १०३
षट्षड्भेदं तु वैकैकं फेनकं चाधुनोच्यते
प्रागग्रं द्वादशं सूत्रं द्विगुणं दक्षिणोत्तरम् १०४
मध्ये नवपदं रक्तं मण्डलं पीतवर्णकम्
तद्बाह्यैकावृतं श्यामं चतुर्दलसमन्वितम् १०५
तद्बाह्यैकावृतं रक्तं दिग्विदिक्षु सितं भवेत्
नानावर्णं तु तद्बाह्ये हंसमाला च तद्बहिः १०६
शेषं शफरिबन्धं स्यान्नानावर्णसमन्वितम्

द्वादश स्यादुदक्सूत्रं प्राक्सूत्रं वसुसङ्ख्यया १०७
वामा नीलनिभा मध्ये रन्ध्रं रक्तसमन्वितम्
षोडश बाह्यतो रक्तं तन्मध्ये पीतमेव च १०८
तत्पार्श्वयोर्द्वयोर्ग्रन्थिः पीतवर्णसमन्वितः
पूर्वे च पश्चिमे चैव रक्तं पञ्चपदं तथा १०९
अल्पपद्मं तथा शेषं मध्ये रक्तसमन्वितम्
शेषं वै बुद्बुदाकारं पञ्चवर्णसमन्वितम् ११०
चतुःसूत्रं तु प्रागग्रं षट्सूत्रं दक्षिणोत्तरम्
बुद्बुदां महतीं मध्ये कृष्णां स्यात्परितः क्रमात् १११
वामाष्टकं स्यात्तन्मध्ये योजयेच्छ्वभ्रं बुद्बुदम्
शेषं शफरिबन्धं स्यात् तत्तद्वर्णानि भूषयेत् ११२
अभ्यन्तरावृतं श्यामं श्वेतं रक्तं तु पीतकम्
पूर्ववत्सूत्रविन्यासं मध्यमे रौद्रिका भवेत् ११३
पदेष्वष्टसु परितः शक्तयश्चाष्ट विन्यसेत्
शक्तयः पीतवर्णाश्च श्यामवर्णं तु रन्ध्रकम् ११४
शेषं शफरिबन्धं स्याद्भूषणैर्भूषणार्हकैः
पूर्वाग्रं द्वादशं सूत्रं षोडशं दक्षिणोत्तरम् ११५
मध्ये नवपदे मोटीं कल्पयेच्छ्यामवर्णकाम्
शुक्लं तु षोडशे बाह्ये रन्ध्रं रक्तसमन्वितम् ११६
तद्बाह्ये कृष्णवर्णं स्यात्तन्मध्ये तु चतुर्दली
नानावर्णं तु तद्बाह्ये प्राकारं पक्षिभिर्युतम् ११७
शेषं शफरिबन्धं स्यात्कृष्णवर्णादिसंयुतम्
पूर्वसूत्राश्च चत्वारो दक्षिणोत्तरगास्तु षट् ११८
तन्मध्ये तु चसुष्कोणे कूटाकारं तु कारयेत्
चतुर्दिक्षु चतुः शाला पार्श्वयोः पञ्जरं भवेत् ११९
षड्भन्तिमध्यमे कुर्यान्नानावर्णेन भूषयेत्
पूर्वाग्रं दशसूत्रं स्याद्द्विगुणं दक्षिणोत्तरम् १२०
मध्ये नवपदं रक्तं ज्येष्ठादेवीं प्रकल्पयेत्
आवृतं षोडशं कोष्ठं कृष्णं मध्ये चतुर्दली १२१

चतुर्विंशतिरक्ताङ्गा त्रिवृत्तं रक्तमेव च
अल्पपद्मं तथा शेषं हंसमालापरीवृतम्  १२२
प्रागग्रं दशसूत्रं स्यादुदगग्रं तथैव च
मध्ये नवपदं रक्तं मध्यमे नन्दिकेश्वरम्  १२३
बाह्ये षोडशपद्मं तु तद्रन्ध्रं श्याममेव च
नानावर्णं तु तद्बाह्ये तद्बाह्ये हंसमालिका  १२४
पूर्वाग्रमष्टसूत्रं स्याद्द्वादशं दक्षिणोत्तरम्
मध्ये नवपदं कृष्णं तस्य मध्ये स्मरं न्यसेत्  १२५
अभितः षोडश श्वेतं परितः पक्षिपङ्क्तिका
शेषं हि बुद्बुदाकारं सर्ववर्णसमन्वितम्  १२६
चतुष्षष्टिपदे मध्ये क्षेत्रज्ञं परिकल्पयेत्
अभितो द्वादशं रक्तं नानावर्णं ततो बहिः  १२७
हंसमाला तु तद्बाह्ये रन्ध्रं रक्तसमन्वितम्
अष्टौ वै पूर्वसूत्रं स्याद्द्विगुणं दक्षिणोत्तरम्  १२८
मध्ये नवपदं ग्राह्यं रक्तपद्मसमन्वितम्
आवृतं बुद्बुदाकारं रन्ध्रं रक्तसमन्वितम्  १२९
चतुर्माला तु तद्बाह्ये शेषं शफरिबन्धनम्
ऐन्द्राग्रं द्वादशं सूत्रमुदक्सूत्रं तथैव च  १३०
मध्ये नवपदं कृष्णमगस्त्यो मुनिसङ्गमे
अभितः षोडशं रक्तं चतुर्विंशतिकं पदम्  १३१
मध्ये चतुर्दली चैव तद्बाह्ये फेनकं भवेत्
पञ्चविंशद्विभज्याथ द्विगुणीकृतसूत्रकम्  १३२
मध्ये नवपदं रक्तं तन्मध्ये तु यमो भवेत्
अभितोऽष्टपदं कृष्णं तस्य मध्ये चतुर्दली  १३३
आवृतं बुद्बुदाकारं तस्य मध्ये तु रक्तकम्
पञ्चविंशत्पदं मध्ये कृष्णारूपं प्रकल्पयेत्  १३४
अभितश्चाष्टवसवस्तद्रन्ध्रं पीतवर्णकम्
तद्बाह्ये षोडशं कृष्णं तस्य मध्ये चतुर्दली  १३५
प्रागग्रं दशसूत्रं स्यादुदगग्रं तथैव च

मध्ये नवपदं रक्तं चामुराडां तां प्रकल्पयेत् १३६
योगिनीं भैरवीं चैव तद्बाह्ये षोडशे पदे
शेषं पक्षिवदाकारं नानावर्णसमन्वितम् १३७
एवं फेनं समाख्यातं पञ्चदश च सङ्ख्यया
षट्षड्भेदं तु प्रत्येकं प्रकीर्णकमथ शृणु १३८
प्राक्सूत्रं दशकं कृत्वा उदक्सूत्रं चतुर्दश
मध्ये नवपदं कृष्णं गङ्गादेवीं तु मध्यमे १३९
तद्बाह्ये षोडशं श्यामं चतुर्विंशतिपद्मकम्
रन्ध्रं रक्तादिसंयुक्तमावृतं रक्तवल्लिका १४०
प्राकारं मर्कटोपेतं शेषं शफरिबन्धनम्
पूर्वाग्रं तु तद्दृक् कुरु दक्षिणाग्रं तथैव च १४१
मध्ये नवपदं लिङ्गं नानावर्णसमन्वितम्
ऋतुसूत्रं तु पूर्वाग्रमुत्तराग्रं तथैव च १४२
नवके दक्षिणामूर्तिः पार्श्वयो ऋषयस्तथा
नानावर्णं यथान्यायं फलके चित्रयेद्बुधः १४३
ऐन्द्रादिद्वादशं सूत्रमुदगग्रं तथैव च
मध्ये नवपदं कृष्णं तन्मध्ये नारसिंहकम् १४४
अभितः षोडशं रक्तं तन्मध्ये सिंहमेव च
चतुर्विंशतिकं श्यामं श्वेतपद्मं तु तद्बहिः १४५
शेषं शफरिबन्धं तु रन्ध्रं रक्तादिभिर्युतम्
चतुःसूत्रं तु पूर्वाग्रं वसुभिर्दक्षिणोत्तरम् १४६
मध्ये नवपदं श्यामं तन्मध्ये श्वेतसिंहकम्
शेषं शफरिबन्धं स्याद्रन्ध्रं रक्तादिवर्णभाक् १४७
प्राङ्मुखं दशसूत्रं स्यादुत्तराग्रं चतुर्दशम्
मध्ये नवपदं कृष्णं किन्नरद्वयसंयुतम् १४८
अभितः षोडशं पीतं तस्य मध्ये चतुर्दलम्
तद्बाह्ये तु चतुर्विंशज्ञपाया रक्तमेव च १४९
शेषं शफरिबन्धं स्याद्रन्ध्रं रक्तादिवर्णभाक्
प्राङ्मुखं दशसूत्रं स्यात्तद्वदेवोदगग्रकम् १५०

सितपद्मं तु तन्मध्ये रन्ध्रं रक्तसमन्वितम्
व्यूढतैकं तथा कृष्णं तस्य मध्ये चतुर्दली १५१
नानावर्णं च तद्बाह्ये तद्बाह्ये मर्कटान्वितम्
शेषं शफरिबन्धं स्यान्नानावर्णसमन्वितम् १५२
क्षेत्रं तु चतुरं कृत्वा उदक्सूत्रं तु षड्भवेत्
पूर्वाग्रसूत्रं चत्वारि मध्ये मेरुं प्रकल्पयेत् १५३
नानादेवसमायुक्तं नानाविद्याधरैर्युतम्
उभाभ्यामपि पार्श्वाभ्यां मर्कटेन समन्वितम् १५४
नानावृक्षसमायुक्तं नानाकदलिकायुतम्
पूर्वाग्रमृतुसूत्रं स्यादुत्तराग्रमथाष्टकम् १५५
मध्ये नवपदं श्वेतं तन्मध्ये भैरवं कुरु
रक्तवर्णाम्बरोपेतं श्वेतभारणसंयुतम् १५६
परितः कटकं रूपं शेषं पद्मसमन्वितम्
पूर्वाग्रं दशसूत्रं स्यादुदगग्रं तथैव च १५७
मध्ये नवपदं पद्मं तद्रन्ध्रं श्याममेव च
अभितः षोडश रक्तं नानावर्णं ततो बहिः १५८
मर्कटं परितः कुर्यान्नानावर्णसमन्वितम्
प्रागग्रमष्टसूत्रं स्यादुदगग्रं तथैव च १५९
मध्ये चतुष्पदं श्यामं तन्मध्ये नागदैवतम्
अभितो द्वादश श्यामं तन्मध्ये तु चतुर्दली १६०
अभितो मर्कटं बन्धं नानावर्णसमन्वितम्
पूर्वाग्रं दशसूत्रं स्याद्द्वादशं दक्षिणोत्तरम् १६१
मध्ये नवपदं कृष्णं बहिः पञ्च चतुर्दली
नानावर्णं तु तद्बाह्ये तद्बाह्ये रक्तमेव च १६२
शेषं शफरिबन्धं स्यान्नानावर्णसमन्वितम्
दक्षिणोत्तरतः सूत्रं षट् स्युः प्राग्दश एव च १६३
तन्मध्ये तु महापद्मं रन्ध्रं रक्तसमन्वितम्
शेषं शफरिबन्धं स्यात्पीतवर्णादिसंयुतम् १६४
एवं प्रकीर्णमाख्यातं पञ्चदश च सङ्ख्यया

प्रत्येकं षट्कं प्रोक्तं स्यात्प्रकीर्णकमुदाहृतम्  १६५
मेषादिमिथुनान्तं तु नन्दिजात्यादि बन्धयेत्
कर्कटादिकन्यकान्तं वल्लिजात्यादिना यजेत्  १६६
तुलादिधनुःपर्यन्तं फेनजात्या सुपूजयेत्
मृगादिमीनपर्यन्तं पूजयेत्तु प्रकीर्णकम्  १६७
पत्रच्छेदविधानेन यो नरः पूजयेच्छिवम्
सर्वपापविनिर्मुक्तः शिवलोके महीयते  १६८
पत्रच्छेदविधिः प्रोक्तश्चार्धयामं ततः शृणु  १६९
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे पत्रच्छेदविधिपटलः चतुर्विंशतितमः

## पञ्चविंशतितमः पटलः
## अर्धयामार्चनम्

अर्धयामार्चनं वक्ष्ये सर्वकर्मार्थसाधनम्
सर्वमङ्गलसंयुक्तं सर्वदेवहितावहम्  १
सर्वदेवान्तरन्ते तु संहताकृति जायते
जायते जातिषट्के तु इच्छाज्ञानक्रियावहम्  २
वाहनं संहितामन्त्रैरासनं मूर्तिमूलवत्
क्रियाद्वैतं न कर्तव्यं भावाद्वैतं समाचरेत्  ३
क्रियानिर्वहतेरस्तु भावशुद्धं तु शाङ्करी
शाङ्करी उत्पलाभाक्षी एतद्रूपमिहोच्यते  ४
तद्रूपं रक्तवर्णं तु श्वेतमेकाननं शिवम्
शिवपादुकसंयुक्तं शिवाकारं त्रिलोचनम्  ५
इन्दुवक्त्रं जटाजूटं कपर्दिं च चतुर्भुजम्
हरिणीटङ्कसंयुक्तं हंसहंसायुधद्वयम्  ६
अभयसहितवामं वरदं सर्वरक्षितम्
आसनं च तिरोभावं भाविताभावरूपकम्  ७
भावनालिङ्गभावे तु पादुकारूपमर्चयेत्
पादुका पिङ्गलाक्षी सा सौषुम्नान्तःस्थदेहवत्  ८
देहिवर्तहृत्पद्मे हि देहिदेहमनोरथम्

अर्चयित्वा तदूर्ध्वे तु आसनं तत्र योजितम्  ९
आसनाकाररूपेषु आसनावरणादिषु
त्रिनेत्रं चतुर्भुजं शान्तं जटामकुटमण्डितम्  १०
वरदाभयकं द्वन्द्वे हरिणीटङ्कधारिणम्
पद्मासनं हृदोल्लासमर्धयामे प्रपूजयेत्  ११
पादुकालिङ्गमेवोक्तं प्रभया उमय सह
तद्विशेषविधिं स्नायादलङ्कृत्य तु धारिकाम्  १२
विन्यसेत्संहितामन्त्रैरर्चनावरणादिकम्
पायसान्नमपूपैश्च नालिकेरफलादिभिः  १३
नैवेद्यं धूपदीपं च उपचाराणि दापयेत्
लिङ्गे च प्रतिमोत्सवं च प्रतिमान्ते तु लिङ्गवत्  १४
प्रतिमं पादुकाद्वन्द्वे प्रतिमासु विशेषतः
प्रतिमां प्राणशक्तिं च पूजां कृत्वा न रोपयेत्  १५
द्वाराग्रे फल्लकं न्यस्त्वा कलानारी कलेश्वरः
कलामरावती प्रज्ञा कला रक्तारुणो वयः  १६
द्वात्रिंशल्लक्षणैर्युक्ता स्नात्वा शुद्धवती च सा
अथवा तत्पराशक्तिं सङ्ग्रहेद्द्विजसत्तमः  १७
खड्गखेटकधारा च छत्रचामरधारका
चक्रं च दर्पणं पाशं वज्रं शक्तिं तथाङ्कुशम्  १८
दण्डं पद्मद्वयं चैव पात्रं गण्डूषपात्रकम्
धारयेद्द्विविधाश्चैव फल्लके पञ्चराग्रकम्  १९
ऊर्ध्वे ब्रह्मा च विष्णुश्च द्वाराग्रे सुस्थितेऽपि च
शङ्खघोषसमायुक्तं जयशब्दादिमङ्गलैः  २०
फल्लकेशं ततोद्धृत्य ब्राह्मणान्स्वस्तिवाचकैः
श्रुतिवाचपुराणाद्यावृत्तं पञ्चाङ्गमेव च  २१
शङ्खघोषसमायुक्तं वीणाकाहलझल्लरी
दुन्दुभिः पटहैस्तालैर्धवलैर्जयघण्टकैः  २२
बहुनादसदाघोषैः स्वाहान्तं हृदि योजितम्
वस्तुदेवस्तुतिर्याम्ये घोरहृद्रूपसंपुटम्  २३

गीतं वाद्यं तदन्ते तु योजयेन्नृत्तमेव च
विनोदगानक्रीडा च भ्रमरी वायुवेगवत् २४
शिखाकुसुमवृष्टीषु विग्रहेद्वायुरन्तवत्
वल्लकी सप्ततन्त्री च कैलासं सहरक्षसः २५
वादयेत्स्वच्छनादैश्च वेणुनादैश्च तोषयेत्
संव्रजेद्भैरवीनृत्तं तत्र गानं तु दासिका २६
वामादेरीशपर्यन्तं वाद्यगीतं च नृत्तकम्
ईशादेरिन्द्रपर्यन्तं शक्योल्लासं तु सेवितम् २७
नानानृत्तसमायुक्तं नानागानैर्निषेवितम्
द्वाराग्रे फल्लके स्थिते पाद्यमाचमनं ददेत् २८
अन्यथा भोगनिष्ठोऽपि प्राविशेच्छयनालयम्
योगासनोपरिष्टात्तु विन्यसेत्परमेश्वरम् २९
पादुकां वा विशेषेण विन्यसेत्तु दृढीकृतम्
अर्चयेदासनोर्ध्वे तु शक्तिशक्त्यन्तरान्तवत् ३०
आवाहिन्या तदावाह्य धूपदीपादिकं ददेत्
शङ्खोदकं पुरः स्नाप्य हृदयादीन्समर्चयेत् ३१
प्रोक्षयेद्धृदयेनैव देहन्यासान्तरीयुतम्
अन्तर्मण्डलमध्यस्थं ज्वालामालाविभूषितम् ३२
ज्वालोज्ज्वलितसंकाशं तस्योर्ध्वे रविकोटिभिः
तस्योपरि निधातव्यं सोमास्कन्देश्वरं शिवम् ३३
स्वाधिष्ठानविशुद्ध्यन्तस्तत्रान्तरे विभावयेत्
कलापात्रान्तगन्धस्थां शक्तिं सौदामिनीप्रभाम् ३४
तालस्तत्र च देवेषु पत्रमध्ये पदद्वयम्
भावयेत्परमं नित्यं लक्षसोमायुतं परम् ३५
भ्रूमध्ये द्वयपत्रस्थं तस्योपरि स्थितं शिवम्
मूलादिब्रह्मरन्ध्रान्तं शिवतत्त्वान्तवर्त्मनि ३६
शङ्खोदकेन संप्रोक्ष्य श्लीं पं शुं हुं फटिति स्य च
जातिकेतककल्हारैर्मरुद्वन्द्वे च मल्लिका ३७
षड्वक्त्रं प्रपदं पुष्पैरेकैकं कुसुमार्चनम्

ज्ञानशक्त्यासनान्ते तु ग्रासनं परिकल्पयेत्  ३८
ग्रनाहताकौ वर्ध्यत्वा ग्राधारान्ते विनिर्गतम्
नित्यं निरञ्जनं शुद्धमनावृत्ते तु वर्जितम्  ३९
शिवागृहं च ते गत्वावाहस्थापनसंनिधौ
निरोधनं कृत्वा ++ विन्यसेद्धृदि रूपवत्  ४०
नखारोपादुकादन्ते शिवाग्रे कलशाग्रके
द्वादशं दर्पकव्युक्तं सौकारं हृदयादिषु  ४१
ग्रर्चयेद्धूपदीपं च पुनः पुष्पाक्षतानि च
ग्रकारं च मुकारं च मिकारे बिन्दुनादकम्  ४२
ब्रह्मवर्णकला जप्वा सर्वपुष्पाणि चार्चयेत्
वल्लकीनादशक्तोऽपि ग्रर्चयित्वा नमः क्रमात्  ४३
वह्निरन्तरदन्तै तु पद्मं यान्ति रान्तव
शिवकामेश्वरीं ध्यात्वा शिवकामेश्वरं शिवम्  ४४
शिवभावमिति ध्यायेदुपचारादि दापयेत्
क्षीरोदनमपूपाद्यैर्नालिकेरफलादिकम्  ४५
दापयेद्देवदेवीं च ताम्बूलं च लकारवत्
ताम्बूलान्ते जलं दद्यादिक्षुसारोद्भवादिषु  ४६
दापयेन्मुखवासं तु कर्पूरादिसमायुतम्
धूपदीपं हृदा दद्यात्कर्पूरागरुचूर्णवत्  ४७
ग्रर्घ्यं दत्वा त्रिधा प्रोक्तं मुखवासैः पुनः पुनः
दर्शयेत्तु कलाशक्तौ स्वायुधानुपचारवत्  ४८
दर्शयेद्देवदेवेशे पुरतः पादुकाद्वयम्
विन्यसेच्छङ्खतोये तु प्रोक्षयेच्छक्तिकाद्वयम्  ४९
द्वाराग्रे दक्षिणे वामे विन्यसेत्स्तोत्रशब्दवत्
शिशुं सम्बद्धिगीतेषु कुमारस्यायुतोक्तवत्  ५०
शङ्खोदकं पुनर्दद्यात्पश्चिमद्वारपूर्ववत्
कवाटं दक्षिणे वामे परब्रह्माणि लक्ष्मि च  ५१
ग्रभ्यर्च्य सुमना शक्त्यै शङ्खघोषरवारवत्
तुल्यबन्धनसम्बद्धौ शङ्खपद्मद्वयौ निधौ  ५२

द्वाराधिष्ठितसंतृप्त्यै वेद्यशेषं निवेदयेत्
कलाशक्तिमुखे नासि नासिबन्धनतुल्यवत् ५३
प्रभाते देशिकः शुद्धो भानुपूजान्तरेषु च
देवमुद्धृत्य हस्ताग्रे गर्भगेहं प्रवेशयेत् ५४
अर्धयामविधिः प्रोक्तो वेदिविधिरथोच्यते
वसुद्रोणं गवां क्षीरं चतुर्द्रोणं च तण्डुलम् ५५
शिवद्रोणं गुलोपेतं मरीचीजीरकद्वयम्
मुष्टिमात्रसमं प्रोक्तं परमान्नमिति स्मृतम् ५६
कलाद्रोणं गवां नीतं पयसा शुक्लवस्त्रवत्
शोधयेत्तत्र मध्ये तु शुद्धमासीहृदन्तवत् ५७
युगद्रोणं तथा प्रोक्तं द्रोणपूर्णं तु शर्करा
कदलीफलशताष्टौ द्रोणार्धं घृतशुद्धवत् ५८
संपादयेद्धरप्रीतिं दिव्यान्नमिह चोच्यते
कपिलाक्षीरसद्रोणं द्रोणार्धं शालिकोद्भवम् ५९
सैन्धवं च त्रिमुष्टिस्तु संपयेदीश्वरप्रियम्
पायसान्नमिति प्रोक्तं सारभूतमथोच्यते ६०
अपूपं रससुखी च तिलमोदकमेव च
गोधूमादौशिकं मुद्गं महिनाथा तु तेन च ६१
वलयं नागभूतेषु सेन्द्रवृत्तसमावृतम्
इड्डलीमोदकस्थूलैर्विदध्यादर्धयामके ६२
कलानालीजलैर्युक्तं इक्षुसारो मुखत्रयम्
वेदयित्वोपचाराद्यैस्ताम्बूलमुखवासकैः ६३
दधिक्षीरमधुद्राक्षा वेदयेत्सुमनोरमे
लाजं कपित्थसंयुक्तं कृसरान्नं गुलान्नवत् ६४
शुद्धान्नं क्षेत्रपालस्य इक्षुसारोदकं ददेत्
क्षेत्रपालप्रियं दद्यात्पूजान्ते क्षेत्रमर्चयेत् ६५
क्षेत्रेशं क्षेत्रसिद्धिं च क्षेत्रज्ञं शिवरूपकम्
क्षेत्रपालं सदा ध्यात्वा पूजान्ते क्षेत्रं भावयेत् ६६
एकवक्त्रं त्रिनेत्रं च शिरोमुण्डितमेव च

योगपद्मासनस्थं च पद्महस्तं भयानकम्  ६७
वामोरुमूलहस्तस्थं शिरोमालाविभूषितम्
श्यामलं शुक्लवस्त्राढ्यं शिरोमालाविभूषितम्  ६८
एवं ध्यात्वा समभ्यर्च्य शृणुष्वेव हुताशन
वशकेशमहामन्त्रं धूपदीपानि दापयेत्  ६९
आयुरारोग्यमैश्वर्यं सर्वशत्रुविनाशनम्
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे अर्धयामार्चनपटलः पञ्चविंशतितमः

## षड्विंशतितमः पटलः
### अर्चनाङ्गविधिः

अथातः संप्रवक्ष्यामि अर्चनाङ्गविधिक्रमम्
स्नानं वस्त्रं च गन्धं च पुष्पं चैव यथाक्रमम्  १
पाद्यमाचमनं चार्घ्यं धूपदीपं निवेद्यकम्
बलिं नित्योत्सवं चैव शुद्धनृत्तं तथैव च  २
गीतवाद्यसमायुक्तं पञ्चाधिकदशं भवेत्
दीपान्तमर्चनं प्रोक्तं हविष्यन्तं तु पूजनम्  ३
बल्यन्तं शान्तिकं प्रोक्तं नृत्तान्तं सर्वसिद्धिदम्
वाप्यां वापि तटाके वा कूपे वा तोयसंग्रहम्  ४
जलभण्डेन संपूर्य वस्त्रपूते हृदा भवेत्
उशीरं चन्दनं चैव कोष्ठं वै पिष्टकेन तु  ५
तत्तोयं पूरयेन्मन्त्री शिवमन्त्रैः शिवाङ्गकैः
तत्तोयेनाभिषेकं तु पञ्चब्रह्मशिवाङ्गकैः  ६
हस्तैर्द्वादशभिर्युक्तं विस्तारं पञ्चतालकम्
सुश्लक्ष्णं सूक्ष्मवस्त्रं च युग्मवस्त्रं तु दापयेत्  ७
वस्त्रयुग्मेति मन्त्रेण वस्त्रमाच्छादयेच्छिवम्
चन्दनागरुकुष्ठं च कर्पूरं गन्धमालिपेत्  ८
राजसं सात्त्विकं चैव तामसं चैव मिश्रकम्
रक्तोत्पलं रक्तपद्मं करवीरं तिलं भवेत्  ९
राजसानि च पुष्पाणि प्रातःकाले प्रदापयेत्

नन्द्यावर्तं श्रियावर्तं श्वेतार्कं श्वेतलोध्रकम् १०
श्वेतपद्मं च मन्दारं द्रोणपुष्पं च माधवीम्
मध्याह्ने सात्विकं ह्येतत् पुष्पं दद्याच्छिवस्य तु ११
मल्लिका धूर्धुरं चैव चम्पकं कृष्णमल्लिका
कनकानि कदम्बानि रात्रौ ददाति शङ्करे १२
नन्द्यावर्तं द्विकर्णी च रक्तोत्पलं च धातकी
द्रोणं च श्वेतपद्मं च जाती च गिरिकर्णिका १३
नन्द्यावर्तं श्रियावर्तं मन्दारं शतपत्रिका
श्वेतार्कं मालती चैव पुन्नागं कुरवं तथा १४
एवमादीनि पुष्पाणि सात्विकानि विनिर्दिशेत्
रक्तोत्पलं तथा पद्मं बृहती दूरपाटली १५
एवमादीनि पुष्पाणि राजसानि विनिर्दिशेत्
कर्णिका धूर्धुरं चैव शिरीषं केतकी तथा १६
लाङ्गली च विहीती च बन्धूकं जपवासती
किंशुका मदयन्ती च कुमुदानि विवर्जयेत् १७
अतिपक्वमपक्वं च मुकुलं च विवर्जयेत्
कृष्णवर्णानि पुष्पाणि तामसानि विनिर्दिशेत् १८
तामसेषु च पुष्पेषु श्रीमन्नीलोत्पलं वरम्
केशकीटोपविद्धानि त्यजेत्पर्युषितानि च १९
लूतसूत्रावृतानि च स्वयं पतितमेव च
वर्जयेत्तान्प्रयत्नेन सर्वशास्त्रेषु निश्चितम् २०
शमीबिल्वमपामार्गं कुशदूर्वासहा तथा
नागनन्दी रुद्रपर्णी धातकी तुलसी तथा २१
भद्री चैव महाभद्री द्रोणपत्रं तथैव च
पत्रजातिषु सर्वेषु बिल्वपत्रं प्रशस्यते २२
त्रैवर्णं पुष्पमेवोक्तं पाद्यार्घ्याचमनं शृणु
सर्वदूर्वा सिता सिद्धा सिता दूर्वा च जाति च २३
शङ्खपुष्पं च पद्मं च पाद्यं वै परिकल्पयेत्
एलालवङ्गकर्पूरफलत्रयमुरं तथा २४

सरित्रपत्रसंयुक्तं तथा चाचमनं तथा
आपः क्षीरकुशाग्रैश्च साक्षतैर्यवतण्डुलैः  २५
तिलैः सिद्धार्थकैर्युक्तमर्घ्यमष्टाङ्गमुच्यते
अगरुं चैकभागं स्यान्निर्यासं द्विगुणं भवेत्  २६
चन्दनं द्विगुणं हीषत् कृत्वा कर्पूरसंयुतम्
शीतारी नाम धूपं तु मधुना च परिप्लुतम्  २७
देवं धूपं वरं श्रेष्ठमुत्तमं धूपमिष्यते
गुग्गुलुं घृतसंयुक्तं मध्यमं धूपमिष्यते  २८
कोष्ठं वा चन्दनं वापि मधुना घृतसंयुतम्
अधमं धूपमेवोक्तं त्रिविधं धूपमिष्यते  २९
गोघृतं चैव तैलेन कर्पूरावर्तितं शुभम्
चतुस्त्रिद्व्यङ्गुलायामा दीपज्वाला भविष्यति  ३०
दीपप्रियो महादेवो देवदेवः सदाशिवः
शाल्यन्नमुत्तमं विद्यादलाभे व्रीहिरेव च  ३१
यववेणुप्रियङ्गुं च हविस्तत्र निवेदयेत्
प्रस्थं प्रतिपलं चैव सोपदंशं निवेदयेत्  ३२
नित्योत्सवं त्रिसन्ध्यं च शुद्धनृत्तं तथैव च
गीतवाद्यसमायुक्तं पूजयेद्दशपञ्चकैः  ३३
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे अर्चनाङ्गविधिपटलः षड्विंशतितमः

## सप्तविंशतितमः पटलः

### घृतस्नानविधिः

अतः परं प्रवक्ष्यामि घृतस्नानविधिं परम्
आयुरारोग्यदं चैव पुत्रश्रीकीर्तिवर्धनम्  १
राजा विजयमाप्नोति सर्वराष्ट्रविवर्धनम्
प्रासादस्याग्रतः कुर्यान्मण्डपं चाष्टहस्तकम्  २
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्
पूर्णकुम्भयुतं चाग्रे वितानध्वजशोभितम्  ३
दर्भमालासमायुक्तं मुक्तादामैर्विभूषितम्

पुष्पमालासमायुक्तं स्तम्भैश्च परिवेष्टितम् ४
दर्पणोदरसंकाशम् अष्टमङ्गलशोभितम्
गोमयालेपनं कृत्वा सूत्रपातं तु कारयेत् ५
त्रयोदशानि सूत्राणि प्राङ्मुखोदङ्मुखक्रमात्
शताधिकानि चत्वारि चत्वारिंशत्पदं भवेत् ६
मध्यमं षोडशपदं बाह्यमेकावृतं त्यजेत्
अष्टद्वाराणि संकल्प्य चतुर्विंशत्पदं भवेत् ७
दिशासु द्वादशपदं विदिशासु नवो भवेत्
एवं कृते पदे सम्यक् स्थण्डिलं कारयेद्बुधः ८
चतुःप्रस्थोत्तमं व्रीहिस्त्रिप्रस्थं मध्यमं भवेत्
द्विप्रस्थमधमं प्रोक्तं तदर्धं तण्डुलं भवेत् ९
तदर्धं तिलमेवं तु लाजदर्भैः समन्वितम्
शातकुम्भं शतं चैव बिन्बप्रभसमन्वितम् १०
तन्तुना चित्रितान्कुम्भान् त्रिद्विरेकक्रमेण तु
क्षालयेद्धृतिमान्मन्त्री साधयेत्तु विशेषतः ११
कपिलागोघृतेनैव वेदप्रस्थं प्रपूरयेत्
सकूर्चं सापिधानं च सवस्त्रं पल्लवैर्युतम् १२
स्थण्डिलं चार्चयेत्पश्चात्स्थापयेत्तु विचक्षणः
शतरुद्राधिदैवत्यमेकैकं चार्चयेत्क्रमात् १३
प्रणवादिचतुर्थ्यन्तं स्वनामाद्येन पूजयेत्
गन्धपूष्पादिना पूज्य पश्चाद्धोमं समाचरेत् १४
चतुर्दिक्षु चतुर्होमं कुर्यादध्ययनं तथा
समिदाज्यचरुं लाजान्सर्षपांश्च यवांस्तिलान् १५
समिधः सद्यमन्त्रेण आज्यं वामेन हूयते
चरुं वै हृदयेनैव लाजं घोरास्त्रमन्त्रतः १६
सर्षपं पुरुषेणैव ईशानेन यवं हुनेत्
तिलं वै कवचेनैव प्रत्येकाष्टशतं हुनेत् १७
शतमर्धं तदर्धं वा हूयते क्रमशः पुनः
द्रव्यान्ते व्याहृतिं हुत्वा स्विष्टं पूर्णाहुतिं तथा १८

आचार्यं पूजयित्वा तु वस्त्रहेमाङ्गुलीयकैः
मूर्तिपान्पूजयेत्पश्चात्तदन्तेऽध्यायिनां ददेत् १९
ततो गर्भगृहं गत्वा लिङ्गशुद्धिं समाचरेत्
गन्धपुष्पादिना पूज्य कुम्भमुत्थापयेद्बुधः २०
महाव्योमेति मन्त्रेण स्नापयेत्परमेश्वरम्
गन्धोदकाभिषेकं तु अर्चयित्वा यथाविधि २१
फलभक्ष्यादिनैवेद्यं व्यूहे व्यूहे प्रति प्रति
प्रभूतं च हविर्दद्यात्स्नपनान्ते विचक्षणः २२
ताम्बूलं दापयेत्पश्चान्मुखवाससमन्वितम्
विसृज्य सर्वपापानि शिवलोके महीयते २३
कल्पकोटिसहस्राणि महाभोगसमन्वितः
पुण्यक्षयात्परिभ्रष्टो राजा भवति धार्मिकः २४
घृतस्नानविधिः प्रोक्तः क्षीरस्नानविधिं शृणु २५
इति श्रीदीप्तशास्त्रे प्रतिष्ठातन्त्रे घृतस्नानविधिपटलः सप्तविंशतितमः

## अष्टाविंशतितमः पटलः
### क्षीरस्नानविधिः

अतः परं प्रवक्ष्यामि क्षीरस्नानविधिक्रमम्
आयुरारोग्यफलदं सर्वव्याधिविनाशनम् १
पुत्रपौत्रविवृद्ध्यर्थं लोकशान्तिकरं परम्
सङ्कीर्णं च विकीर्णं च संयोगं च त्रिधा भवेत् २
पूर्वं क्षीरं परिग्राह्य स्नापयेद्विधिना सह
एतत्सङ्कीर्णमित्युक्तं विकीर्णं च ततः शृणु ३
शिवागारं समानीय स्रावयेद्गां नवे घटे
धारोष्णेन समायुक्तं स्नापयेल्लिङ्गमूर्धनि ४
एतद्विकीर्णसंज्ञेयं संयोगं च ततः शृणु
याज्ञिकं वृक्षमादाय चतुष्पादानि कल्पयेत् ५
लिङ्गोपरि दशाङ्गुल्यं चतुष्पाद्युच्चकं स्मृतम्
तन्मध्ये पद्ममालिख्य तन्मध्ये सुषिरं भवेत् ६

तन्मध्ये तु न्यसेद्धीमान्कुम्भं न्यस्त्वा सरत्नकम्
एतत्संयोगमित्युक्तं शान्तिहोमसमन्वितम् ७
गावः शिवपुरात्पञ्च क्षितिं प्राप्ताः शिवार्चने
नन्दा भद्रा च सुमना सुरभी च सुशीलका ८
कपिला कृष्णा धूम्रा च रक्ता श्वेता तथैव च
नन्दादिसुमनान्तं स्याद्वर्णमेतत्प्रकीर्तितम् ९
देवानां यजनार्थाय सर्वलोकहिताय च
गोमातरः स्मृता भूमौ स्नानार्थं तु शिवाज्ञया १०
गोषु देवाः स्थिता नित्यं गोभिर्यज्ञः प्रवर्तते
ब्रह्मविष्णू स्थितौ नित्यं शृङ्गमूले व्यवस्थितौ ११
शृङ्गाग्रे तु स्थितास्तीर्थाः स्थावरं जङ्गमं तथा
ललाटे षरामुखः प्रोक्तो ग्रीवामध्ये स्थितो हरः १२
कम्बलाश्वतरौ नागौ नासापुटसमाश्रितौ
कर्णयोरश्विनादेवौ चन्द्रार्कौ चक्षुषोः स्थितौ १३
दन्तेषु मरुतो देवा जिह्वायां वरुणः स्थितः
सरस्वती च हुंकारे यमयक्षौ च गराडयोः १४
खुरमध्येषु गन्धर्वाः खुराग्रेषु च पन्नगाः
खुराणां पश्चिमाग्रेषु अप्सरोगण एव च १५
दशरुद्रान्दशानाड्यां स्थापयेत्सर्वसन्धिषु
श्रोणीतटस्थाः पितर उरःस्थिता उमा भवेत् १६
श्रीरपाने गवां नित्यं राशयो लाङ्गूले तथा
आदित्यरश्मयो वाले गोमूत्रे जाह्नवी तथा १७
ऋषयश्च तथा सर्वे रोमकूपे व्यवस्थिताः
उदरे पृथिवी देवी भाविता नाभ्यवस्थिता १८
चत्वारः सागराः पूर्णा गवामेव पयोधराः
यद्वीर्यं जगति किञ्चित् तज्ज्ञेयं क्षीरसंभवम् १९
तस्मात्सर्वप्रयत्नेन क्षीरस्नानं समाचरेत्
सङ्कीर्णं संप्रवक्ष्यामि स्थापकेन समन्वितम् २०
प्रागग्रं वसुसूत्रं स्यादुदगग्रं तथैव च

पदमेकोनपञ्चाशत्तालमात्रेण कल्पयेत् २१
मध्ये नवपदं पद्मं तद्बाह्ये षोडशं हरेत्
बाह्यैकावरणं दिक्षु पदमेकं परित्यजेत् २२
एवं कृत्वा विशेषेण स्थण्डिलं शालिभिः कुरु
प्रत्येकमाढकेनैव शालिभिश्चोत्तमं भवेत् २३
त्रिप्रस्थं मध्यमं ज्ञेयं द्विप्रस्थमधमं भवेत्
द्वात्रिंशत्प्रस्थसंपूर्णमुत्तमं कुम्भमुच्यते २४
चतुर्विंशत्प्रस्थं मध्यं द्रोणपूर्णं तु कन्यसम्
स्थण्डिलस्योत्तरे पार्श्वे साधयेत्कलशान्क्रमात् २५
ऊर्ध्वाधो दर्भयुक्तांस्तु त्रिसूत्रेण च वेष्टयेत्
हृदयेनैव संप्रोक्ष्य अस्त्रेणैव समुद्धरेत् २६
पयसा पूरितं कुम्भं स्थण्डिलोपरि विन्यसेत्
वारुणं मन्त्रमुच्चार्य मध्यमे तु पदे न्यसेत् २७
सकूर्चान्सापिधानांश्च सवस्त्रान् रत्नसंयुतान्
अभितः कलशानष्टौ पूरयेत्क्षीरपूरितान् २८
अभितः कलशानष्टौ लोकपालाधिदेवतान्
आग्नेयादि पदे स्थाप्य वासवादि तथैव च २९
गन्धपुष्पादिना पूज्य हृदयेनैव मन्त्रतः
पूर्वोक्तविधिना धीमान्शान्तिहोमं समाचरेत् ३०
दिशास्वध्ययनं कुर्यात्पश्चात्स्नानं समाचरेत्
महाव्योमेति मन्त्रेण स्नापयेल्लिङ्गमूर्धनि ३१
सङ्कीर्णमाचरेदेवं पुत्रपौत्रविवर्धनम्
जयदं रोगशान्त्यर्थं सर्वसिद्धिकरं परम् ३२
मारिज्वरग्रहव्याधेः सद्य एव स मुञ्चति
सप्ताहं त्रियहं वापि चतुर्दशं चैकविंशकम् ३३
एवमेव पयस्नानमेवमिक्षुरसेन तु
पञ्चगव्योदकानां च एवं कुर्याद्विशेषतः ३४
स्नपनं कारयेदन्ते पूर्वोक्तविधिना सह
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ३५

क्षीरस्नानविधिः प्रोक्तो घृतस्नानविधिं शृणु ३६
इति दीप्तशास्त्रे क्षीरस्नानविधिपटलः अष्टाविंशतितमः

## एकोनत्रिंशत्तमः पटलः

### राजरक्षाविधिः

राजरक्षाविधिं वक्ष्ये शृणु वह्ने यथाक्रमम्
आयुरारोग्यबलदं पुत्रश्रीकीर्तिवर्धनम् १
रक्षार्थं मङ्गलार्थं च महापुण्यपवित्रकम्
देवाश्च ऋषयश्चैव यक्षगन्धर्वकिन्नराः २
पितॄणां च तथा सर्वे तथा मातृगणा अपि
नित्यं सर्वप्रयत्नेन रक्षां कुर्यात्समाहितः ३
रक्षाकाले प्रयोक्तव्यं शृणु वह्ने विशेषतः
स्नानान्ते तु त्रिसन्ध्यायां भोजने चैव सुप्तके ४
युद्धे च गमने चैव अश्वारोहणकालके
गजारोहणकाले च दुःस्वप्नदर्शनेऽपि च ५
एतेषु विधिना काले रक्षां कुर्याद्विशेषतः
ज्वरग्रहपिशाचाश्च असुरा यातुधानकाः ६
कुमारग्रहभूताश्च कूष्माण्डा शकुनी तथा
ब्रह्मराक्षस उच्छिष्टपूतना पापराक्षसी ७
नित्यपीडां न कुर्वन्ति तस्माद्रक्षां समारभेत्
गोमयं चैव संग्राह्य रक्षार्थं चैव देशिकः ८
कपिलागोमयं ह्येवं नानागोमयमेव वा
आहार्यं नैव जीर्णायां मार्यया क्षीरवर्जिता ९
रोगार्ता नवसूता च न योग्या गोमयग्रहे
संग्राह्य हृदयेनैव शोषयेच्छिरसा पुनः १०
शिवमन्त्रेण दग्ध्वा तु सद्योजातेन ग्राहयेत्
राजते पात्रे संकल्प्य कवचेन सुरक्षयेत् ११
दक्षिणेन करेणैव वामहस्ते तु विन्यसेत्
पञ्चब्रह्मशिवाङ्गैश्च व्योमव्यापि जपेत्सकृत् १२

भस्माधारे तु वामेन हेमपात्रे तु निक्षिपेत्
उत्तमं हेमपात्रं तु मध्यमं राजतं तथा १३
एवं संस्कृत्य विधिवत् त्रिपुण्ड्रं धारयेद्बुधः
ईशानं शिरसि न्यस्त्वा मुखे तत्पुरुषं न्यसेत् १४
अघोरं हृदि विन्यस्य गुह्ये वामं प्रकल्पयेत्
सद्योजातं तु पादाभ्यां पुनरङ्गानि विन्यसेत् १५
जठरे नाभिबाह्वोश्च कट्यामुरसि वा पुनः
अस्त्रेणैव तु मन्त्रेण धारयेत्साधकोत्तमः १६
ऊर्वोर्जान्वोस्तथा गुह्ये पृष्ठे चैव तु पादयोः
जङ्घयोः स्फिग्द्वयोश्चैव पार्श्वयोरुभयोरपि १७
प्रासादेन तु मन्त्रेण विन्यसेत्तु विचक्षणः
एवमेव विधानज्ञै रक्षयेत्तु विशेषतः १८
अस्त्रमन्त्रं समुच्चार्य दशदिक्षु समन्ततः
मध्यमानमिका चैव तर्जनी च त्रिपुण्ड्रके १९
मध्यमा रुद्रदैवत्यानामिका ब्रह्मदैवता
तर्जनी विष्णुदैवत्या अङ्गुलीनां विधीयते २०
नृपस्य पुण्ड्रं कुर्वीत सर्वपापक्षयावहम्
त्रिपुण्ड्रस्थानं वक्ष्यामि त्रिपुण्ड्रदेवतां तथा २१
शिरःस्थाने स्वयं ब्रह्मा ललाटे स्कन्द एव च
कण्ठे विनायकप्रीतिरश्विनौ श्रोत्रयोरपि २२
हृदये ईश्वरप्रीतिर्बाह्वोर्वै विष्णुरेव च
नाभौ वसुन्धरा चैव पृष्ठे च पितरस्तथा २३
एतान्देहे तु संकल्प्य रक्षां कुर्यात्तु साधकः
वर्णन्यासं ततः कुर्याच्छास्त्रदृष्टेन कर्मणा २४
अकारादिक्षकारान्तं कादिपादान्तमेव च
अकारं मूर्ध्नि देशे तु आकारं तु ललाटके २५
इकारं दक्षिणे नेत्रे ईकारं वामनेत्रके
उकारं दक्षिणे कर्णे ऊकारं वामकर्णके २६
ऋकारं दक्षिणे नासौ ॠकारं वामनासिके

लृकारं दक्षिणे गण्डे लॄकारं वामगण्डके २७
ए ऐ ओष्ठद्वये न्यस्य ओ औ दन्तद्वयोरपि
अं अः जिह्वाद्वये चैव स्वरान्षोडशकान्न्यसेत् २८
कवर्गं दक्षिणे हस्ते चवर्गं वामहस्तके
टवर्गं दक्षिणे पादे तवर्गं वामपादके २९
पफौ च दक्षिणे पार्श्वे बभौ वै वामपार्श्वके
मकारं नाभिदेशे तु यकारं पृष्ठतो न्यसेत् ३०
सप्तधा तु कलां न्यस्त्वा यकारं त्वक्प्रदेशके
रकारं रक्तमेवोक्तं लकारं मांसदेशतः ३१
वकारं मेदसो न्यस्य शकारमस्थिदेशतः
मज्ञादेशे षकारं तु सकारं शुक्लदेशतः ३२
हकारं प्राणदेशे तु ळकारं वृषणे न्यसेत्
क्षकारं मेढ्रदेशे तु क्रमेणैव तु विन्यसेत् ३३
नृपाणां रक्षणार्थाय दशायुधसमावृतम्
एवं कृत्वा तु विधिवद्भस्मरक्षां समाचरेत् ३४
नीराजनं प्रकर्तव्यं राज्ञामपि विशेषतः
पादप्रक्षालनं कृत्वा आचम्य विधिना बुधः ३५
सर्वतोभद्रनामानि सिंहासनोपरि स्थितम्
सन्ध्याकाले च सायाह्ने देवानामपि पार्थिवे ३६
नराणां दर्शने चैव पद्मनाभिस्थलोदिते
पुष्पमर्घ्यं च लवणं निम्बपत्रं निवेदयेत् ३७
कार्पासबीजसंयुक्तं नवदीपसमन्वितम्
सन्ध्याकाले विसृज्याथ तद्दोषशमनाय च ३८
स्वर्णपात्रेषु संयोज्य एकैकं तु पृथक्पृथक्
गणिकाभिरलङ्कृत्य आनयेत्तु समाहितः ३९
गेयनृत्तादिमङ्गल्यैः शङ्खभेर्यादिनिस्वनैः
आलयं त्रिः परिभ्राम्य एकैकं तु समाचरेत् ४०
कार्पासबीजलवणं दीपपात्रे विनिक्षिपेत्
तदन्ते भस्म दातव्यं दर्पणं दर्शयेद्बुधः ४१

वाद्यध्वनिसमायुक्तं प्राकारस्य बहिर्नयेत्
दिने दिने तु संयोज्य रक्षां कुर्यात्तु भूपतिः ४२
अपमृत्युविनाशं च महामृत्युविनाशनम्
तस्मात्सर्वमयं देवं सर्वकल्याणकारणम् ४३
भवेद्रक्षा समायुक्ता राज्ञां कीर्तिविवर्धनम्
एवं रक्षा तु विधिवत्सर्वैश्वर्यसमन्वितम् ४४
नित्यं समाचरेद्राजा पृथिव्यामेकराड् भवेत्
तस्मात्सर्वप्रयत्नेन विधिना सम्यगाचरेत् ४५
राजापि विजयेन्मृत्युमिति शास्त्रेषु निश्चितम्
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे राजरक्षाविधिपटलः एकोनत्रिंशत्तमः

## त्रिंशत्तमः पटलः
## सकलप्रोक्षणविधिः

अतः परं प्रवक्ष्यामि सकलप्रोक्षणं परम्
सर्वरोगविनाशार्थं सर्वदोषविनाशनम् १
वर्षार्थं च जयार्थं च प्रोक्षणं सम्यगाचरेत्
पूर्वं प्रतिष्ठितं बिम्बं पूजाहीनं च संभवेत् २
एकाहं द्वियहं वापि त्र्यहं चतुरहं तु वा
पञ्चाहं वा दशाहं वा द्वादशं पक्षमेव वा ३
समुद्रे पर्वते चैव गोष्ठे च कुशमूलतः
तीर्थेषु च मृदं ग्राह्य पञ्चमृद्भिस्तु लेपयेत् ४
गोमूत्रं गोमयं क्षीरं दधिसर्पिस्तु पञ्चमम्
यथाक्रमेण संग्राह्य स्नापयेद्विधिपूर्वकम् ५
पवमानं समुच्चार्य पञ्चगव्याभिषेचनम्
मूलेन लिप्य तोयेन शोधयेदस्त्रमन्त्रतः ६
पुण्याहं तत्र कुर्वीत शान्तिहोमं तु कारयेत्
युग्मवस्त्रं प्रदातव्यं गन्धादिना समर्चयेत् ७
पञ्चवर्णहविर्दद्याद्गुलखण्डसमायुतम्
निवेदयेद्धृदा चैव ताम्बूलं च प्रदापयेत् ८

दक्षिणां गुरवे दद्याद् यथावित्तानुसारतः
पक्षादूर्ध्वं तु मासं वा त्रिषरामासान्तमेव वा ९
कालान्तरगते काले पूजाहीने तु संभवे
प्रतिष्ठा क्रिया यत्सर्वं तत्पूर्वमिति चोदितम् १०
रत्नन्यासाक्षिमोक्षं च प्रदक्षिणयनं विना
जलाधिवासनं नोक्तं अन्यत्सर्वं समापयेत् ११
कुम्भाधिवासनं होमं कौतुकं बन्धयेत्क्रमात्
हेमसूत्रकृतं श्रेष्ठं तन्तुसूत्रमथापि वा १२
विश्वेत्ता तेति मन्त्रेण बन्धयेदस्त्रसंयुतम्
बृहत्सामेति मन्त्रेण भस्म दद्यात्स बिम्बके १३
रक्ताम्शुकैः परिच्छाद्य दर्भैस्तु कवचेन तु
गन्धादिना समभ्यर्च्य स्वबीजेनैव मन्त्रतः १४
दिशास्वध्ययनं कुर्युश्चत्वारो वेदपारगाः
रात्रौ जागरणं कुर्याद्धोमाध्यायपरायणः १५
आचार्यो मूर्तिपैः शिष्यैः स्नानं कुर्याद्विधानतः
नववस्त्रं तु संछाद्य आर्द्रवस्त्रं विसर्जयेत् १६
भस्मस्नानं ततः कुर्यान्न्यासकर्म समाचरेत्
सूक्ष्मवस्त्रं प्रदातव्यं सोष्णीषं सोत्तरीयकम् १७
कर्पूरागरुसंमिश्रं गन्धचन्दनचर्चितम्
पञ्चाङ्गभूषणैर्भूष्य गन्धमाल्यैरलङ्कृतम् १८
दक्षिणां तस्य दातव्यां प्रणिपत्य क्षमापयेत्
दशनिष्कं पञ्चनिष्कं निष्कत्रयमथापि वा १९
निष्कमात्रं तदर्धं वा यथावित्तानुसारतः
दशभागैकभागं स्यान्मूर्तिपानां तु दक्षिणा २०
तदर्धाध्ययने दद्याद्दैवज्ञस्य तदर्धकम्
आसनं कल्पयेद्विद्वान् स्नानवेद्युपरि न्यसेत् २१
मुहूर्तनाडिका युक्ता सर्वातोद्यसमायुता
गेयं नृत्तसमायुक्तं स्वस्तिवाचकमुच्चरन् २२
कुम्भमुत्थाप्य वामेन आचार्यो मूर्तिपैः सह

शङ्खध्वनिसमायुक्तं पिञ्छचामरसंयुतम्  २३
धूपदीपसमायुक्तं स्तोत्रमङ्गलवाचकैः
सर्वातोद्यसमायुक्तं प्रासादं च प्रदक्षिणम्  २४
बिम्बस्य दक्षिणे पार्श्वेऽप्याचार्योऽप्युत्तरं मुखम्
शङ्खतोयं कुशेनैव न्यस्त्वा देवं यथाक्रमम्  २५
आकाशाद्यादिभूतं च स्थितिमार्गं न्यसेत्क्रमात्
सद्योजातं न्यसेत्पादे पुनरङ्गानि विन्यसेत्  २६
अभिषेकं ततः कुर्यात्प्रासादेन तु मन्त्रतः
विद्येश्वरस्य कुम्भानि स्वनाम्ना चाभिषेचयेत्  २७
स्नपनं तत्र कुर्वीत यथाविभवविस्तरैः
युग्मवस्त्रं प्रदातव्यं सोत्तरीयोपवीतधृक्  २८
गन्धादिना समभ्यर्च्य पञ्चवर्णहविर्ददेत्
ताम्बूलं दापयेत्पश्चान्मुखवाससमन्वितम्  २९
तदन्ते चोत्सवं कुर्यात्सर्वालङ्कारसंयुतम्
सकलप्रोक्षणं कुर्याद्यागं पाशुपतस्य तु  ३०

इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे सकलप्रोक्षणविधिपटलः त्रिंशत्तमः

## एकत्रिंशत्तमः पटलः
## कालपरीक्षाविधिः

अतः परं प्रवक्ष्यामि कालनिर्देशलक्षणम्
अयनं दक्षिणं नेष्टमिष्टं वै चोत्तरायणम्  १
मेषे च मिथुने चैव मकरे कर्कटे तथा
दक्षिणायनकाले तु तुलावृश्चिकयोरपि  २
उमा दुर्गा च चामुण्डा भद्रकाली च कोट्टवी
श्रिया शास्तृसरस्वत्या प्रतिष्ठा दक्षिणायने  ३
उत्तरायणकाले तु स्थापयेत्परमेश्वरम्
शुक्लपक्षे प्रशस्ता च कृष्णपक्षे च निन्दिता  ४
चरराशिषु सर्वेषु धनुषि वर्जयेत्सुधीः
त्रीण्युत्तराणि हस्तश्च मैत्र्यादित्यप्रजापतिः  ५

स्वाती चाश्वयुजौ तिष्यः पौष्णार्द्राश्च शुभाः स्मृताः
भार्गवः सोमजीवौ च सौम्यवारः प्रशस्यते ६
होरा चांशकद्रेक्काणादर्शनं शुभमिष्यते
चन्द्रः सर्वोदये काले सर्वकार्येषु वर्जयेत् ७
सप्तनवद्वितीये तु व्याधिशोकभयानि तु
द्वितीये पञ्चमे चैव सोमः सौख्यं करोति हि ८
भृगुयुक्तं च पौष्णं च स्वातीमन्दः प्रजापतिः
बुधानूराधयुक्ता च गुरुपुष्यसमागतः ९
द्वितीया बुधयुक्ता च षष्ठी जीवसमायुता
सोम एकादशीयुक्तः करोति प्राणसंशयम् १०
पौष्णश्च सप्तमीयुक्तो दह्यते चाग्निना प्रजाः
रक्तस्थूनं च स्थूणं च विषं च गुलिकास्तथा ११
दुर्दिने मारुते चैव कम्पने दाहने तथा
अन्येष्वशुभकालेषु वर्जयेत्तान्प्रयत्नतः १२
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे कालपरीक्षाविधिपटलः एकत्रिंशत्तमः

## द्वात्रिंशत्तमः पटलः
## ग्रामादिवास्तुलक्षणम्

अथ वक्ष्ये विशेषेण ग्रामादीनां च लक्षणम्
ग्रामे वा नगरे वापि पत्तने वापि खेटके १
राजधान्यां च वैतेषु शृणुष्व हव्यवाहन
देशविधं ततः पूर्वं ततो भूमिपरिग्रहम् २
अरण्ये च वने तीर्थे पर्वते गुहकानने
ग्रामादौ कारयेद्वास्तु प्रासादं वा विशेषतः ३
अरण्ये राज्यकामश्च ऐश्वर्यं च वने तथा
पापनाशं तु तीर्थे तु पर्वते हरिवृद्धिषु ४
गुहे तु मोक्षकामस्य कानने सर्वसिद्धि च
ग्रामादौ कारयेद्धीमान् ग्रामश्रीत्वं भविष्यति ५
पूर्णं शुभं च पद्मं च ऋृष्टं चेति चतुर्विधम्

भूमेः प्रोक्तं तथा चैव लक्षणं तेषु वक्ष्यते ६
अशोककिंशुकाङ्कोलप्लक्षन्यग्रोधसंयुतम्
कुलत्थमाषनिष्पावगोधूमैश्च सुपूर्णकम् ७
कुमुदोत्पलसंजाता भुक्तिमुक्तिफलप्रदा
बकुलार्जुनखर्जूरकदम्बचम्पकैः शुभम् ८
चन्दनागरुपुन्नागसारदारु च चूतकैः
रम्भैश्च कोरकोरण्डकुरदकुटजावृता ९
ऊषरावणिकाभिश्च गैरिकाशर्करान्विता
श्येनाथ गृध्रगोमायुखरवायससंकुला १०
सा भूमिः त्रृष्टसंज्ञा तु ग्रामादीनां तथालयम्
सा श्रीः पुष्टिश्च सुखदं नाशनीयं यथाक्रमम् ११
फलेषु तेषु संप्रोक्तं स्थानेष्वेवं न संशयः
भूतक्रूरबलिं दद्यात्पश्चात्क्षेत्रपरिग्रहम् १२
क्षेत्रशोधनकर्माणि कीटकेशास्थिलोष्टकैः
रत्निमात्रं खनित्वा तु पांसुमुद्धृत्य पूरयेत् १३
पांसुरप्यधिको यत्र सा भूमिः सर्वकामदा
मध्यमा समपांसुस्तु हीना साप्यधमा स्मृता १४
एवं परीक्ष्य बहुधा कर्षयेल्लाङ्गलेन तु
हलकर्म प्रयुञ्जीत खादिरं बिल्वमेव च १५
कपिलाभ्यां सिताभ्यां वा रक्ताभ्यां व प्रयोजयेत्
युगं वै बन्धयेत्तत्र गोचर्मकृतरज्जुना १६
दैत्यदानवगन्धर्वपिशाचोरगराक्षसाः
ते सर्वे यान्तु वानं च तस्मात्सीतापथा सुखम् १७
ग्रामार्थं देवतार्थं च प्रतिगृह्णन्तु मेदिनीम्
तस्मात्तु क्षेत्रतामेति कृषेन्मन्त्रेण पूर्वकम् १८
पञ्चब्रह्मेण मन्त्रेण जपेत्कर्षणमारभेत्
ग्रामादीन्स्वकरे कृष्य गृहे प्रासादविस्तरम् १९
प्राच्यां सीतात्रयं कृष्य उदीच्यां तु तथा त्रयम्
तत्सर्वं क्षेत्रं गृह्णीयाद्यावत्कर्षणमिष्यते २०

तस्योपादानकर्मेषु सर्वबीजानि वापयेत्
तिलांस्तु वापयेत्तत्र यवान्वापि विशेषतः २१
अथवा सर्वधान्यानि वापयित्वा समन्ततः
त्रिरात्रे यत्र रोहन्ति उत्तमं त्विति निश्चितम् २२
मध्यमं पञ्चरात्रं तु अधमं सप्तरात्रकम्
तां प्रयत्नेन वाप्यन्ति यत्र देशे प्ररोहन्ति २३
वर्धयंस्तत्र रोहन्ति वाप्य जीवो जयं तथा
अन्यत्तु विपरीतं स्याद्देवानां तु न कारयेत् २४
श्वेतं रक्तं तथा पीतं कृष्णं चेति द्विजादयः
सा भूमिर्ब्राह्मणादीनां गन्धाद्यमधुनोच्यते २५
आज्यगन्धं भवेद्ब्राह्मं रक्तगन्धं नृपस्य तु
रूक्षगन्धं तु वैश्यानां शूद्रा विष्ठा सुगन्धिनी २६
ब्राह्मणं मधुरं ज्ञेयं क्षारं वै क्षत्रियस्य तु
वैश्यस्य षड्रसा ज्ञेयाः शूद्रस्यैकोषरा स्मृता २७
एवं परीक्ष्य यत्नेन वर्णगन्धरसादिभिः
पुनश्च लक्षणं कृत्वा गेहस्थानं विशोधयेत् २८
गर्तं कुर्यात्तथा ह्येवं शल्यं कुर्याद्विचक्षणः
दृढत्वं च मृदुत्वं च भूमेर्ज्ञात्वा विचक्षणः २९
सत्कृते ग्रामतो मध्ये +++++++++
याज्ञिकं वृक्षमादाय शङ्कुं तत्रैव कारयेत् ३०
द्वादशाङ्गुलमायामं विस्तारं तु षडङ्गुलम्
मध्ये शङ्कुं त्रिधा ग्राह्य रवच्छाया प्रवर्तते ३१
चैत्रे च विषुवे चैव प्राचीग्रहणमारभेत्
आदित्योदयकाले तु शङ्कुच्छायां समालिखेत् ३२
मेषे तु वृषभे चैव शङ्कुच्छायां तु लाञ्छयेत्
पूर्वाह्णे वा पराह्णे वा शङ्कुच्छायां लिखेत्पुनः ३३
तत्र सूत्रायतं प्राचीं ग्रामादीन्गेहवास्तुना
उदीचीं मत्स्यपुच्छाद्या वास्तुहोमं प्रकल्पयेत् ३४
सुमुहूर्ते शुभे ऋक्षे योगे च करणान्विते

कर्तुश्चैवानुकूले च ब्राह्मणस्वस्तिवाचकैः ३५
सूत्रे प्रसार्यमाणे तु निमित्तान्युपलक्षयेत्
शुभैस्तु कार्यपुष्पाद्यैरथ होमं सामरभेत् ३६
बीजमुख्येन मन्त्रेण आज्येनैव शतं हुनेत्
सूत्रं प्रसारयित्वा तु चतुरश्रं समन्ततः ३७
चतुरश्रीकृते क्षेत्रे विभजेन्नवधा ततः
ग्रामादीन्कल्पयेत्तत्र वास्तुदेहव्यवस्थितः ३८
यावत्तु खनने भूमिस्तावत्सर्वाङ्गमुच्यते
विस्तारं तु तथायामं धाम वै चतुरश्रकम् ३९
सर्वाङ्गं पूर्णतं यस्मिन्तस्मिन्देहं प्रतिष्ठितम्
ईशानादि समारभ्य पादात्पादविभागतः ४०
ईशानश्चैव पर्जन्यो जयन्तश्च महेन्द्रकः
आदित्यः सत्यकभृशावन्तरिक्षश्च पूर्वगाः ४१
दक्षिणे त्वथ वक्ष्यामि आग्नेयादि क्रमेण तु
अग्निः पूषा च वितथो गृहक्षतयमौ तथा ४२
गन्धर्वो भृङ्गराजश्च मृषश्चेति यमागतः
दक्षिणे कथिता ह्येवं पश्चिमे नैर्ऋतादयः ४३
पिता दौवारिकश्चैव सुग्रीवश्च तृतीयकः
पुष्पदन्तश्च वरुण असुरः शोष एव च ४४
रोगो नागस्तथा मुख्यो भल्लाटः सोम एव च
मृगश्चैवादितिश्चैव दितिश्चेति तथोत्तरे ४५
बाह्ये तु देवताः प्रोक्ता द्वात्रिंशत्पदभोगिनः
++++ ++++ गर्भं विन्यासं स्थितम् ४६
ईशानब्रह्मणो रन्ध्रे ++++ ++++
आग्ने वै सवितुस्तु पदद्वयम्
सावितुर्द्विपदाश्चैव लक्षचित्तप्रयत्नतः ४७
यमस्तु ब्रह्मणश्चान्ते विवस्वांश्चैव षट्पदम्
मित्रश्च ब्रह्मवरुणोरन्ते षट्पदभागिनः ४८
वायोश्च ब्रह्मणश्चैव रुद्रस्यैव पदद्वयम्

रुद्रजयपदद्वये लक्षयेच्च विचक्षणः ४९
सोमस्य ब्रह्मणो रन्ध्रे
कथयिष्यामि बाह्ये ते चतुष्कोणे व्यवस्थिताः ५०
ऐशान्यां चरकीं विद्याद्विदार्याग्नेयगोचरे
पूतना नैर्ऋते भागे वायव्ये पापराक्षसी ५१
सद्वास्तुदेवता याश्च अधोमुखव्यवस्थिताः
तासामपदभिन्नास्तु केवलं स्थानचोदिताः ५२
एवं विभाजितं कृत्वा वास्तुदेहं तु लक्षयेत्
शिरोमध्य ईशमेवं शिरःस्थाने नियोजयेत् ५३
एवं देहे तु वामे तु वास्तुदेवान्प्रकल्पयेत्
बाहुमध्ये तु चाग्नेयं सविता हस्तसंस्थितः ५४
प्राच्यादि दक्षिणे चैव पूर्वदक्षिणयोः स्थितौ
वामे चैव तु देवाः स्युरुत्तरे पश्चिमेन तु ५५
चक्षुषोर्दितिपर्जन्यौ जयन्तादितौ कर्णयोः
आवृधै +++श्चैव स्तनयोरुभयोरपि ५६
नाभिमध्ये स्थितो ब्रह्मा सावित्री कुक्षिपार्श्वयोः
राजलक्ष्मी द्वितीयं तु इन्द्र इन्द्रजये शृणु ५७
श्रोणित्वमेव देहे तु देवदेहं तु कीर्तिता
त्रिशूलं सन्धिषट्पञ्चचतुष्कं पद्ममेव व ५८
देवानामालयान्तं च शिरःस्थानं च लक्षयेत्
लक्षयेद्वास्तुहोमं तु सर्वहोमव्यवस्थिताः ५९
ईशो ब्रह्मा दितिश्चैव रोगश्चैव पितृस्तथा
रोगश्चाग्निश्च मध्यश्च ++++++++++ ६०
महेन्द्रादित्यसत्यश्च गृहक्षतयमा परे
पुष्पदन्तश्च वरुणो असुरश्च त्रितीयकम् ६१
भल्लाटाख्यातवरुणास्तस्य सोममपार्श्वतः
ब्रह्मा नवपदात्पद्मं षट्कैश्चैव चतुष्टये ६२
सविरेखा समाख्यातं ललाटं तु पदार्थकम्
इन्द्रमिन्द्रजयो रुद्रा न व्यवस्थितदेवताः ६३

++++ पदमध्ये स्थानं चैव तु लक्षयेत्
एतान्देवगणानाह एकाशीतिपदे स्थितान्  ६४
एवं विधाय कर्तव्यमेकाशीतिपदं बुधैः
त्रिशूले गर्भनासस्तु सन्धौ मित्रार्थनाशनम्  ६५
षट्केन बहुलाङ्गेन शिरोरोगो शिरो भवेत्
स्थनान्येतानि संरक्ष्य सूर्ये धूमघृतादिकम्  ६६
घृतो गोधूमजः सत्ये भृशे मत्स्यं तु दापयेत्
शाकुनं चान्तरिक्षाय घृतश्चैवाग्नये तथा  ६७
पूष्ण आज्यं च दातव्यं हिरण्यं वितथे तथा
गृहक्षताय गोधूमं यमे वै पिशितोदनम्  ६८
गन्धं गन्धर्वदेशे तु भृङ्गे जीवा तु शाकुनम्
मृषे तिलयवाश्चैव पितुश्च कृसराः स्मृताः  ६९
कोष्ठं दौवारिके चैव सुग्रीवे पुष्पकं बली
कुशं वै पुष्पदन्ते च पद्मं वै वारुणे बली  ७०
असुरे च नयानाद्याच्छोषे वापि घृतोदनम्
यवान्नं पापयक्षाय रोगाय घृतमण्डका  ७१
नागाय नागपुष्पाणि भक्ष्यं मुख्याय दापयेत्
मुद्गोदनं च भल्लाटे सोमाय मधुपायसम्  ७२
मृगायाक्षतं दातव्यमादित्यैऽल्पोदनं तथा
उदित्ये पूरिकाश्चैव इत्येवं बाह्यतो बलिम्  ७३
अधुनाभ्यन्तरे वक्ष्ये देवतानां दिशां बलिम्
क्षीरमापाय दातव्यमापवत्साय वै दधि  ७४
सक्तुकं समरीचाय सावित्राय कुशोदकम्
सवितुर्गुलं च पूपः विवस्वतो रक्तचन्दनम्  ७५
इन्द्रेन्द्रजयश्चैव घृतोदनं शष्कुलीयकम्
हरिद्रान्नं तु मित्राय दापयेत्तु विचक्षणः  ७६
रुद्राय रुद्रजयाय च दातव्यं गुलपायसम्
पृथ्वीधराय मांसान्नं कृष्णगन्धं निदापयेत्  ७७
तिलाक्षतयवाश्चैव पञ्चगव्यकुशोदकम्

हविः पूर्णचरुं चैव ब्रह्मस्थाने निवेदयेत् ७८
एवं वै पूजिता देवाः शान्तिपुष्टिजयं भवेत्
बाह्यतस्तु तथा देवा राक्षसीनां प्रयत्नतः ७९
मांसोदनं घृतं चैव दध्योदनमिति स्मृतम्
चरक्यै चैव दातव्यं पीदार्यै च ततः पुनः ८०
पक्वमांसबलिं दद्यात्पूतनायै ततः परम्
रक्तोदनं च मांसं च दातव्यं तद्विचक्षणः ८१
अस्थिखण्डं च मांसं च दापयेत्पापराक्षसीम्
इत्येते पूतनाद्यास्तु स्वस्वमन्त्रेण तर्पयेत् ८२
नमस्कारार्चने काले स्वाहान्तेन बलिं ददेत्
एवं बलिक्रमं प्रोक्तं ग्रामादीनां तु दापयेत् ८३
ग्रामादीशानदिग्भागे ईश्वरालयमेव च
मध्ये विष्णुगृहं प्रोक्तं पञ्चमूर्तिविधानतः ८४
ऐन्द्रे तु भास्करस्थानं महामोटिं तु पावके
दुर्गादेवीं तु याम्यायां शास्ता नैर्ऋतगोचरे ८५
वारुण्यां विष्णुसंस्थानं विघ्नेशं वायुदेशतः
भद्रकालीं तु सौम्यायां मातृस्थानं तु वा पुनः ८६
ऐशान्यामीश्वरस्थानं पञ्चप्राकारसंयुतम्
परिवाराष्टकं चान्तर्हारामध्ये विधीयते ८७
षोडशं तु परिवारं मध्याहारे प्रकल्पयेत्
द्वात्रिंशत्परिवारांस्तु न्यसेन्मर्यादिभित्तिके ८८
लक्षणं परिवाराणां वक्ष्ये सकलं मया
त्रिसूत्रमुकुलैर्युक्तं ब्रह्मविष्णुशिवैर्युतम् ८९
स्थावरं लिङ्गमेवं तु प्रतिष्ठा चोत्तरायणे
किंचिदस्मिन्विशेषोऽस्ति तत्सर्वं शृणु चानल ९०
शैलजप्रतिमाः सर्वाश्चलाचलमिति स्मृतम्
लोहजप्रतिमानां तु जङ्गमं चेति कीर्तितम् ९१
जङ्गमानां तु बिम्बानां प्रतिष्ठां वक्ष्यतेऽधुना
मेषे च वृषभे चैव तुलावृश्चिकयोस्तथा ९२

मकरे ज्येष्ठमासे तु षरामासे तु प्रशस्यते
शुक्लपक्षे द्वितीया च तृतीया पञ्चमी तथा  ९३
षष्ठी च सप्तमी चापि दशम्येकादशी तथा
त्रयोदशी चतुर्दशी शुभमेतत्प्रशस्यते  ९४
रोहिरयां सौम्यनक्षत्रे आदित्ये चोत्तरत्रये
मघार्द्राप्यनुराधा च श्रवरा च शुभप्रदाः  ९५
इन्दुभार्गवसौम्यानां वाराः श्रेष्ठतमाः स्मृताः
कर्षरादिप्रतिष्ठान्तं लोहजप्रतिमादिषु  ९६
अन्तर्हारान्ततः कुर्यादायताश्रं तु मरडपम्
तन्मध्ये स्थापयेन्मूर्तिं नृत्तरूपं सुसंस्थितम्  ९७
अन्तःसालाग्रतः कुर्यादायताश्रं तु मरडपम्
तन्मध्ये स्थापयेद्विद्वान्सुखासनप्रतिमादिकान्  ९८
गर्भस्य मध्यहारे तु मध्ये वै कल्पयेत्सुधीः
आग्नेय्यां पश्चिमे भागे याम्यायां नैर्ऋते पदे  ९९
प्रासादं कल्पयेद्धीमान्यजमानेच्छया भवेत्
दारुकैश्चेष्टकैर्वापि शैलजैर्वा यदृच्छया  १००
दारुजैश्चेष्टकं श्रेष्ठं चेष्टकैर्लोहजोत्तमम्
प्रासादं कल्पयेद्धीमान्पञ्चहस्तप्रमारातः  १०१
षड्वर्गेरा समायुक्तं चतुर्मूर्तिविधा भवेत्
वृषस्थानं विना ग्रीवं चतुर्नासिसमायुतम्  १०२
अधिष्ठानं प्रथमवर्गं पादवर्गं द्वितीयकम्
प्रस्तरं तु तृतीयं तु कराठवर्गं चतुर्थकम्  १०३
शिखरं पञ्चमं वर्गं षड्वर्गं स्थूपिरुच्यते
आप्रासादाग्रतो विद्वानर्धमराडपमिष्यते  १०४
द्वारपालार्चनं तत्र प्रासादे तु प्रतिष्ठिते
मध्यमे स्थापयेद्विद्वान्सोमास्कन्दं च विग्रहम्  १०५
शिवमन्त्रेरा संस्थाप्य पूर्वोक्तविधिना सह
प्रवेशनिर्गमं चैव जङ्गमप्रतिमादिषु  १०६
सकलाराधनं वीक्ष्य अर्चयेत्तन्त्रवित्तमः

ग्रामवास्तुरिति प्रोक्तं नगरादिमतः शृणु १०७
नगरादित्रये चाग्रे मध्ये विष्णुगृहं विना
अन्यत्सर्वं समानं तु राजधानीं शृणुष्वथ १०८
राजेच्छया परिग्राह्य वास्तुकल्पाय पूर्ववत्
प्राकारं परितः कुर्याच्चतुरश्रायताश्रकम् १०९
महेन्द्रद्वारं पूर्वे तु गृहक्षतद्वारं दक्षिणे
पुष्पदन्तं न्यसेद्धीमान्द्वारं वै पश्चिमस्य तु ११०
भल्लाटद्वारमेवं तु उत्तरद्वारमेव च
महाद्वारात्सव्यभागे शुद्धद्वारं तु कारयेत् १११
सर्वसिद्धिसमायुक्तं योषितां चैव सव्यकम्
दक्षिणे वर्जयेद्वीथीं पश्चिमे लेखकाः स्मृताः ११२
अमात्यपुरोहिता मन्त्री सेनापतिरुदाहृताः
अन्यसामन्तकैर्युक्तं वीथ्यामुत्तरतो गृहम् ११३
राजवेश्मगृहमध्ये हर्म्यं वै पञ्चभूमिकम्
हर्म्यस्य द्विगुणं चाग्रे परितो मालिका भवेत् ११४
तत्प्राकारस्य माहेन्द्रं द्वारं वै कल्पयेत्सुधीः
द्वारपालनबाह्ये तु आस्थानमण्डप उच्यते ११५
ऐशे मज्जनशालां च आरामां चैव पश्चिमे
मण्डपस्योत्तरे सव्ये गर्भस्थानं विधीयते ११६
आस्थानमण्डपे पूर्वेऽभिषेकस्थानमेव च
बाह्यप्राकारसव्ये तु द्वारमेकं प्रकल्पयेत् ११७
पूर्वद्वाराग्रके कुर्याद्भेषजस्थानमेव च
ऐन्द्रे तु भास्करस्थानं महामोट्यास्तु पावके ११८
सुब्रह्मण्यं तु याम्यायां पित्रौ द्वाःस्थं च लाभयेत्
दौवारिकपदे वाथ तत्स्थाने स्थापयेद्धरिम् ११९
विघ्नेशं वायुदिग्भागे सौम्ये वै भद्रकालिनीम्
वास्तुबाह्ये तु कर्तव्यं वासवस्यातिदूरतः १२०
ऐशान्ये क्षेत्रपालं तु तद्बाह्ये चेश्वरालयम्
वाजिस्थाने यजेन्नृत्तं गन्धस्थाने विनायकम् १२१

द्वारे तु सव्यवामे तु शास्तृविघ्नेश्वरौ यजेत्
एवं वै वास्तुदेवांश्च पूजयेत्तु यथाविधि १२२
सर्वदोषनिवृत्त्यर्थं ग्रहपीडां व्यपोहति
एवं वै कल्पयेद्धीमान्प्राकारं परितो भवेत् १२३
बाह्यप्राकारवीथीषु आयतावृत्तमेव च
महेन्द्रद्वारपूर्वे तु महावीथीं तु कल्पयेत् १२४
सेनापतिस्तु सचिवो महत्सामन्तकादिभिः
महावीथीद्वयोः पार्श्वे गृहे वा हर्म्य एव वा १२५
द्वारं पूर्वस्य तु पश्चात्तद्वारं कल्पयेत्सुधीः
महेन्द्रद्वारवामं तु क्षुद्रद्वारं तु सव्यके १२६
दक्षिणे पश्चिमे चैव उत्तरे पूर्ववद्भवेत्
हर्म्यं वाथ मुखे वापि द्वारमेवं प्रकल्पयेत् १२७
वणिजां च क्रियाणां तु तन्तुकारोऽथवा पुनः
ध्वजैश्च सूकरैश्चैव चव्यकारोऽथवा पुनः १२८
बाह्यप्राकारमध्ये तु कल्पयेत्तु गृहं प्रति
क्षुद्रद्वाराग्रतः कुर्यान्महाद्वाराग्रके पुनः १२९
वीथीस्तु कल्पयेद्धीमांस्तत्तत्स्थाने गृहे गृहे
अन्त्येषु शुद्धवीथीं तु तद्द्वयोः पार्श्वयोः प्रति १३०
भल्लाटद्वारसव्ये तु शुद्धद्वारैशभागतः
एवं मध्यवीथीः कल्पयेद्धीमांस्तत्तत्स्थाने गृहे गृहे १३१
अन्येषु शुद्धवीथीं च ++++ ++++
पञ्चमद्वितयं वास्तु वक्ष्यते सकलं मया १३२
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे ग्रामादिवास्तुलक्षणपटलः द्वात्रिंशत्तमः

## त्रयस्त्रिंशत्तमः पटलः
## अग्निकार्यविधिः

अतः परं प्रवक्ष्यामि अग्निकार्यविधिक्रमम्
सर्वरोगनिवृत्त्यर्थं सर्वकामार्थसाधनम् १
वेदाश्रं योनिश्चन्द्रार्धं त्रिकोणं वृत्तमेव च

पञ्चाश्रं चैव पद्माभं वस्वश्रं वर्तुलं भवेत् २
चतुरश्राकृति सर्वं सर्वकामफलप्रदम्
योनौ प्रजाकरं ज्ञेयमर्धचन्द्रे त्रिशान्तिकम् ३
त्र्यश्रे रिपुक्षयं प्रोक्तं वर्धनं वर्तुले भवेत्
पञ्चाश्रे श्रीप्रदं ज्ञेयं पर्जन्यार्थं तु पद्मके ४
वस्वश्रे रोगनाशार्थं वर्तुले मुक्तिदं भवेत्
हस्तमात्रं खनेद्भूमौ विस्तारं तावदेव तु ५
मात्राङ्गुलेन कर्तव्यमन्यमानैर्न कारयेत्
एकाङ्गुलप्रमाणेन परितो विष्टरं न्यसेत् ६
तद्बाह्ये मेखला कार्या विस्तरेण नवाङ्गुलम्
अधस्तान्मेखला कार्या विस्तारेण द्वियङ्गुला ७
उत्सेधं तत्समं ज्ञेयं त्र्यङ्गुलं मध्यमेखला
त्र्यङ्गुलं तु तदुत्सेधं विस्तारं तावदेव तु ८
चतुरङ्गुलं तदूर्ध्वे तु विस्तारोत्सेधतत्समम्
योनिः पञ्चाङ्गुला ज्ञेया स्वयामेनाष्टमङ्गुला ९
अश्वत्थपत्रवत्कार्या क्रमेण कृशता भवेत्
कुण्डमध्ये लिखेत्पद्ममष्टाङ्गुलसमन्वितम् १०
प्रथमं शोधयेत्कुण्डं द्वितीयं क्षालनं भवेत्
तृतीयं शोषणं ज्ञेयं पाचनं तु चतुर्थकम् ११
पञ्चमं शिवमन्त्रेण कल्पयेत्कल्पवित्तमः
उल्लेखनं ततः कृत्वा स्थण्डिले तु विशेषतः १२
रेखास्तिस्रस्तु पूर्वाग्रा रेखास्तिस्रस्तथोत्तरे
अस्त्रमन्त्रं समुच्चार्य मध्ये दक्षिणवामयोः १३
उत्तराग्रं लिखेन्मध्ये गौरीगायत्रिमन्त्रतः
रुद्रः पितामहो विष्णुरुमा तत्राधिदेवताः १४
गन्धपुष्पादिना पूज्य स्वस्वनाम्ना विशेषतः
ताम्रपात्रे शरावे वा जातवेदसमानयेत् १५
सूर्यकान्तोद्भवं श्रेष्ठमरणीजातं मध्यमम्
श्रोत्रियागारजो वह्निरधमं तु विदुर्बुधाः १६

अस्त्रेण शोधयेदग्निं कवचेनावकुण्ठयेत्
अमृतं बीजमुख्येन नेत्रेणाभ्यर्च्य देशिकः १७
आसने कुण्डमध्यस्थे वागीश्वरीं प्रकल्पयेत्
ध्यात्वा वागीश्वरीं देवीं ऋतुस्नातां मनोरमाम् १८
पूजयित्वा स्वनाम्ना च प्रणवेन समन्वितम्
प्रक्षिपेदग्निं सद्येन त्रिधा कुण्डं तु भ्रामयेत् १९
प्रक्षिपेद्योनिमार्गेण प्रशान्तेति त्रिधा स्मरन्
गर्भाधानं भवेत्तस्मिन्भवेत्पुंसवनं ततः २०
वामदेवेन शिरसा रुद्राणीमर्च्य देशिकः
पुंसवनं भवेदेवं सीमन्तं तु ततः शृणु २१
अघोरयुक्तशिखया पाद्यमाचमनार्घ्यकम्
गन्धं पुष्पं च दीपं च धूपं चैव प्रदापयेत् २२
वक्त्रेण कवचेनैव दद्यादर्घ्यं सुजातकम्
पूरयेदिन्धनैर्धीमान्प्रज्वाल्याग्निं विशेषतः २३
एकहृदयद्विवक्त्रं द्विनासी च षडक्षिणम्
त्रिमेखलं त्रिपादं च सप्तजिह्वाभिरावृतम् २४
वृषारूढं चतुःशृङ्गं जटामकुटमण्डितम्
दक्षिणे तु चतुर्हस्तं वामभागे त्रिहस्तकम् २५
शक्तिरग्निः तथा स्रुक्च स्रुवं वै दक्षिणे करे
तोमरं व्यजनं वामे घृतपात्रं विशेषतः २६
सुदीप्तस्वर्णवर्णं तु तुङ्गपिङ्गललोचनम्
तव रूपमिदं वह्ने सर्वकामार्थसाधनम् २७
ध्यात्वा पञ्चाग्निमध्ये तु आसीनं प्रत्यगाननम्
पाद्यमाचमनं चार्घ्यमीशमन्त्रेण दापयेत् २८
नामकर्म इदं प्रोक्तं पञ्चसंस्कारमुच्यते
ततः परिस्तरणं कुर्यादग्निबीजमनुस्मरन् २९
प्रागग्रैश्चोत्तराग्रैश्च कुशैरिध्मं परिस्तरेत्
दक्षिणे तु कुशाः सर्वा सर्वतश्चोर्ध्वतः स्थिताः ३०
अधः स्थिता उदग्दर्भा सर्वेषां च विशेषतः

आज्यस्थालीं स्रुवं चैव चरुस्थलीं च मेक्षणम्  ३१
प्रोक्षणीं च प्रणीतां च समिद्दर्भसमन्वितम्
सर्वाणि द्रव्यपात्राणि द्वन्द्वरूपाणि साधयेत्  ३२
वामतो यजमानस्य दर्भोपरि द्विधा भवेत्
प्रोक्षणीपात्रमादाय पूरयेदुदकेन तु  ३३
विसृज्य कूर्चं तन्मध्ये न्यस्त्वा प्रादेशमात्रतः
अङ्गुष्ठानामिकाभ्यां च त्रिरुत्प्लवनमाचरेत्  ३४
तेनैव प्रोक्षयेत्पात्रानस्त्रमन्त्रं समुच्चरन्
उद्धृत्य सर्वपात्राणि प्रोक्षयेत्पुरुषेण तु  ३५
विसृज्येध्मन्तु त्रिः प्रोक्ष्य चरुं वै प्रोक्ष्य देशिकः
कुण्डस्य दक्षिणे भागे कूर्चं पैतामहं न्यसेत्  ३६
प्रणीतामुत्तरे स्थाप्य विष्णुबीजं समुच्चरन्
पूर्वपश्चिमतो वह्नौ चोत्तराभिमुखः स्थितः  ३७
अन्येषु प्राङ्मुखो भूत्वा होमं कुर्याद्विचक्षणः
आज्येन पूरयेत्पात्रं कूर्चं तत्रैव निक्षिपेत्  ३८
पश्चिमे चोत्तरे धीमानाज्याधिश्रयणं कुरु
पर्यग्निं च कुशेनैव कुशाग्रं तत्र निक्षिपेत्  ३९
सद्योजातेन मन्त्रेण त्रिरुत्प्लवनमाचरेत्
विसृज्य कूर्चं तत्प्रोक्ष्य वह्निमध्ये विनिक्षिपेत्  ४०
पर्यग्निं च पुनः कृत्वा दर्भानग्नौ विनिक्षिपेत्
स्रुक्स्रुवौ वामहस्ते तु दक्षिणे तु कुशान्ग्रहेत्  ४१
प्रदक्षिणक्रमेणैव कवचेन स्पृशेद्बुधः
अग्रमग्रेण संस्पृश्य मूलं मूलेन संस्पृशेत्  ४२
मध्यं मध्येन सम्स्पृश्य स्रुवं चैवाभिमर्शयेत्
तिस्रः परिधयः स्थाप्य पश्चिमे दक्षिणोत्तरे  ४३
आघारसमिधौ न्यस्त्वा वह्नावीशानदेशतः
आज्यस्थालीं प्रणीतां च अस्त्रमन्त्रेण विन्यसेत्  ४४
अग्निमूर्तिं विधातारमच्युतं च समर्चयेत्
लोकपालान्यथास्थाने पूजयित्वा स्वनामतः  ४५

अदिते न्वादि मन्त्रेण अग्निं संप्रोक्ष्य देशिकः
प्रासादबीजमुच्चार्य अभ्यर्च्येध्मानि होमयेत् ४६
वक्त्राभिघारं कुर्यात्तु सद्यवामेन देशिकः
अघोरपुरुषेणैव हुत्वा वै पञ्चमेन तु ४७
वक्त्रस्य निष्कृतिर्ह्येवं वक्त्रोद्घाटनमुच्यते
क्षुरिकोद्घाटनं वक्त्रमन्त्रेणैव तु निष्कृतिम् ४८
वह्निबीजमनुस्मृत्य हुत्वा वै पञ्चविंशतिः
अन्नप्राशनमेतद्धि शिरसा चौलमुच्यते ४९
उपनयनं हृदा दत्त्वा शिरसा च हुनेद्धृदा
समावर्तनविवाहं हृदयेनैव होमयेत् ५०
पृथक्पृथक्क्रियाणां च सप्तसप्ताहुतिं हुनेत्
शिवाग्निं जनयेदेवं पश्चाद्दद्यात्तु विष्टरम् ५१
अग्निमध्ये ततो मन्त्रैरासनं परिकल्पयेत्
आवाहनादि यत्कर्म पूर्वोक्तविधिना कुरु ५२
त्रिनेत्रं दशदोर्देवं जटामकुटमण्डितम्
पञ्चवक्त्रयुतं रौद्रं पञ्चमूर्ध्ना च संयुतम् ५३
दिव्याम्बरधरं देवं दिव्यगन्धानुलेपनम्
सर्वाभरणसंयुक्तं चन्द्रार्धकृतशेखरम् ५४
ध्यात्वा सदाशिवं देवं पञ्चमावरणान्वितम्
शतं शिवेन हुत्वा तु शेषाणां च दशाहुतिः ५५
शिवे दशाहुतिर्यद्यदन्येष्वेकाहुतिर्भवेत्
गन्धपुष्पादिनाभ्यर्च्य होमं कृत्वा यथाविधि ५६
हिरण्या कनका रक्ता कृष्णा चैव तु सुप्रभा
अतिरक्ता बहुरूपा सप्तजिह्वा प्रकीर्तिताः ५७
हिरण्या वारुणे जिह्वा कनका मध्ये व्यवस्थिता
रक्ता तु चोत्तरे जिह्वा कृष्णा याम्यदिशि स्थिता ५८
सुप्रभा पूर्वजिह्वा स्यादतिरक्तानले स्थिता
बहुरूपेशजिह्वा स्याज्जिह्वास्थानं प्रकीर्तितम् ५९
हिरण्या शातकुम्भाभा कनका राजपुष्पवत्

रक्ता सिन्दूरसदृशा कृष्णा कृष्णाभ्रसंनिभा ६०
सुप्रभा श्वेतवर्णाभा अतिरक्तेन्द्रगोपमा
बहुरूपा चित्रवर्णा जिह्वावर्णमुदाहृतम् ६१
बहुरूपा त्रिधा ज्ञेया सुषुम्ना पिङ्गला इडा
एकाग्निमुखजिह्वास्था नवभेदा उदाहृताः ६२
बहुरूपा रक्तजिह्वा सुप्रभा वामतो भवेत्
अतिरक्ता कनका च हिरण्या कृष्णा सव्यके ६३
वायुनैर्ऋतयोः स्थाने इडापिङ्गलयोर्न्यसेत्
आनने तु समुत्पन्ने जिह्वा तच्छक्तिराश्रिता ६४
काली चैव कराली च मनोरमा च लोहिता
धूम्रवर्णा विश्वरूपा विष्णुलिङ्गी विलोमता ६५
देवी लोलायनयना इति शक्तिः प्रकीर्तिता
हिरण्यादि इडान्तं च वर्णशक्तिषु योजयेत् ६६
हिरण्यायां समिद्धुत्वा कनकायां घृतं हुनेत्
रक्तायां तु यवं हुत्वा कृष्णायां धान्यकं हुनेत् ६७
सुप्रभायां हुनेत्सक्तुमतिरक्तायां तिलं हुनेत्
बहुरूपायां सिद्धार्थं सर्वासु चरुरुच्यते ६८
द्रव्याण्यन्यानि सर्वाणि कनकायां हुनेत्क्रमात्
अर्थसिद्धिमवाप्नोति घृतेन मधुनानल ६९
अन्नेन धान्यमाप्नोति क्षीरेणैव तु शान्तिकम्
तिलेन पुष्टिमाप्नोति सौभाग्यं लाजकेन तु ७०
रिपुनाशकरी सक्तु सिद्धार्थं व्याधिनाशनम्
गुलं प्रीतिकरं प्रोक्तं राजवश्यं यवेन तु ७१
फलेन सुखमाप्नोति पत्रं पुत्रविवर्धनम्
वर्णं गन्धं च शब्दं च धूमं चाग्निशिखारणम् ७२
षट्चिह्नानि च वह्नेस्तु ज्ञात्वा कर्म समारभेत्
वर्णमेकादशं ज्ञेयं गन्धं चैव त्रयोदशम् ७३
शब्दं च पञ्चधा ज्ञेयं चतुर्धा धूमलक्षणम्
पञ्चधा वै शिखाकारमरणीं द्वादशं स्मृतम् ७४

सिद्धासिद्धं तु लिङ्गानि पञ्चाशद्भिर्विधीयते
शुद्धसौवर्णसंकाशं सिन्दूरारुणसंनिभम्  ७५
वैडूर्याभेन्द्रगोपाभं हरितालसमप्रभम्
तप्तायसमयं रौप्यं पिङ्गलं सर्पिमञ्जनम्  ७६
कृष्णवर्णा इमे सर्वे सर्वत्र परिकीर्तिताः
कृष्णाभे यजमानस्य मरणं कुरुते सदा  ७७
रौप्याभे राष्ट्रदोषं स्यात्पिङ्गलं बहुरोगदम्
चन्दनागरुकर्पूरं कस्तूरी मल्लिका तथा  ७८
आज्यगुग्गुलुपुन्नागपाटली ह्युशीरं तथा
मूत्रविष्ठानुगन्धं च शवगन्धं त्रयोदश  ७९
विष्ठागन्धो महादुःखं मूत्रगन्धो बलक्षयम्
शवगन्धः सुतं हन्ति शब्दं च शृणु सांप्रतम्  ८०
मेघकुञ्जरभेर्याश्च खरकाकस्वरं तथा
वायसी वास्तुनाशं स्याद्वर्गनाशं खरध्वनिः  ८१
कुन्दकाशनिभं धूमं कपोतं शुकपिञ्छकम्
गोनाशीं शुकपिञ्चभां वाहनानां क्षयं भवेत्  ८२
शिखा रश्मिसमाकारा छत्राकारोर्ध्वगामिनी
सुचित्रा च सुवृत्ता च पञ्चधा परिकीर्तिता  ८३
सुचित्रा मरणं कुर्यात्सुवृत्ता धननाशनम्
प्रदक्षिणं चापसव्यमपहासं च खाननम्  ८४
अधोगतिस्तथा तिर्यक्पुनरावर्तं लास्यकम्
विस्फुलिङ्गापशब्दं च दर्दरो माक्षिकाकृतिः  ८५
अथ प्रदक्षिणावर्तं शुभं वै सर्वकर्मणि
विस्फुलिङ्गे त्वनर्थं स्याद्विद्युत्पातं च दर्दरे  ८६
आकृतिस्तावदित्युक्ता तेन भूताद्भयं भवेत्
यदापसव्यगमनमनलेन दहेद्गृहम्  ८७
एषां दोषनिवृत्त्यर्थमस्त्रेणैव शताहुतिः
मिन्दाहुतिश्च कर्तव्या व्याहृतिं च हुनेत्क्रमात्  ८८
स्विष्टमग्नेति मन्त्रेण स्विष्टाहुतिमथाचरेत्

हृदये चाग्निमावाह्य पश्चादग्निं विसर्जयेत् ८९
अग्निमावाहयेत्पश्चाद्विसृज्य च यथाविधि
अग्निकार्यविधिः प्रोक्त आसीनस्थापनं शृणु ९०
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे अग्निकार्यपटलः त्रयस्त्रिंशत्तमः

## चतुस्त्रिंशत्तमः पटलः
## सुखासनस्थापनविधिः

अथातः संप्रवक्ष्यामि आसीनस्थापनं परम्
क्षेमदं जयदं लोके राजराष्ट्रविवर्धनम् १
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने
तिथ्यंशके शुभे वारे स्थिरराश्युभयोदये २
स्थापयेद्देशिको धीमान् चरराश्युदयं विना
निर्दिष्टदिनपूर्वं तु सप्ताहे पञ्चमेऽपि वा ३
अङ्कुराण्यर्पयेद्धीमान्पूर्वोक्तविधिना सह
प्रतिष्ठादिवसात्पूर्वं पञ्चाहे त्रियहेऽपि वा ४
रत्नन्यासः प्रकर्तव्यः सुमुहूर्ते सुलग्नके
माणिक्यं मध्यमे न्यस्त्वा हैमकूर्चसमन्वितम् ५
इन्द्रनीलं तु पूर्वायां न्यसेन्मरकतं यमे
वारुणे स्फटिकं प्रोक्तं चन्द्रकान्तं तु सौम्यके ६
हृद्बीजेन न्यसेद्धीमान् सुस्निग्धं कारयेत्ततः
नयनमोक्षणं कुर्यान्नेत्रयुग्मयुते दिने ७
मण्डपे स्थण्डिलं कुर्याच्छालिभिश्चतुरङ्गुलम्
हस्तमात्रप्रविस्तारं वृत्तं वा चतुरश्रकम् ८
तण्डुलैस्तिलदर्भैश्च लाजैश्चैव परिस्तरेत्
तन्मध्ये विन्यसेद्देवं परितोऽष्टघटान्न्यसेत् ९
ससूत्रान्सापिधानांश्च गन्धतोयेन पूरयेत्
तत्तत्स्वनाममन्त्रेण गन्धपुष्पादिनार्चयेत् १०
आचार्यं पूजयेत्तत्र शिल्पिनं तदनन्तरम्
पक्ष्मरेखां लिखेत्सूच्या शातकुम्भमयेन च ११

कृष्णमण्डलमालिख्य दृष्टिमण्डलमलिखेत्
आचार्यो मन्त्रमुच्चार्य शिल्पिकर्म समारभेत् १२
प्रोतहैमनखैः स्पृष्ट्वा नेत्रमन्त्रमुदाहरेत्
मध्वाज्यसूक्तमुच्चार्य मध्वाज्याभ्यां तु तर्पयेत् १३
गौर्धेन्वा धेनुकं दृष्ट्वा ब्रह्मसूक्तेन ब्राह्मणान्
पुण्याहं वाचयेदन्ते शुद्धिं कृत्वा यथोदितम् १४
ग्रामप्रदक्षिणं कृत्वा सर्वातोद्यसमन्वितम्
कुर्याज्जलाधिवासं तु नद्यां वाथ तटाकके १५
तीरे समतलं कृत्वा शुद्धिं कृत्वा तु पूर्ववत्
मूर्धादिपादपर्यन्तं वस्त्रैर्दर्भैश्च वेष्टयेत् १६
शाययेज्जलमध्ये तु प्राक्शिरस्कं हृदा बुधः
एकरात्रं द्विरात्रं वा त्रिरात्रं वाऽधिवासयेत् १७
वितानैर्धूपदीपैश्च ध्वजदण्डैश्च भूषितम्
मण्डपं कारयेद्धीमान्प्रासादस्याग्रतोऽन्तिके १८
द्वादशं दशहस्तं वा दर्पणोदरसन्निभम्
त्रिभागैकं भवेद्वेदी रत्निमात्रसमुछ्रयम् १९
परितः कल्पयेत्कुण्डं हस्तमात्रप्रविस्तरम्
चतुरश्रं चतुर्दिक्षु वृत्तं प्राधानिकं कुरु २०
मेखलात्रयसंयुक्तं द्वित्रिभिश्चतुरङ्गुलैः
नाभियोनिसमायुक्तं निम्नोन्नतविवर्जितम् २१
वितानध्वजदर्भैश्च मण्डयेन्मण्डपं बुधः
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् २२
पर्यग्निकरणं कृत्वा पुण्याहं वाचयेत्ततः
स्थण्डिलं कारयेद्विद्वान्वेदिमध्ये विधानतः २३
तण्डुलैः शोभितं कृत्वा तिलदर्भैः परिस्तरेत्
शयनं कल्पयेन्मध्ये चर्मजाद्यैरनुक्रमात् २४
चर्मजं चाण्डजं चैव रोमजं मुण्डजं तथा
परिस्तरणसंयुक्तं गन्धपुष्पैस्तु पूजयेत् २५
जलादुत्तार्य देवेशं शुद्धिं कृत्वा तु पूर्ववत्

सुमुहूर्ते सुलग्ने तु शाययेच्छयनोपरि २६
प्राक्शिरस्कं हृदा देवमूर्ध्ववक्त्रं यथा न्यसेत्
रक्तवस्त्रेण संवेष्ट्य कुशदर्भैश्च वेष्टयेत् २७
अभितः कलशानष्टौ द्रोणाम्बुपूरितान्यसेत्
ईशानशक्रयोर्मध्ये शिवकुम्भं च वर्धनीम् २८
स्थापयित्वा यथान्यायं शिवमन्त्रसमन्वितम्
गौरीबीजं तु वर्धन्यां न्यस्त्वा विद्येश्वरात्मकान् २९
कूर्चवस्त्रापिधानैश्च पल्लवैश्च विभूषयेत्
गन्धपुष्पादिनाभ्यर्च्य स्वस्वबीजं स्मरन्न्यसेत् ३०
तोरणद्वारकुम्भं च पूजयित्वा यथाविधि
अश्वत्थोदुम्बरप्लक्षवटं पूर्वादितः क्रमात् ३१
पलाशं तु प्रधानस्य सर्वेषामिध्ममुच्यते
समिदाज्यचरून् लाजान् यवसिद्धार्थमाषकान् ३२
मधुघृत्समायुक्तं गुलखण्डं च होमयेत्
शोधनं क्षालनं चैव शोषणं पाचनं तथा ३३
पञ्चसंस्कारसंयुक्तं होमं कुर्याद्यथाक्रमम्
ईशानेन समिद्धोमं पुरुषेण घृतं हुनेत् ३४
अघोरेण चरुं हुत्वा लाजं वामेन होमयेत्
यवं सद्येन हुत्वा तु सिद्धार्थं कवचेन तु ३५
माषमस्त्रेण जुहुयान् नेत्रमन्त्रैर्मधुत्रयम्
प्रत्येकं शतमर्धं वा तदर्धं वापि होमयेत् ३६
रात्रिशेषं हुनेद्धीमान्षोडशाहुतिसंख्यया
घृतमिक्षे घृतं हुत्वा देवस्यत्वा चरुं हुनेत् ३७
ब्रह्मजज्ञानमन्त्रेण शेषद्रव्याणि होमयेत्
द्रव्यान्ते व्याहृतिं हुत्वा पूर्णाहुतिम् अथाचरेत् ३८
प्रभाते स्नानं कुर्वीत आचार्यो मूर्तिपैः सह
मुहूर्तनाडिकापूर्वे सर्वातोद्यसमाकुलम् ३९
जयादिरभ्याधानं च राष्ट्रभृच्च हुनेत्क्रमात्
शयनाद्देवमुत्थाप्य स्नानवेद्युपरि न्यसेत् ४०

मराडपं भूषयेद्धीमान्स्नानार्थं संप्रकल्पितम्
स्रासनं श्वभ्रमध्ये तु कल्पयेत्पद्मसंज्ञितम् ४१
तन्मध्ये स्थापयेद्देवं प्राङ्मुखं हृदयेन तु
स्रष्टत्रिंशत्कलान्यासं ब्रह्माङ्गं च ततो न्यसेत् ४२
पूजयित्वा हृदा मन्त्री ततः स्थापनमारभेत्
शिवकुम्भं समादाय शिवबीजं हृदि न्यसेत् ४३
गौरीबीजं न्यसेत्पीठे कराठदेशसमाश्रितम्
विद्येश्वरानपि स्थाप्य कुम्भतोये स्वनामतः ४४
स्नपनं कारयेदन्ते पूर्वोक्तविधिना सह
मराडपे स्थापयेद्देवमर्चयित्वा यथाविधि ४५
नैवेद्यं दापयेद्धीमान् ताम्बूलं च निवेदयेत्
उत्सवं कारयेत्पश्चाद्यथावित्तानुसारतः ४६
एवं यः कुरुते मर्त्यः स पुरायां गतिमाप्नुयात्
इह लोके सुखं प्राप्य मृते सायुज्यमाप्नुयात् ४७
स्रासीनस्थापनं प्रोक्तं वैवाह्यस्थापनं शृणु
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे सुखासनस्थापनपटलः चतुस्त्रिंशत्तमः

## पञ्चत्रिंशत्तमः पटलः
## वैवाह्यस्थापनविधिः

स्रतः परं प्रवक्ष्यामि यागं वैवाह्यमूरिनः
प्रतिमालक्षणोपेतं देवं देवीमजं कुरु १
विष्णुं च लक्ष्मीमग्निं च ततः स्थापनमारभेत्
प्रतिष्ठादिनपूर्वं तु वापयेदङ्कुराणि वै २
रत्नन्यासं ततः कुर्यान्मराडपे समलङ्कृते
स्थरिडलं शालिभिः कुर्यात्पञ्चतालप्रमाणतः ३
तराडुलैः शोभितं कृत्वा तिलदर्भैः परिस्तरेत्
स्थापयेन्मध्यमे देवं देवीं दक्षिणतो न्यसेत् ४
देव्याश्च दक्षिणं हस्तं गृह्णीयाद्दक्षिणेन तु
सर्वशान्तिकरं ह्येतन्मुक्त्यर्थमधुनोच्यते ५

देवस्य वामभागे तु देवीं कुर्याद्विचक्षणः
देव्यास्तु दक्षिणं हस्तं गृह्णीयाद्वामपाणिना ६
एतन्मुक्त्यर्थमाख्यातं ज्ञात्वा कर्म समाचरेत्
वामभागे न्यसेद्विष्णुं ब्रह्माणं दक्षिणे न्यसेत् ७
रत्नानि विन्यसेद्धीमान्दिग्विदिक्षु च मध्यमे
प्रवालं पूर्वदिग्भागे मरकतं चाग्निगोचरे ८
इन्द्रनीलं तु याम्यायां मुक्ता निर्ऋृतिगोचरे
स्फटिकं वारुणे भागे वायव्यां शङ्खमेव च ९
पुष्यरागं तु कौबेर्यां सूर्यकान्तं तु शाङ्करे
माणिक्यं मध्यमे चैव न्यसेद्दिग्बीजमन्त्रतः १०
इन्द्रनीलं महानीलं स्फटिकं पुष्परागकम्
माणिक्यं च महादिक्षु मध्ये विष्णौ ततो न्यसेत् ११
ब्रह्मपीठे न्यसेदेवं हैमं गौरीश्रियोर्न्यसेत्
एवं न्यस्त्वा हृदा मन्त्री सुस्निग्धं कारयेत्ततः १२
अक्षिद्वययुते ऋक्षे तन्नेत्रोन्मीलनं कुरु
पूर्ववत्स्थण्डिलं कृत्वा स्थापयेत्पूर्ववत्क्रमात् १३
लोकपालाधिदैवत्यानभितोऽष्टौ तु विन्यसेत्
कलशान्वारिसंपूर्णान्सवस्त्रान्कूर्चसंयुतान् १४
संस्थाप्य च ततः पूज्य गन्धपुष्पादिना बुधः
शङ्खभेरीनिनादैश्च स्वस्तिमङ्गलवाचकैः १५
हेमसूच्या लिखेद्विद्वान्पक्ष्मरेखां विशेषतः
असितं मण्डलं लिख्य दृष्टिमण्डलमालिखेत् १६
नेत्रमन्त्रं समुच्चार्य प्रोतसौवर्णकैर्नखैः
उमादिप्रतिमानां च नयनोन्मीलनं कुरु १७
मधुवातेति मन्त्रेण मधु नेत्रेषु तर्पयेत्
घृतमिक्षेति मन्त्रेण घृतपात्रं प्रदर्शयेत् १८
गौर्धेनुभव्यमन्त्रेण दर्शयेद्धेनुमुत्तमाम्
ब्राह्मणान्दर्शयेत्पश्चाद्ब्रह्मजज्ञानमन्त्रतः १९
दर्शयेत्सप्तबीजानि बीजमुख्यमनुस्मरन्

गन्धद्वारेति मन्त्रेण गोमूत्रमभिषेचयेत् २०
सवितेति शकृत्तोयं क्षीरमाप्यायमन्त्रतः
दधिक्रेति दधिस्नानमाज्यं शुक्रमसीति च २१
यत इन्द्रेति मन्त्रेण गन्धतोयेन सेचयेत्
तत्तद्धृदयमुच्चार्य गन्धपुष्पादिनार्चयेत् २२
स्रग्वस्त्रभूषणैर्भूष्य कुर्याद्ग्रामप्रदक्षिणम्
सर्वातोद्यसमायुक्तं नृत्तगेयसमन्वितम् २३
नद्यां वापि तटाके वा प्रपां कृत्वातिसुन्दराम्
तत्तीरे प्रतिमाः स्थाप्य पवमानेन सेचयेत् २४
वस्त्रेण वेष्टयेत्सर्वान्कुशैश्च परिवेष्टयेत्
जलमध्ये चतुर्गात्रं कृत्वा तत्रैव शाययेत् २५
प्राक्शिरश्चोर्ध्ववक्त्रं तु कण्ठदघ्नजले बुधः
पञ्चरात्रं त्रिरात्रं वा एकरात्रमथापि वा २६
मण्डपं कारयेद्धीमान्प्रासादस्याग्रतोऽन्तिके
दशद्वादशहस्तं वा नवहस्तमथापि वा २७
मध्यमे वेदिकां कुर्याद्धस्तमात्रसमन्विताम्
रत्निमात्रसमुत्सेधं दर्पणोदरसंनिभाम् २८
कुण्डानि परितः कुर्यान्मानुषे तु पदे क्रमात्
रत्निमात्रप्रविस्तारं तद्वत्खातं त्रिमेखलम् २९
द्वित्रिचतुर्भिरङ्गुल्यैस्तारोत्सेधं ततः समम्
चतुरश्रं त्रिकोणं च धनुः पञ्चाश्रमेव च ३०
वृत्तं षडश्रं पद्मं च सप्तकोणं यथाक्रमम्
सुरेन्द्रेशानयोर्मध्ये वृत्तकुण्डं प्रकल्पयेत् ३१
दर्पणोदरसंकाशं निम्नोन्नतविवर्जितम्
नाभियोनिसम्युक्तं योनौ योनिं न कारयेत् ३२
वितानध्वजसंयुक्तं मुक्तादामैरलङ्कृतम्
दर्भमालासमायुक्तं मुक्तादामैरलङ्कृतम् ३३
चतुस्तोरणसंयुक्तं फलपल्लवशोभितम्
मण्डपस्योत्तरे पार्श्वे स्नानश्वभ्रं प्रकल्पयेत् ३४

हस्तमात्रप्रविस्तारं मेखलाद्वयभूषितम्
विस्तारोत्सेधमानं तु प्रत्येकं चतुरङ्गुलम् ३५
नालमुत्तरभागे तु कल्पयेत्तु सुवृत्तकम्
तस्य पश्चिमतो भागे विष्णोः श्वभ्रं प्रकल्पयेत् ३६
पूर्वे तु ब्रह्मणः श्वभ्रं कल्पयेत्पूर्ववत्क्रमात्
एवमेव क्रमो गौर्या मण्डपस्योत्तरे कुरु ३७
गौर्या एकं श्रियश्चाग्नेः कल्पयेत्कल्पवित्तमः
ब्राह्मणान्भोजयेत्तत्र शुद्धिं कृत्वा विशेषतः ३८
पुण्याहं वाचयेत्तत्र वास्तुहोमं तदन्तरे
जलादुत्तीर्य देवांश्च शुद्धिं कृत्वा तु पूर्ववत् ३९
वस्त्रैराभरणैर्माल्यैर्भूषयेद्भूषणार्हकान्
स्थण्डिलं कारयेद्वेद्यामष्टद्रोणैश्च शालिभिः ४०
तदर्धैस्तण्डुलैः कुर्यात्तदर्धैश्च तिलैरपि
शयनं कल्पयेन्मध्ये चर्मजाद्यैरनुक्रमात् ४१
चर्मजं रोमजं चैव मुण्डजं चाण्डजं तथा
उपर्युपरि संकल्प्य दर्भैश्च कम्बलैरपि ४२
दक्षिणे कल्पयेद्विष्णोरुत्तरे ब्रह्मणस्तथा
देव्यधिवासवेद्यां तु स्थण्डिलं शालिभिः कुरु ४३
अष्टद्रोणैस्तदर्धैर्वा तदर्धैश्च तिलैरपि
तिलदर्भलाजसङ्कीर्णं तन्मध्ये पद्ममालिखेत् ४४
मध्यमे कल्पयेद्गौर्याः श्रियं चोत्तरतो न्यसेत्
चर्मजाद्यैरनुस्थाप्य द्वयोर्देव्योर्विशेषतः ४५
पुरुषेणेति मन्त्रेण स्थण्डिलं प्रोक्षयेद्गुरुः
नृत्तगेयसमायुक्तैः स्तोत्रमङ्गलवाचकैः ४६
शाययेच्छयने देवं प्राक्शिरश्चोर्ध्ववक्त्रकम्
दक्षिणे शाययेद्विष्णुं वामे वै वेधसं न्यसेत् ४७
तत्तद्धृदयमन्त्रेण शाययेच्छयनोपरि
प्रत्येकं वेष्टयेद्धीमान्रक्तवस्त्रेण देशिकः ४८
तत्तच्छिरःप्रदेशेषु शिवकुम्भं च वैष्णवम्

ब्रह्मकुम्भं तु संस्थाप्य सवस्त्रं सापिधानकम् ४९
सकूर्चं वारिसंपूर्णं शिवकुम्भं च वर्धनीम्
अभितः कलशानष्टौ द्रोणार्धोदकपूरितान् ५०
ससूत्रान्सापिधानांश्च सवस्त्रान्हेमसंयुतान्
लोकपालाधिदैवत्यान्पूजयित्वा यथाविधि ५१
दर्शयेद्दशमुद्रास्तु नैवेद्यं दापयेत्पृथक्
अपरो देशिको धीमान्गौरीमधिवसेत्क्रमात् ५२
वेदिकायास्तु तन्मध्ये स्थण्डिलं पूर्ववत्कुरु
तिलदर्भैः समाकार्य तन्मध्ये शनयं कुरु ५३
शयनं कल्पयेन्मन्त्री श्रीदेव्याश्च विशेषतः
उमाया दक्षिणे भागे वह्न्यर्थं शयनं कुरु ५४
शयने शाययेद्देवीं मध्यमे तु हृदा तदा
वामे तु शाययेल्लक्ष्मीं प्राक्शिरश्चोर्ध्ववक्त्रकाम् ५५
दक्षिणे शाययेद्वह्निं शयनस्योपरि क्रमात्
रक्तवस्त्रेण संवेष्ट्य कुशपुष्पैः परिस्तरेत् ५६
तत्तच्छिरःप्रदेशेषु गौरीकुम्भं तु विन्यसेत्
श्रीकुम्भं चाग्निकुम्भं च विन्यसेत्तु विचक्षणः ५७
सकूर्चान्सापिधानांश्च सवस्त्रान्तोयपूरितान्
वामादि चाष्टशक्तींश्च पूर्वादिकलशे न्यसेत् ५८
गन्धपुष्पादिना पूज्य नैवेद्यान्तं विशेषतः
द्वारकुम्भं ततः स्थाप्य पूजयित्वा यथाविधि ५९
चतुर्दिक्षु चतुर्वेदैः कुर्यादध्ययनं क्रमात्
कोणे मन्त्रजपं कुर्यात्ततो होमं समाचरेत् ६०
खदिरोदुम्बराश्वत्थवटं पूर्वादितः क्रमात्
शमीबिल्वार्कमायूरमाग्नेयादि च कोणके ६१
पलाशं तु प्रधानस्य सर्वेषामिध्ममुच्यते
पलाशं चैव बिल्वं च उदुम्बरं च खादिरम् ६२
वैकङ्कतं तु मायूरं गौरीयागे विधीयते
अष्टोत्तरं तदर्धं वा प्रत्येकं परिगृह्य च ६३

समिदाज्यचरून्लाजान्सिद्धार्थतिलमाषकान्
यवशालिकुलत्थं च जुहुयात्क्रमशः पुनः ६४
शिवाग्निं जनयेत्पूर्वं पञ्चसंस्कारपूर्वकम्
हृदयादि चतुर्दिक्षु विदिक्षु पुरुषादयः ६५
प्रत्येकं समिधो हुत्वा शिवाग्नौ बीजमन्त्रतः
शिवाङ्गैश्चैव विद्याङ्गैर्घृतेन जुहुयाच्छतम् ६६
चरुं हुत्वा हृदा मन्त्री लाजं वै शिरसा हुनेत्
सिद्धार्थं शिखया हुत्वा कवचेन तिलं हुनेत् ६७
माषं हुत्वास्त्रमन्त्रेण नेत्रेण तु यवाहुतिः
शालिं हुत्वा शिवेनैव बीजमुख्यैः कुलत्थकम् ६८
शतमर्धं तदर्धं वा प्रत्येकं जुहुयात्क्रमात्
द्रव्यं प्रति हुनेद्धीमान्व्याहृतिं च विशेषतः ६९
अघोरास्त्रेण मन्त्रेण पूर्णाहुतिमथाचरेत्
शिवयागक्रमं ह्येतद्गौरीयागमथ शृणु ७०
समिदाज्यचरून्लाजांस्तिलसर्षपमाषकान्
दूर्वामधुयवाश्चैव दशद्रव्यं प्रकीर्तितम् ७१
गौर्यग्निं कल्पयेत्पूर्वं गौरीमन्त्रोक्तमार्गतः
गौरीगायत्रिमन्त्रेण समिद्धोमं समाचरेत् ७२
ब्रह्माङ्गैर्जुहुयाद्गौर्या आज्यादि च यवान्तकम्
शतमर्धं तदर्धं वा जुहुयात्क्रमशः पुनः ७३
गौरीमिमायमन्त्रेण घृतं हुत्वा शतार्धकम्
अहमस्मीति मन्त्रेण चरुं हुत्वा विशेषतः ७४
धान्यं हुत्वाग्निमीलेति सर्षपं सवितेति च
विष्णोर्नु कं तिलस्योक्तं त्र्यम्बकेन यवं हुनेत् ७५
अयं कुमारमन्त्रेण दूर्वां हुत्वा घृताक्तकाम्
मधुवाता मधु हुत्वा यवानाप्याय मन्त्रतः ७६
गौरीबीजं समुच्चार्य पूर्णाहुतिमथाचरेत्
विष्णुसूक्तैर्ब्रह्मसूक्तैः शिवसूक्ताग्निसूक्तकैः ७७
प्रत्येकं जुहुयाद्धीमान्दशसंख्याक्रमेण तु

नृत्तगेयैश्च होमैश्च रात्रौ जागरमाचरेत् ७८
आचार्यो मूर्तिपैः सार्धं क्षीरभुक्सुजेतिन्द्रियः
स्नानं कुर्यात्प्रभाते तु सकलीकृतविग्रहः ७९
जयादिरभ्याधानं च राष्ट्रभृच्च हुनेत्क्रमात्
स्नानश्वभ्रे हृदा मन्त्री दारवं च सदा भवेत् ८०
मुहूर्ते नाडिकापूर्वे सर्वातोद्यं सुघोषयेत्
स्नानवेदिं च परितो नृत्तगेयं प्रकल्पयेत् ८१
उत्थाप्य शयनाद्देवान्ब्रह्मविष्णुमहेश्वरान्
पूर्वाभिमुखमास्थाप्य गन्धपुष्पादिना यजेत् ८२
हस्तेनादाय तन्मूर्तिं विष्णुं ब्रह्माणमेव च
आलयं तु परिभ्राम्य स्नानवेद्युपरि न्यसेत् ८३
अष्टत्रिंशत्कलान्यासं ब्रह्माङ्गं च ततो न्यसेत्
विष्णवङ्गं विष्णवे योज्य ब्रह्माङ्गं ब्रह्मणे न्यसेत् ८४
गौरीकलां च न्यस्त्वा तु गौरीबीजाङ्गकं न्यसेत्
श्रीवह्निबीजं तद्देहे न्यस्त्वा पूज्य यथाक्रमम् ८५
शिवकुम्भं समानीय प्रतिमन्ते तु विन्यसेत्
ब्रह्मकुम्भं च विष्णवाख्यं तत्तद्देवाग्रतो न्यसेत् ८६
उमाश्रीवह्निकुम्भं च तत्तद्देव्यग्रतो न्यसेत्
ततो मुहूर्तमन्वीक्ष्य स्थापनं तु समारभेत् ८७
शिवकुम्भाच्छिवं बीजं प्रतिमाया हृदि न्यसेत्
विष्णुमूर्तेर्हृदि न्यस्त्वा विष्णुबीजसमावृतम् ८८
ब्रह्मणो ब्रह्मबीजं च हृदि न्यस्त्वा तु भावयेत्
उमाकुम्भादुमाबीजं हृदि योनौ गले न्यसेत् ८९
लक्ष्मीबीजं न्यसेदेवं शिखायामग्निबीजकम्
स्नपनं कारयेदन्ते प्रत्येकं पञ्चविंशतिः ९०
गन्धोदकेन संस्नाप्य पूजाकर्म समारभेत्
पाद्यमाचमनं चार्घ्यं हृदयेनैव दापयेत् ९१
गन्धैराभरणैर्माल्यैर्धूपदीपैश्च पूजयेत्
नैवेद्यं पायसं दद्याद्धृतेन गुलसंयुतम् ९२

हृदा चाचमनं दद्यान्निर्माल्यं तु विसर्जयेत्
ताम्बूलं दापयेत्पश्चाद्धनगन्धसमन्वितम् ९३
कुर्याद्वैवाहिकं कर्म तद्दिने वापरे दिने
रात्रौ वाथ विशेषेण वैवाह्यं कर्म कारयेत् ९४
मण्डपे स्थण्डिलं कुर्यात्सर्वलक्षणसंयुतम्
शुद्धवालुकया कार्यं रत्निमात्रप्रविस्तरम् ९५
अग्नेः पश्चिमतो भागे आसनं परिकल्पयेत्
पीठोपरि न्यसेद्धीमान्सदशं वस्त्रमुत्तमम् ९६
तन्मध्ये शिवमूर्तिं च स्थापयेत्प्राङ्मुखं ततः
शिवस्य दक्षिणे भागे स्थापयेत्पार्वतीं बुधः ९७
युक्त्या विष्णुं स्थापयेत्तु ब्रह्माणं चोत्तरं मुखम्
तस्याग्रे विन्यसेदग्निमाचार्यश्चोत्तरे मुखः ९८
शिवाग्निं जनयेत्पूर्वं पञ्चसंस्कारपूर्वकम्
शिवाङ्गैश्चैव विद्याङ्गैः शिवमन्त्रेण होमयेत् ९९
युवं वस्त्रेति मन्त्रेण वस्त्रयुग्मं प्रदापयेत्
आच्छादनमधश्चैव उत्तरीयमथान्यकम् १००
आपः पादेति पाद्यं स्याद्धृदा चाचमनं ददेत्
गन्धद्वारेति गन्धं तु पुष्पं पुष्पावतीत्ययम् १०१
अक्षता पृथिवी ज्ञेया शिरस्यर्घ्यं प्रदापयेत्
वस्त्रयुग्मेति मन्त्रेण वस्त्रं गौर्या निवेदयेत् १०२
पाद्यादि दापयेत्पश्चात्पूर्वोक्तविधिना सह
घोषयेत्स्वस्तिसूक्तं तु सर्वातोद्यसमन्वितम् १०३
हृदा तु दापयेद्गौर्या दिव्यं मङ्गलसूत्रकम्
कौतुकं बन्धयेद्धीमान्देवीं देवं हृदा तथा १०४
अस्त्रमन्त्रं समुच्चार्य भस्म दद्याद्द्वयोरपि
क्षीरं दधि घृतं गौल्यं बीजमुख्येन योजयेत् १०५
मधुपर्कं ददेद्धीमान्त्र्यम्बकेन शिवाय च
अस्त्रेणाचमनं दद्याज्जलदानं समाचरेत् १०६
विष्णुसूक्तेन मन्त्रेण विष्णुमन्त्रैश्च पूजयेत्

शिवगायत्रिमन्त्रेण विष्णुना दापयेज्जलम्  १०७
ब्राह्मणो वेदसंपन्नो ह्याहिताग्निर्दृढव्रतः
विष्णुभावं भावयित्वा गुरुहस्ते जलं ददेत्  १०८
रुद्रसूक्तं ब्रह्मसूक्तं विष्णुसूक्तं हुनेत्क्रमात्
गौरीपादं स्पृशेदश्मन्निधाय च शिवेन तु  १०९
अघोरास्त्रेण मन्त्रेण विंशत्याहुतिमाचरेत्
शिवमन्त्रं समुच्चार्य पूर्णाहुतिमथाचरेत्  ११०
यदस्येति ततो हुत्वा सर्वस्यान्ते विशेषतः
परिषेचनं ततः कृत्वा प्रणीतां च विसर्जयेत्  १११
ब्रह्माणं च विसृज्याथ नैवेद्यं दापयेत्तदा
सर्वेषां सोपदंशं च आचमनं हृदा ददेत्  ११२
ताम्बूलं दापयेत्पश्चात्पञ्चगन्धसमन्वितम्
चतुर्थेऽहनि यत्कर्म तत्सर्वं सहसाचरेत्  ११३
अग्न्याधानादिकं कर्म पूर्वोक्तविधिना कुरु
स्नापयेद्गन्धतोयेन देवं देवीं विशेषतः  ११४
वस्त्रैराभरणैर्माल्यैर्भूषयेद्भूषणैः शुभैः
पूर्वोक्तेनैव मन्त्रेण दद्यात्पाद्यादिकं क्रमात्  ११५
ब्रह्माङ्गैश्चैव विद्याङ्गैर्लोकपालादिमन्त्रकैः
शयनस्थानं संप्राप्य प्रोक्षयेत्पुरुषेण तु  ११६
विष्णुर्योनीति मन्त्रेण शयनं परिकल्पयेत्
जयादिरभ्याधानं च राष्ट्रभृच्च हुनेत्क्रमात्  ११७
शयने विन्यसेद्देवं गौरीयुक्तं हृदा तदा
स्नपनं कारयेद्धीमांस्तत्तन्नैवेदनैर्बुधः  ११८
अर्चनोक्तं समभ्यर्च्य नैवेद्यान्तं विशेषतः
उत्सवं कारयेत्तत्र एकाहं त्रियहं तु वा  ११९
सप्ताहं वा प्रकुर्वीत ततस्तद्विधिना सह
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः  १२०
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
इहैव धनवाञ्श्रीमान्गोमान्सत्पुत्रवान्भवेत्  १२१

अमुत्र स्वर्गमाप्नोति भोगान्भुङ्क्ते यथेप्सितान्
पुण्यक्षयादिहागत्य पृथिव्यामेकराड् भवेत् १२२
वैवाह्यस्थापनं प्रोक्तं सहितस्थापनं शृणु
इति श्रीदीप्तशास्त्रे प्रतिष्ठातन्त्रे वैवाह्यस्थापनविधिपटलः पञ्चत्रिंशत्तमः

## षट्त्रिंशत्तमः पटलः
## सोमास्कन्दप्रतिष्ठाविधिः

अतः परं प्रवक्ष्यामि स्कन्दोमासहितस्य तु
स्थापनं भोगदं वह्ने राजराष्ट्रविवर्धनम् १
अङ्कुराण्यर्पयेत्पूर्वे पूर्वोक्तविधिना सह
रत्नन्यासं तदन्ते तु नवबीजसमन्वितम् २
ब्रह्मस्थाने न्यसेद्वज्रमैन्द्रे चैवेन्द्रनीलकम्
माणिक्यं वह्निदेशे तु याम्ये मरकतं न्यसेत् ३
पुष्परागं तु नैर्ऋत्यां वारुण्यां मौक्तिकं न्यसेत्
स्फटिकं वायुदिग्भागे प्रवालं सौम्यदेशके ४
ऐशान्यां तु महानीलं न्यसेद्दिग्बीजसंयुतम्
एवमेव क्रमाद्देव्या गौरीगायत्रिमन्त्रतः ५
अष्टदिक्षु च मध्ये तु न्यसेद्धैमं विशेषतः
रत्नन्यासं न कर्तव्यं स्कन्दस्य तु विशेषतः ६
सुस्निग्धं कारयित्वा तु कुर्याच्चैवाक्षिमोक्षणम्
मण्डपे वा प्रपायां वा स्थण्डिलं चतुरश्रकम् ७
कारयेदष्टद्रोणेन तदर्धैस्तण्डुलैस्तिलैः
तन्मध्ये स्थापयेद्देवं हृदा पूज्य यथाविधि ८
अभितः कलशानष्टौ ससूत्रान्सापिधानकान्
गन्धोदकेन संपूर्णान्लोकपालाधिदेवतान् ९
स्थापयेत्तु यथान्यायं यजेदस्त्रादिना बुधः
हैमसूच्या लिखेत्पूर्वं पक्ष्मरेखां विशेषतः १०
कृष्णमण्डलमालिख्य ज्योतिर्मण्डलमालिखेत्
जाम्बूनदनखैः प्रोतैः नेत्रमन्त्रमुदीरयन् ११

मधुपूर्णताम्रपात्रं मधुवातेति दर्शयेत्
नेत्रेषु तर्पयेत्तेन नेत्रबीजमुदाहरन् १२
घृतं तु दर्शयेत्पश्चात्कांस्यपात्रे विशेषतः
धेनुं च दर्शयेद्धीमान् गौर्धेनुरिति मन्त्रतः १३
ब्राह्मणान्दर्शयेत्पश्चाद्ब्रह्मजज्ञानमन्त्रतः
एवमेव क्रमाद्देव्याः स्कन्दस्यापि विशेषतः १४
अस्त्रमन्त्रं समुच्चार्य शिल्पिनं च विसर्जयेत्
मण्डपस्योत्तरे पार्श्वे शुद्धस्नानं समाचरेत् १५
शुद्धैरुक्थेति मन्त्रेण शुद्धिं कृत्वा शिवाम्भसा
व्योमव्यापीति मन्त्रेण कुर्याद्गव्याभिषेचनम् १६
गन्धपुष्पादिना पूज्य वस्त्राभरणसंयुतम्
ग्रामप्रदक्षिणं कृत्वा सर्वालङ्कारसंयुतम् १७
पिञ्छचामरसंकीर्णं धूपदीपसमन्वितम्
सर्वातोद्यसमायुक्तं नृत्तगेयसमन्वितम् १८
जलाधिवासनं कुर्याद्बाहुदघ्नजले बुधः
जलमध्ये प्रपां कृत्वा वितानध्वजदर्भकैः १९
वस्त्रेणाच्छादयेद्देवं गौरीं स्कन्दं पृथक्पृथक्
दर्भैराच्छादयेन्मन्त्री जलमध्ये तु शाययेत् २०
एकरात्रं द्विरात्रं वा त्रिरात्रं वा जलोषितम्
आलयस्याग्रतः कुर्यान्मण्डपं चतुरश्रकम् २१
दशद्वादशहस्तं वा एकादशमथापि वा
मण्डपं तु त्रिधा भज्य मध्यभागं तु वेदिका २२
रत्निमात्रं समुत्सेधं मुष्टिमात्रमथापि वा
दर्पणोदरसङ्काशं वितानध्वजभूषितम् २३
दर्भमालासमायुक्तं द्वारतोरणसंयुतम्
मुक्तादामैः समायुक्तं पुष्पमालाप्रलम्बितम् २४
कुण्डानि परितः कुर्यान्मानुषे तु पदे क्रमात्
चतुरश्रं च पूर्वायां पञ्चाश्रं चैव दक्षिणे २५
वर्तुलं वारुणे भागे सौम्यायामनलाश्रकम्

अाग्नेयादिषु कोणेषु कुर्यादश्वत्थपत्रवत् २६
ईशानशक्रयोर्मध्ये वृत्तकुण्डं प्रकल्पयेत्
हस्तमात्रप्रविस्तारं खातं हस्तप्रमाणकम् २७
मेखलादिसमायुक्तं द्वित्रिभिश्चतुरङ्गुलैः
नाभियोनिसमायुक्तं योनौ योनिं न कारयेत् २८
मण्डपस्योत्तरपार्श्वे स्नानश्वभ्रं प्रकल्पयेत्
तत्पीठतारादध्यर्धं तारायामं तु तत्समम् २९
उत्तरे नलमार्गं स्यात्पीठायामं समं युतः
नालाग्रे ह्यवटं कुर्याद्धस्तमात्रप्रमाणकम् ३०
मेखलाद्वयसंयुक्तमेकैकं चतुरङ्गुलम्
प्रोक्षयेन्मण्डपं सम्यक्पुरुषेण तु मन्त्रतः ३१
पुण्याहं वाचयेदन्ते वास्तुहोमं समाचरेत्
जलादुत्तीर्य देवेशं पूर्ववच्छुद्धिमाचरेत् ३२
कौतुकं बन्धयेत्तत्र देवं देवीं गुहं क्रमात्
स्यन्दने रोपयित्वा तु सर्वालङ्कारसम्युते ३३
प्रासादं तु परिभ्राम्य नयेन्मण्डपमध्यतः
स्थण्डिलं कारयेद्विद्वानष्टद्रोणैश्च शालिभिः ३४
गन्धादिना समभ्यर्च्य अण्डजादीनि कल्पयेत्
अण्डजं मुण्डजं चैव रोमजं चर्मजं तथा ३५
प्रतिलोमक्रमात्स्थाप्य पूजयित्व हृदा बुधः
शन्नो देवेति मन्त्रेण शाययित्वोर्ध्ववक्त्रतः ३६
प्राक्शिरस्कं न्यसेत्तस्मिन्वस्त्रैराच्छदयेद्धृदा
गन्धादिना समभ्यर्च्य शिवकुम्भं न्यसेत्क्रमात् ३७
वर्धनीं वामदिग्भागे स्कन्दकुम्भं तु मध्यमे
शिवकुम्भे न्यसेद्रत्नं वर्धन्यां हैममेव च ३८
स्कन्दकुम्भे न्यसेद्रत्नं शक्तिं वा हेमसंभवाम्
तत्तच्छिरःप्रदेशे तु तत्तत्कुम्भं तु विन्यसेत् ३९
सकूर्चान्सापिधानांश्च सवस्त्रान्वारिपूरितान्
प्रासादबीजं विन्यस्य शिवकुम्भस्य मध्यमे ४०

आदिमं स्याद्द्वितीयस्य अष्टमस्य द्वितीयकम्
षष्ठस्य चान्तिमं बीजं मायानलसमन्वितम्  ४१
बिन्दुनादसमायुक्तं धर्मकामार्थमोक्षदम्
चलानां चैव सर्वेषां बीजमेतदुदाहृतम्  ४२
खान्तं यान्तसमायुक्तमुमाबीजसमायुतम्
बिन्दुनादसमायुक्तं वर्धन्यां मध्यमे न्यसेत्  ४३
षान्तमौकारसंयुक्तं मायानलसमायुतम्
बिन्दुनादसमायुक्तं स्कन्दकुम्भे तु विन्यसेत्  ४४
शिवं गौरीं कुमारं च तत्तत्कुम्भे तु भावेयेत्
अभितः कलशानष्टौ द्रोणतोयप्रपूरितान्  ४५
सवस्त्रान्सापिधानांश्च सकूर्चान्सहिरण्यकान्
अनन्तादिशिखण्ड्यन्तान्पूर्वादिक्रमतो न्यसेत्  ४६
तत्तत्कुम्भेषु तद्बीजं न्यस्त्वा पूज्य यथाविधि
कुम्भानामन्तराले तु वर्धन्यष्टौ तु विन्यसेत्  ४७
मुकुलीं पद्ममुद्रां तु अमृताख्यां प्रदर्शयेत्
अष्टमङ्गलरूपाणि वेद्यधः परिकल्पयेत्  ४८
दिक्षु चाध्ययनं कुर्याद्विदिक्ष्वस्त्रं जपेद्बुधः
तोरणानि समभ्यर्च्य ततो होमं समारभेत्  ४९
पलाशोदुम्बराश्वत्थं प्लक्षं चेति दिशासु वै
शमीखादिरबिल्वं च मायूरं च विदिक्षु च  ५०
पालाशं तु प्रधानस्य समित्सम्यगुदीरितम्
समिदाज्यचरून् लाजान्सक्तुं च सर्षपांस्तिलान्  ५१
शिवाग्निं जनयेत्पूर्वं पञ्चसंस्कारसंयुतम्
आज्यं हृदयमन्त्रेण चरुं वै शिरसा हुनेत्  ५२
लाजं हुत्वाथ शिखया सक्तुं वै कवचेन तु
सर्षपं चास्त्रमन्त्रेण तिलं नेत्रेण होमयेत्  ५३
घृतमिक्षेति मन्त्रेण अन्नं प्राणमिति ब्रुवन्
आ वो राजेति मन्त्रेण लाजहोमं समाचरेत्  ५४
सक्तुं त्रियम्बकैर्मन्त्रैस्तिलं यत्तोयमेव च

त्वन्नो अग्नेति मन्त्रेण सर्षपं जुहुयाद्गुरुः ५५
एवं जागरणं रात्रौ प्रभाते स्नानमाचरेत्
आचार्यो मूर्तिपैः सार्धं स्नानत्रयमथाचरेत् ५६
प्राणायामत्रयं कृत्वा करन्यासं तु कारयेत्
द्रव्यैराज्यादिभिर्हुत्वा चरुहीनं यथा क्रमात् ५७
हृदादिनेत्रपर्यन्तं प्रत्येकं षोडशं हुनेत्
तत्तद्देशे स्पृशेद्देवं गौरीस्कन्दं स्पृशेत्क्रमात् ५८
जयादिरभ्याधानं च राष्ट्रभृच्च हुनेत्क्रमात्
स्नानासनादि संकल्प्य स्नानवेद्युपरि न्यसेत् ५९
अनन्तं कल्पयेच्चाथ पद्मासनमथोच्यते
नवशक्तिं न्यसेद्दिक्षु मध्ये चैव मनोन्मनीम् ६०
गन्धादिना समभ्यर्च्य पद्ममुद्रां प्रदर्शयेत्
आचार्यं पूजयेत्पश्चाद्वस्त्रहेमाङ्गुलीयकैः ६१
आचार्यदक्षिणां दद्यात्पूर्वोक्तविधिना सह
मूर्तिपादीन्विशेषेण पूजयित्वा यथाविधि ६२
सर्वातोद्यसमायुक्तं नृत्तगेयसमन्वितम्
ब्रह्मघोषसमायुक्तं स्वस्तिसूक्तसमन्वितम् ६३
उत्थाप्य शयनाद्देवं स्नानश्वभ्रे तु विन्यसेत्
अङ्गानि कल्पयेत्तस्मिन्नष्टत्रिंशत्कला न्यसेत् ६४
देव्यङ्गं कल्पयेद्देव्याः स्कन्दाङ्गेऽङ्गानि कल्पयेत्
घृतं शिरोर्पणं कुर्यादक्षताङ्कुरसर्पिषा ६५
तत्तद्धृदयमन्त्रेण मूर्तिबाह्वोश्च पादयोः
ततो मुहूर्तं चान्वीक्ष्य ततः स्थापनमारभेत् ६६
शिवकुम्भं समानीय पूज्य गन्धादिना बुधः
शिवकुम्भात्समादाय प्रासादं प्रतिमस्य च ६७
हृदि न्यस्त्वा क्रमात्पूज्य अर्चनोक्तं विचक्षणः
गौरीबीजं तु वर्धन्यामुमाया हृदि विन्यसेत् ६८
कण्ठे शिरसि योनौ तु विन्यसेत्पादयोरपि
स्कन्दकुम्भात्समादाय स्कन्दबीजं हृदि न्यसेत् ६९

मूर्तिकुम्भात्समादाय मूर्तीश्च परितो न्यसेत्
गन्धपुष्पादिना पूज्य दशमुद्रां प्रदर्शयेत् ७०
स्नपनं कारयेदन्ते यथाशक्ति विशेषतः
अर्चनोक्तं समभ्यर्च्य वस्त्राभरणमाल्यकैः ७१
भस्म दद्याद्बुदा मन्त्री देवीसुतसमायुतम्
दर्पणं दर्शयेत्पश्चान्नैवेद्यं पायसं पृथक् ७२
दद्याद्वै सोपदंशं तु बहुभिर्गुलखण्डकैः
घृतदधिसमायुक्तं पानीयं पूर्ववद्दहेत् ७३
अपनीय च निर्माल्यं ताम्बूलं दापयेच्छुचिः
उत्सवं कारयेदन्ते यावत्सप्तदिनान्तकम् ७४
एकाहमपि कुर्वीत तीर्थस्नानसमन्वितम्
यागोपकरणद्रव्यमाचार्याय प्रदापयेत् ७५
यस्मिन्राष्ट्रे कृतं ह्येवं तद्राजा जयमाप्नुयात्
पुत्रपौत्राश्च वर्धन्ते धनधान्यविवर्धनम् ७६
सहितस्थापनं प्रोक्तं वृषारूढमतः परम् ७७

इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे सोमास्कन्दसहितप्रतिष्ठाविधिपटलः षट्त्रिंशत्तमः

## सप्तत्रिंशत्तमः पटलः

## वृषारूढस्थापनम्

अतः परं प्रवक्ष्यामि वृषवाहनमूर्तिनः
स्थापनं शृणु हविर्भुक् भोगमोक्षफलप्रदम् १
उत्तरायणकाले तु प्रतिष्ठां सम्यगाचरेत्
पूषाश्वयुक्तथा तिष्ये रोहिण्यां सौम्यमैत्रयोः २
स्वातौ त्रिरुत्तरादित्यमघासु स्थापनं कुरु
बृहस्पतिर्भार्गवः सौम्यः सोमवारस्तु शोभनाः ३
एषां हि दर्शनं श्रेष्ठं विना सोमस्य दर्शनम्
षण्डानि गुलिका क्रूरनक्षत्राणि विषं त्यजेत् ४
शुक्रस्यास्तमनं नेष्टं गुरोरस्तमनं तथा

प्रतिष्ठादिदिनात्पूर्वं पञ्चाहे सप्तमेऽपि वा ५
अङ्कुराण्यर्पयेद्रात्रौ शास्त्रदृष्टेन कर्मणा
रत्नन्यासं ततः कुर्यान्मण्डपे समलङ्कृते ६
स्थण्डिलं कारयित्वा तु तन्मध्ये प्रतिमां न्यसेत्
पूजयित्वा यथान्यायं ततो रत्नानि निक्षिपेत् ७
पद्मे वा भद्रपीठे वा न्यसेदैन्द्रादिके दिशि
इन्द्रनीलं न्यसेदैन्द्रे वैडूर्यं वह्निगोचरे ८
याम्ये मरकतं प्रोक्तं स्फटिकं नैर्ऋते न्यसेत्
वारुण्यां मौक्तिकं प्रोक्तं प्रवालमनिले न्यसेत् ९
पुष्परागं तु सौम्यायामैशान्यां चन्द्रकान्तकम्
माणिक्यं मध्यमे चैव न्यसेद्दिगीशमन्त्रकैः १०
ब्रह्मजज्ञानमन्त्रेण ब्रह्मस्थाने तु विन्यसेत्
एवमेव न्यसेद्देव्या वृषभस्य विना बुधः ११
अक्षिमोक्षं प्रकर्तव्यं नेत्रयुग्मयुते दिने
मण्डपेऽलङ्कृते कुर्यात्स्थण्डिलं शालितण्डुलैः १२
तिलदर्भैः परिस्तीर्य पूज्य दिग्देवताः पुनः
तन्मध्ये स्थापयेद्देवमुमावृषसमन्वितम् १३
अभितः कलशानष्टौ विन्यसेद्वसुदेवताः
सकूर्चान्सापिधानांश्च सवस्त्रान्वारिपूरितान् १४
गन्धादिना समभ्यर्च्य वस्वादिमन्त्रमुच्चरन्
पक्ष्मरेखां लिखेत्पूर्वं हेमसूच्याभिमन्त्रितः १५
अक्षिमण्डलमालिख्य ज्योतिर्मण्डलमालिखेत्
जाम्बूनदनखैः प्रोतैः कुर्यान्नेत्रमुदाहरन् १६
मधुना तर्प्य नेत्राणि मधुवातेति मन्त्रतः
ताम्रपात्रे मधु वीक्ष्य मधुवातेति मन्त्रतः १७
कांस्यपात्रे घृतं दृष्ट्वा हृदयमन्त्रमुच्चरन्
गौर्धेनुभव्यमन्त्रेण सवत्सां गां प्रदर्शयेत् १८
दर्शयेद्धान्यराशिं च तत्तद्द्रोणेन सञ्चितम्
ब्राह्मणान्दर्शयेत्पश्चाद्ब्रह्मजज्ञानमन्त्रतः १९

प्रच्छन्नपटमावर्ज्य जनसङ्घान्प्रदर्शयेत्
पुण्याहं वाचयेदन्ते स्वस्तिसूक्तसमन्वितम् २०
शिल्पिनं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः
अस्त्रमन्त्रं समुच्चार्य शिल्पिनं हि विसर्जयेत् २१
स्नानासनं समारोप्य देवं देवीं वृषं क्रमात्
स्नापयेत्पञ्चगव्येन पवमानं समुच्चरन् २२
मृदम्भसा तु संस्नाप्य हृदयमन्त्रमुच्चरन्
शुद्धोदकेन संस्नाप्य शुद्धैरुक्थेति मन्त्रतः २३
कौतुकं बन्धयेद्धीमान्देवं देवीं वृषं तथा
वृषस्य दक्षिणे शृङ्गे कुर्यात्कौतुकबन्धनम् २४
वस्त्रैराभरणैर्माल्यैर्भूषयेत्तु विशेषतः
ग्रामप्रदक्षिणं कुर्याच्छङ्खभेरीरवैः सह २५
सर्वातोद्यसमायुक्तं वितानध्वजसंकुलम्
धूपदीपसमायुक्तं शनैः कुर्यात्प्रदक्षिणम् २६
जलमध्ये प्रपां कृत्वा वितानध्वजसंयुतम्
चतुष्पादीं न्यसेन्मध्ये कण्ठदघ्ने जले तथा २७
प्रतिमाशुद्धिं कुर्वीत पूज्य गन्धादिना बुधः
जाम्बूनदमयं कूर्चं देवस्य शिरसि न्यसेत् २८
वस्त्रेण वेष्टयेद्देवं देवीं च वृषभं विना
प्राक्शिरस्कं हृदा धीमान्शाययेज्जलमध्यमे २९
त्रिरात्रं वा द्विरात्रं वा एकरात्रमथापि वा
प्रासादस्याग्रतः कुर्यान्मण्डपं चतुरश्रकम् ३०
द्वादशं दशहस्तं वा एकादशकरं तु वा
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ३१
वितानध्वजसंछन्नं मुक्तादामैर्विभूषितम्
फलपल्लवसंयुक्तं दर्भमालासमावृतम् ३२
मण्डपं तु त्रिधा भज्य मध्यभागे तु वेदिकाम्
रत्निमात्रसमुत्सेधां दर्पणोदरसंनिभाम् ३३
कुण्डानि परितः कुर्यान्मानुषे तु पदे बुधः

पूर्वे तु चतुरश्रं स्याद्याम्यायां धनुराकृति ३४
वर्तुलं वारुणे भागे पद्मकुण्डं तथोत्तरे
अग्नौ निर्ऋतिवायव्ये ऐशान्यां तु भगाकृति ३५
चतुरश्रस्य पूर्वे तु चतुरश्रं प्रधानकम्
हस्तमात्रप्रविस्तारं तद्वत्खातं त्रिमेखलम् ३६
चतुस्त्रिद्व्यङ्गुलोत्सेधं विस्तारं तावदेव तु
नाभियोनिसमायुक्तं योनौ योनिं न कारयेत् ३७
द्विगुणं पीठतारं तु स्नानश्वभ्रस्य विस्तरम्
दक्षिणोत्तरमायामं विस्तारद्विगुणं भवेत् ३८
उत्तरे जलमार्गं स्यादवटेन समन्वितम्
मेखलात्रयसंयुक्तमेकैकं तु द्वयाङ्गुलम् ३९
गोमयालेपनं कृत्वा मण्डपं तु समन्ततः
पर्यग्निकरणं कृत्वा प्रोक्षयेत्पुरुषेण तु ४०
स्थण्डिलं कारयेद्वेद्यामष्टद्रोणैश्च शालिभिः
तदर्धैस्तण्डुलैर्भूष्य तिललाजसमन्वितम् ४१
पञ्चविंशत्पदं कृत्वा मध्ये नवपदं बुधः
शयनं कल्पयेत्तत्र चर्मजाद्यैरनुक्रमात् ४२
चर्मजं रोमजं चैव मुण्डजं चाण्डजं तथा
उपरिस्तरणेनैव नवशक्तिसमन्वितम् ४३
आस्तरेच्छुद्धवस्त्रैस्तु पूज्य गन्धादिना बुधः
रक्तवस्त्रेण संवेष्ट्य देवं देवीं वृषं क्रमात् ४४
पीठं पादप्रदेशे तु न्यस्त्वा पूज्य यथाविधि
ततः शिरःप्रदेशे तु शिवकुम्भं च वर्धनीम् ४५
वृषकुम्भं च संस्थाप्य तत्तद्धृदयमन्त्रतः
शिवकुम्भं न्यसेत्पूर्वं सवस्त्रं सापिधानकम् ४६
सकूर्चं रत्नसंयुक्तं द्रोणतोयप्रपूरितम्
तस्मिन्नावाहयेद्देवमेकवक्त्रं चतुर्भुजम् ४७
जटामकुटसंयुक्तं कृष्णापरशुधारिणम्
तरुणादित्यसंकाशं नेत्रत्रयविभूषितम् ४८

दिव्याम्बरधरं देवं दिव्यगन्धानुलेपनम्
सर्वलक्षणसंयुक्तं सर्वाभरणभूषितम् ४९
शिवकुम्भस्य मध्ये तु ध्यायेत्तं परमेश्वरम्
शिवमन्त्रं न्यसेत्कुम्भे पञ्चाङ्गेन समन्वितम् ५०
वर्धन्यां तु न्यसेद्देवीं दुकूलवसनान्विताम्
चारुपीनोन्नतकुचां चारुभ्रूचारुलोचनाम् ५१
सकूर्चां सापिधानां च सवस्त्रां हेमसंयुताम्
गौरीबीजसमायुक्तां वर्धन्यां विन्यसेत्क्रमात् ५२
दक्षिणे वृषकुम्भं तु विन्यसेत्तु विचक्षणः
सकूर्चं सापिधानं च वस्त्रहेमसमायुतम् ५३
सप्तवर्गाच्चतुर्थं तु तद्वर्गात्तद्द्वितीयकम्
चतुर्थस्वरसंयुक्तं बिन्दुनादसमायुतम् ५४
वृषमन्त्रमिति ज्ञेयं वृषकुम्भे तु विन्यसेत्
मूर्तिकुम्भान्तु वर्धन्यां संयुतांश्च क्रमात्ततः ५५
सकूर्चान्सापिधानांश्च स्ववस्त्रान्सहिरण्यकान्
द्रोणार्धतोयसंपूर्णानष्टविद्येश्वरात्मिकान् ५६
वामादिशक्तिसंयुक्तान्वर्धन्यां च क्रमान्न्यसेत्
इन्द्रादीशानपर्यन्तं रुद्रान्कुम्भेषु कल्पयेत् ५७
सर्वस्मिन्नन्तराले तु वर्धन्यष्टौ तु विन्यसेत्
गन्धपुष्पादिना पूज्य तत्तन्मन्त्रमनुस्मरन् ५८
मुकुलीं पद्ममुद्रां च सुरभिं च प्रदर्शयेत्
दिशास्वध्ययनं कुर्युश्चत्वारो वेदपारगाः ५९
एवं कृत्वा विशेषेण ततो होमं समाचरेत्
शिवाग्निं जनयेत्पूर्वं दिशाहोमं ततः कुरु ६०
शिवाग्नौ तु शिवः प्रोक्तो विद्येश्वरसमन्वितः
भवश्च पूर्वतो मूर्तिर्दक्षिणे शर्व एव च ६१
पश्चिमे पशुपतिश्चैव सौम्यायामुग्र एव च
गौरी दुर्गा तथा लक्ष्मीर्भूमिरग्न्यादिकोणके ६२
शोधनं क्षालनं चैव शोषणं पाचनं तथा

समिदाज्यचरुं चैव लाजापूपाश्च सर्षपाः ६३
तिलमाषयवान्क्षीरं होमकर्मणि योजयेत्
पूर्वभागे पलाशं स्याद्वह्निभागे शमी भवेत् ६४
औदुम्बरं तु याम्यायां खादिरं नैर्ऋते दिशि
अश्वत्थं वारुणे भागे प्लक्षं वै वायुगोचरे ६५
न्यग्रोधं सौम्यदिग्भागे बिल्वमीशानगोचरे
यस्मिन्राष्ट्रे कृतं ह्येवं राजा विजयमाप्नुयात् ६६
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
वृषारूढमिति प्रोक्तं पुरारिस्थापनं शृणु ६७
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे वृषारूढस्थापनपटलः सप्तत्रिंशत्तमः

## अष्टत्रिंशत्तमः पटलः
## पुरारिस्थापनविधिः

अथातः संप्रवक्ष्यामि पुरारिस्थापनं परम्
परचक्रप्रशमनं सर्वारिष्टविनाशनम् १
शत्रवो नाशमायान्ति परसेनामुखे न्यसेत्
प्रतिष्ठादिदिनात्पूर्वं कारयेन्मङ्गलाङ्कुरम् २
पद्मो वा भद्रपीठे वा रत्नन्यासमथाचरेत्
माणिक्यमिन्द्रनीलं च वैडूर्यं नीलमेव च ३
शङ्खस्फटिकेन्दुकान्तं वैडूर्यं च तथैव च
पुष्परागं विशेषेण मध्यादिक्रमशो न्यसेत् ४
हृदयं मन्त्रमुच्चार्य रत्नादीन्क्रमशो न्यसेत्
गौर्याश्चैव न्यसेद्रत्नं हैमेन सह देशिकः ५
सुस्निग्धं कारयेत्पश्चादक्षिमोक्षणमारभेत्
मण्डिते मण्डपे कुर्यात्स्थण्डिलं मण्डलान्वितम् ६
स्थण्डिलं शोभितं कृत्वा तिलदर्भैः परिस्तरेत्
देव्याश्च स्थण्डिलं तद्वद्वामभागे प्रकल्पयेत् ७
पूर्वाभिमुखमास्थाप्य देवं देवीं विशेषतः
गन्धादिना समभ्यर्च्य सर्वातोद्यसमन्वितम् ८

दिशासु कुम्भं संस्थाप्य वस्त्रकूर्चसमन्वितम्
शिल्पिनं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः  ९
गन्धादिना समभ्यर्च्य प्रच्छन्नपटसंयुतम्
हेमसूचिप्रहाराभ्यां पक्ष्मरेखां समालिखेत्  १०
कृष्णमण्डलमालिख्य ज्योतिर्मण्डलमालिखेत्
हिरण्यनखयुक्ताभिरङ्गुलीभिर्विशेषतः  ११
नेत्रद्वययुते ऋक्षे नेत्रमन्त्रमनुस्मरन्
मधुवाता ऋतायेति मधुना तर्पयेत्तदा  १२
घृतमिक्षेति मन्त्रेण घृतेन परिकल्पयेत्
गौर्धेनुभव्यमन्त्रेण धेनुं पश्येत्सवत्सकाम्  १३
ब्रह्मसूक्तं समुच्चार्य ब्राह्मणान्संप्रदर्शयेत्
एवमेव क्रमाद्देव्याः कारयेद्देशिकोत्तमः  १४
प्रच्छन्नपटमावर्ज्य जनान्सर्वान्प्रदर्शयेत्
प्रतिमाशुद्धिं कुर्वीत पञ्चमृत्पञ्चगव्यकैः  १५
स्नापयेत्पञ्चगव्येन पवमानमुदीरयन्
त्वं नो अग्नेति मन्त्रेण स्वच्छतोयेन सेचयेत्  १६
वस्त्राभरणमालाभिर्देवं देवीं च भूषयेत्
रथे वा शिबिकायां वा देवं देवीं च रोपयेत्  १७
ग्रामप्रदक्षिणं कृत्वा सर्वालङ्कारसंयुतम्
नानापिञ्छध्वजैश्छत्रैः धूपदीपसमाकुलैः  १८
एवं प्रदक्षिणं कृत्वा जले चैवाधिवासयेत्
तीरे समतले स्थाप्य स्नानं कुर्याद्विधानतः  १९
सदशाहतवस्त्राभ्यां देवं देवीं च वेष्टयेत्
जलमध्ये प्रपां कृत्वा वितानध्वजशोभिताम्  २०
चतुष्पादीं न्यसेन्मध्ये कण्ठदघ्नजले ततः
प्राक्शिरस्कं हृदा मन्त्री शाययेज्जलमध्यमे  २१
त्रिरात्रं वा द्विरात्रं वा एकरात्रमथापि वा
आलयस्याग्रतः कुर्यान्मण्डपं चतुरश्रकम्  २२
द्वादशं दशहस्तं वा नवहस्तमथापि वा

चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् २३
वितानध्वजसंयुक्तं दर्भमालोपशोभितम्
तन्मध्ये वेदिकां कुर्यात् त्रिभागैकप्रमाणतः २४
रत्निमात्रसमुत्सेधां तालमात्रमथापि वा
कुण्डानि परितः कल्प्य दिक्षु चैव विदिक्षु च २५
चतुरश्रं धनुर्वृत्तं पद्माकारं च दिक्षु च
विदिक्षु योन्याकाराणि कारयेत्तु विचक्षणः २६
कुण्डं हस्तप्रविस्तारं तद्वत्खातं त्रिमेखलम्
चतुस्त्रिद्व्यङ्गुलोत्सेधं विस्तारं तावदेव तु २७
नाभियोनिसमायुक्तं निम्नोन्नतविवर्जितम्
ईशानशक्रयोर्मध्ये वृत्तं प्राधानिकं कुरु २८
गोमयालेपनं कृत्वा पञ्चचूर्णैस्तु भूषयेत्
जलादुत्तीर्य देवेशं देवीं शुद्धिं च कारयेत् २९
कौतुकं बन्धयेत्तत्र त्र्यम्बकेनैव मन्त्रतः
स्थण्डिलं कारयेद्वेद्यामष्टद्रोणैश्च शालिभिः ३०
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि
चर्मजाद्यैश्च विधिवच्छयनं परिकल्पयेत् ३१
नवशक्तीः कल्पयेत्तन्मध्ये चैव मनोन्मनीम्
पूजयित्वा यथान्यायं पुरारिं तत्र शाययेत् ३२
प्राक्शिरस्कं न्यसेद्धीमानुदङ्मुखं तथा सतीम्
अर्चयित्वा हृदा मन्त्री रक्तवस्त्रेण वेष्टयेत् ३३
ऐशान्यां तु न्यसेद्धीमान् शिवकुम्भं च वर्धनीम्
रत्नहेमसमायुक्तौ सकूर्चौ सपिधानकौ ३४
सवस्त्रवारिसंपूर्णौ शिवोमाबीजसंयुतौ
वर्धनीकुम्भमध्ये तु तत्तन्मूर्तिं च भावयेत् ३५
देवस्य परितः स्थाप्य घटान्विद्येश्वरात्मकान्
ससूत्रान्सापिधानांश्च सवस्त्रान्वारिपूरितान् ३६
सकूर्चान्पल्लवोपेतान्मूर्तिबीजसमन्वितान्
कुम्भानामन्तराले तु वर्धन्यष्टौ तु विन्यसेत् ३७

वामादिशक्तयश्चाष्टौ वर्धनीषु प्रभावयेत्
पूजयित्वा यथान्यायं नैवेद्यान्तं विशेषतः ३८
अष्टमङ्गलरूपाणि वेदिकां परितो न्यसेत्
पूजयित्वा यथान्यायं ततो होमं समाचरेत् ३९
शोधनं क्षालनं चैव शोषणं पाचनं तथा
तत्तत्संस्कारं कुण्डानां पूर्वोक्तविधिना कुरु ४०
पलाशं वैकङ्कताशोकं न्यग्रोधं खादिरं शमी
बिल्वोदुम्बरमायूरसमिधः संप्रकीर्तिताः ४१
द्वादशाङ्गुलमायामं कनिष्ठाङ्गुलिनाहकम्
षट्त्रिंशदङ्गुलायामं तिस्रः परिधयः स्मृताः ४२
द्वावूर्ध्वसमिधौ तत्र अनुयाज्येकमुच्यते
पञ्चदशैव जुहुयादिध्ममेतत्प्रकीर्तितम् ४३
समिदाज्यं चरुं चैव लाजं गुलं यवं तिलम्
मधुगोक्षीरसर्षपमुद्गं च जुहुयात्क्रमात् ४४
शतमर्धं तदर्धं वा प्रत्येकं जुहुयात्क्रमात्
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरः शिव एव च ४५
कुण्डानामधिदेवाः स्युर्विदिक्षु शृणु चानल
उमा दुर्गा मही लक्ष्मीः कोणकुण्डाधिदेवताः ४६
उल्लेखनादि यत्सर्वमग्निकार्योक्तमार्गतः
पुरुषाघोरसद्येन वामेन जुहुयाद्दिशि ४७
गौरी मिमाय मन्त्रेण हुत्वाग्नेयादिकोणके
समिधो जुहुयादेवमाज्यादीनि ततः शृणु ४८
त्र्यम्बकेन घृतं हुत्वा गौरीगायत्रीमन्त्रतः
शिरसा जुहुयाल्लाजं देवस्य त्वेति कोणके ४९
गुलं च कद्रुद्रायेति तिलं यत्तोयमित्यथ
मधु वै मधुवातेति क्षीरमाप्यायमन्त्रतः ५०
सर्षपं कवचेनैव मुद्गमस्त्रेण होमयेत्
शिवाङ्गैश्चैव विद्याङ्गैर्हुत्वा हुत्व स्पृशेत्पुनः ५१
दिशास्वध्ययनं कुर्युश्चत्वारो वेदपारगाः

एवं जागरणं रात्रौ प्रभाते स्थापनं कुरु ५२
आचार्यो मूर्तिपैः सार्धं स्नानं कृत्वा विशेषतः
अङ्गन्यासं करन्यासं पूर्वोक्तविधिना कुरु ५३
रुद्रकुम्भादिवर्धन्यां चाग्नौ चैव प्रपूजयेत्
जयादिरभ्याधानं च स्विष्टान्तं जुहुयात्ततः ५४
आचार्यं पूजयेत्तत्र मूर्तिपानथ पूजयेत्
उत्थाप्य शयनाद्देवं सतीदेवीं हृदा बुधः ५५
आसनं कल्पयेद्धीमान्स्नानश्वभ्रे पृथक्पृथक्
आसनोपरि विन्यस्य देवं देवीं विशेषतः ५६
शिवकुम्भं समुत्थाप्य वर्धन्या सह देशिकः
प्रतिमाग्रे पुनः स्थाप्य शिवकुम्भं च वर्धनीम् ५७
अष्टत्रिंशत्कला न्यास्त्वा ब्रह्माङ्गं च पुनर्न्यसेत्
गौरीकलास्तु वर्णानि गौरीदेहे तु विन्यसेत् ५८
घृतं शिरोऽर्पणं कुर्यात्पूर्वोक्तविधिना सह
सुमुहूर्ते सुलग्ने च मन्त्रन्यासं समाचरेत् ५९
शिवकुम्भात्समादाय शिवबीजं हृदि न्यसेत्
शिवाङ्गानि ततो न्यस्त्वा पूजयित्वा यथाविधि ६०
वर्धन्या बीजमादाय गौर्याश्च हृदि विन्यसेत्
मूर्ध्नि कण्ठे च योनौ च न्यस्त्वाङ्गानि ततो न्यसेत् ६१
मूर्ध्नि कुम्भोदकैर्देवं स्नाप्योमां वर्धनीजलैः
स्नपनं कारयेदन्ते पूर्वोक्तविधिना ततः ६२
मण्डपे विन्यसेद्देवं देवीं चैव तु देशिकः
वस्त्राभरणमालाभिरर्चनोक्तं समाचरेत् ६३
एवं गौरीं समभ्यर्च्य नैवेद्यं पायसं ददेत्
पुनराचमनं दद्यान्निर्माल्यं तु विसर्जयेत् ६४
ताम्बूलं दापयेत्ताभ्यां हृदयेन तु मन्त्रतः
विवाहकार्यं यत्सर्वं पूर्वोक्तविधिना कुरु ६५
उत्सवं कारयेदन्ते सप्ताहं त्र्यहमेव वा
एवं यः कुरुते मर्त्यश्चान्ते शिवपदं व्रजेत् ६६

पुरारिस्थापनं प्रोक्तं नृत्तरूपस्य वै शृणु
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे पुरारिस्थापनपटलः अष्टत्रिंशत्तमः

## एकोनचत्वारिंशत्तमः पटलः
## नृत्तमूर्तिस्थापनविधिः

अतः परं प्रवक्ष्यामि स्थापनं नृत्तमूर्तिनः
क्षेमदं जयदं लोके राजराष्ट्रविवर्धनम् १
उत्तरायणकाले तु पूर्वपक्षे शुभे दिने
सुवारे लग्नसंपन्ने प्रतिष्ठां सम्यगाचरेत् २
प्रतिष्ठादिनपूर्वे तु सप्ताहे वाथ पञ्चमे
अङ्कुराण्यर्पयेद्धीमान्पूर्वोक्तविधिना सह ३
रत्नन्यासं प्रकर्तव्यं देवदेव्योर्विशेषतः
पिण्डिकां स्थापयेन्मध्ये मण्डपे समलङ्कृते ४
देवीपीठं न्यसेत्पश्चात्कृत्वा चैव दिगर्चनम्
पद्मे वा भद्रपीठे वा नवकोष्ठानि कल्पयेत् ५
इन्द्रनीलं न्यसेदैन्द्रे वैडूर्यं वह्निगोचरे
वैवस्वते महानीलं मुक्ता निर्ऋतिगोचरे ६
वारुणे स्फटिकं न्यस्त्वा वायव्यां पुष्परागकम्
प्रवालं सौम्यदेशे तु वज्रमीशानगोचरे ७
माणिक्यं मध्यमे न्यस्त्वा नवबीजमुदाहरन्
प्रतिमां तत्र विन्यस्य सुस्निग्धं कारयेत्ततः ८
एवं क्रमान्न्यसेद्देव्याः सुस्निग्धं कारयेत्ततः
भित्तौ चित्रपटे चैव रत्नन्यासं न कारयेत् ९
ततोऽक्षिमोक्षणं कुर्यान्नेत्रयुग्मयुते दिने
स्थण्डिलद्वितयं कुर्यान्मण्डपे समलङ्कृते १०
दक्षिणे स्थण्डिले देवं पूर्वाभिमुखमानयेत्
उत्तरे विन्यसेद्देवीं पूर्वाभिमुखमार्गतः ११
अभितः कलशानष्टौ लोकपालाधिदैवतान्
सकूर्चान्सापिधानांश्च सवस्त्रान्वारिपूरितान् १२

एवं क्रमान्न्यसेद्देव्यामष्टशक्तिसमन्वितम्
देवस्याभिमुखं कुर्यादक्षिहोमं विशेषतः १३
सूर्यसोमाग्निमन्त्रैश्च नेत्रमन्त्रशतं हुनेत्
सर्वातोद्यसमायुक्तं नृत्तगेयसमन्वितम् १४
शुभलग्नसमायुक्तं नेत्रमोक्षणमारभेत्
हेमसूचिप्रहाराभ्यां पक्ष्मरेखां समालिखेत् १५
असितं मण्डलं लिख्य दृष्टिमण्डलमालिखेत्
ज्योतिर्मण्डलमालिख्य तत्तन्नेत्रमुदाहरन् १६
तर्जन्यनामिकामध्या रविचन्द्रानला मताः
सुवर्णनखयुक्ताभिरङ्गुलीभिर्विशेषतः १७
नेत्रमन्त्रं समुच्चार्य प्रोतनेत्रत्रये बुधः
अक्षिद्वयं न्यसेद्देव्या देवीनेत्रमुदाहरन् १८
हिरण्यदूर्वया विद्वान्मध्वाज्याभ्यां तु तर्पयेत्
सौवर्णमुत्तमं पात्रं ताम्रपात्रं तु मध्यमम् १९
मृण्मयं चाधमं पात्रं त्रिधा पात्रं विधीयते
मधुवाता ऋतायेति मधुपात्रं प्रदर्शयेत् २०
घृतेन पूरितं पात्रं दर्शयेद्धृतमन्त्रतः
दर्शयेत्सप्तपात्राणि सप्तबीजयुतानि च २१
गौर्धेनुभव्यमन्त्रेण धेनुं दृष्ट्वा विशेषतः
ब्रह्मजज्ञानमन्त्रेण ब्राह्मणान्वेदपारगान् २२
एवं समाचरेद्देव्या एतन्मन्त्रमुदाहरन्
प्रच्छन्नपटमावर्ज्य जनसङ्घान्प्रदर्शयेत् २३
वाहनाख्यमपस्मारं सूर्यचन्द्रमसौ ततः
जाह्नवीं चान्यदेवांश्च कुर्यान्नयनमोक्षणम् २४
शिल्पिनं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः
अस्त्रमन्त्रं समुच्चार्य शिल्पिनं च विसर्जयेत् २५
पुण्याहं वाचयेदन्ते साक्षतं सकुशोदकम्
स्नानवेद्यां न्यसेद्देवं शुद्धिं कृत्वा विशेषतः २६
व्योमव्यापिनमुच्चार्य कुर्याद्द्रव्याभिषेचनम्

मृदम्भसा च सुस्नाप्य रुद्रसूक्तमुदाहरन् २७
शुद्धैरुक्थेति मन्त्रेण शुद्धतोयेन सेचयेत्
पार्वतीं स्नापयेदेवं पत्रतोयसमन्वितम् २८
वस्त्राभरणमालाभिर्देवदेवयौ विभूषयेत्
ग्रामप्रदक्षिणं कुर्यात्सर्वालङ्कारसंयुतम् २९
पिञ्छचामरसंयुक्तं धूपदीपसमाकुलम्
पुत्रभ्रातृकलत्रैश्च यजमानो व्रजेदनु ३०
पदे पदेऽश्वमेधस्य फलमाप्नोति मानवः
जलाधिवासनं कुर्याद्देवदेव्योर्विचक्षणः ३१
नद्यां वापि तटाके वा ह्रदे वाप्यामथापि वा
कण्ठदघ्ने जले चैव प्रपां कृत्वा पृथक्पृथक् ३२
न्यस्त्वा मध्ये चतुष्पादीमूर्ध्वच्छन्नसमन्वितम्
तीरे समतले स्थाप्य पूजयित्वा स्वनामतः ३३
वस्त्रेण वेष्टयेद्देवं देवीं कूर्चसमन्विताम्
प्राक्शिरस्कं शाययित्वा कण्ठमात्रजले स्थितम् ३४
एकरात्रं द्विरात्रं वा त्रिरात्रं वा जलोषितम्
प्रासादस्याग्रतः कुर्यान्मण्डपं चतुरश्रकम् ३५
त्रयोदशकरं तारमेकादशकरं तु वा
द्वादशं दशहस्तं वा चतुर्द्वारसमन्वितम् ३६
षोडशस्तम्भसंयुक्तं वितानोपरि शोभितम्
दर्भमालासमायुक्तं द्वारतोरणभूषितम् ३७
मण्डपस्य त्रिभागैकं वेदिकायाश्च विस्तरम्
हस्तमात्रसमुत्सेधं दर्पणोदरसंनिभम् ३८
उपवेदिस्तु कर्तव्या वेद्यधश्चाष्टमङ्गलम्
कुण्डानि परितः कुर्यान्मानुषे तु पदे क्रमात् ३९
चतुरश्रं तु पूर्वायामाग्नेय्यां तु भगाकृति
चापाश्रं दक्षिणे भागे नैर्ऋत्यामनलाश्रकम् ४०
वर्तुलं वारुणे भागे ऋत्वश्रं वायुगोचरे
पद्माभं सौम्यदेशे तु पञ्चाश्रं शाङ्करे दिशि ४१

ईशानशक्रयोर्मध्ये वृत्तं प्राधानिकं कुरु
हस्तमात्रप्रविस्तारं खातं वै हस्तमात्रकम् ४२
मेखलात्रयसंयुक्तमेकैकं तु त्रयाङ्गुलम्
नाभियोनिसमायुक्तं कुण्डं सर्वार्थसाधकम् ४३
शिवकुण्डे शिवं प्रोक्तं पूर्वादीनि प्रदक्षिणम्
अनन्तादिशिखण्ड्यन्ता अष्टकुण्डाधिदेवताः ४४
अस्योत्तरे तदग्रे वा दक्षिणे वा विशेषतः
पार्वत्याश्चाधिवासार्थं मण्डपं कारयेद्बुधः ४५
द्वादशं दशहस्तं वा नवहस्ताष्टहस्तकम्
षोडशस्तम्भसंयुक्तं चतुर्द्वारसमन्वितम् ४६
वेदिं कुर्यात्त्रिहस्तेन रत्निमात्रसमुच्छ्रयाम्
योन्याकाराणि कुण्डानि चतुर्दिक्षु च कल्पयेत् ४७
मेखलात्रयसंयुक्तमेकैकं स्यात्त्रियङ्गुलम्
खातं वै हस्तमात्रं स्याद्विस्तारं तावदेव तु ४८
उमा दुर्गा तथा लक्ष्मीः ज्येष्ठा कुण्डाधिदेवताः
दर्पणोदरसंकाशं वितानध्वजभूषितम् ४९
मुक्तादामैः समायुक्तं दर्भमालाविभूषितम्
मण्डपं समलङ्कृत्य गोमयेनोपलेपयेत् ५०
मण्डपस्योत्तरे पार्श्वे स्नानार्थं मण्डपं कुरु
मध्यमे कल्पयेच्छ्वभ्रं तत्पीठस्यानुरूपतः ५१
मेखलाद्वयसंयुक्तमेकैकं चतुरङ्गुलम्
सोमस्थाने जलमार्गं कुर्याद्वै सावटं बुधः ५२
एवमेवं क्रमाच्छ्वभ्रं कुर्याद्गौर्या विशेषतः
स्थण्डिलं कल्पयेद्विद्वान्वेदिकोपरि शालिभिः ५३
अष्टद्रोणसमायुक्तं तदर्धैस्तण्डुलैर्युतम्
लाजपुष्पतिलैर्दर्भैर्भूषयेत्तु समन्ततः ५४
शयनं कल्पयेन्मध्ये चर्मजाद्यैरनुक्रमात्
उपस्तरणसंयुक्तं शयनं परिकल्पयेत् ५५
पूजयित्वा यथान्यायं नवशक्तिसमन्वितम्

वेदिकायामितरायां गौर्याश्च परिकल्पयेत् ५६
जलादुत्तीर्य देवेशं देवीं चैव विशेषतः
वस्त्रकूर्चं विसृज्याथ पूर्ववच्छुद्धिमाचरेत् ५७
वस्त्राभरणमाल्यैश्च देवदेव्यौ च भूषयेत्
कौतुकं बन्धयेद्धीमान्तत्तद्गायत्रिमन्त्रतः ५८
आरोप्य सुमुहूर्ते तु शयने शाययेच्छिवम्
प्राक्शिरस्कं न्यसेद्देवमूर्ध्ववक्त्रं सपिण्डकम् ५९
पूजयित्वा यथान्यायं हृदयं मन्त्रमुच्चरन्
द्विगुणीकृत्य वस्त्रेण रक्तेन परिवेष्टयेत् ६०
ईशानशक्रयोर्मध्ये शिवकुम्भं न्यसेद्धृदा
ससूत्रं सापिधानं च सवस्त्रं वारिपूरितम् ६१
सरत्नकूर्चसंयुक्तं शिवमन्त्रसमन्वितम्
आद्यं द्वितीयवर्गे स्यादन्त्यवर्गाद्द्वितीयकम् ६२
षष्ठवर्गान्तिमं बीजं मायानलसमन्वितम्
बिन्दुनादसमायुक्तं शिवबीजमिति स्मृतम् ६३
ध्यात्वा सदाशिवं रूपं सर्वलक्षणसंयुतम्
पूजयित्वा हृदा मन्त्री वर्धनीं वामतो न्यसेत् ६४
सकूर्चान्सापिधानांश्च सवस्त्रान्वारिपूरितान्
टङ्कशूलसमायुक्तान्हेमरूपमयान्पृथक् ६५
आर्द्रपल्लवसंछन्नान्स्वस्वबीजसमायुतान्
पूजयित्वा यथान्यायं द्वारतोरणसंयुतम् ६६
प्राक्शिरस्कां न्यसेद्देवीं शन्नो देवीति मन्त्रतः
दक्षिणांशे हृदा न्यस्य गौरीकुम्भं विशेषतः ६७
सकूर्चं सापिधानं च सवस्त्रं जलपूरितम्
सहेमबीजसंयुक्तं पल्लवैरुपशोभितम् ६८
गौरीबीजं न्यसेन्मध्ये गौरीरूपं विचिन्तयेत्
परितोऽष्टघटान्यस्त्वा चाष्टशक्तिसमन्वितान् ६९
सकूर्चान्पल्लवोपेतान्सहेमान्वारिपूरितान्
सवस्त्रान्सापिधानांश्च स्थापयित्वा यथाविधि ७०

गन्धादिना समभ्यर्च्य नैवेद्यान्तं स्वनामतः
मुकुलीं पद्ममुद्रां च बीजमुद्रां च दर्शयेत्  ७१
दिशास्वध्ययनं कुर्युरष्टौ वै वेदपारगाः
कोणे मन्त्रजपं कुर्युः ततो होमं समारभेत्  ७२
पलाशखादिराश्वत्थवटाः पूर्वादितः क्रमात्
शम्यर्कोदुम्बरप्लक्षा विदिक्षु परितः क्रमात्  ७३
पलाशं तु प्रधानं स्याच्छिवस्थापनकर्मणि
पलशोदुम्बरप्लक्षं देव्यग्नौ तु मयूरकम्  ७४
समिदाज्यचरुं लाजान्सक्तुमाषतिलानपि
सिद्धार्थं च यवं शालिः होमद्रव्याः प्रकीर्तिताः  ७५
शोधनं क्षालनं चैव शोषणं पाचनं तथा
उल्लेखनोक्षणं पूजा वह्निस्थापनमेव च  ७६
कुशास्तरणं पात्राणां प्रोक्षणीसादनं तथा
ब्रह्मासनं प्रणीतां च आज्यसंस्कारमेव च  ७७
स्रुक्सादनं स्रुवश्चैव परिधिस्थापनं तथा
ऊर्ध्वप्रवेशमाघारमाज्यभागमुखं क्रमात्  ७८
अग्निकार्यविधानोक्तं कारयेद्देशिकोत्तमः
शिवाग्निं जनयेत्पूर्वं पञ्चसंस्कारसंयुतम्  ७९
प्रणीताग्निं समादाय मूर्तिकुण्डेषु निक्षिपेत्
सद्योजातेन पूर्वायां समिद्धोमं समाचरेत्  ८०
आग्नेय्यां हृदयेनैव याम्यायां गुह्यमन्त्रतः
नैर्ऋत्यां शिखया हुत्वा वारुण्यां वर्ममन्त्रतः  ८१
वायव्यां कवचेनैव सौम्यायां पुरुषेण तु
ऐशान्यां शिरसा हुत्वा पञ्चमेन प्रधानके  ८२
आज्यं हुत्वा हृदा मन्त्री शिरसा च चरुं हुनेत्
लाजं हुत्वा तु शिखया तच्चूर्णं कवचेन तु  ८३
माषं वक्त्रेण जुहुयान्नेत्रेण तु तिलाहुतिः
सद्येन सर्षपं हुत्वा यवं वामेन होमयेत्  ८४
अघोरेण हुनेच्छालीन्प्रत्येकं व्याहृतिं ततः

शतमर्धं तदर्धं वा जुहुयात्क्रमशः पुनः ८५
उपाहुतिं ततः कुर्यात्पूर्वसंख्याक्रमेण तु
घृतं मिमिक्ष इत्याज्यं देवस्य त्वा चरुं हुनेत् ८६
विरूपाक्षद्वयेनैव लाजं सक्तुं च होमयेत्
कद्रुद्रायेति वै माषं यवं यत्ते यमेति च ८७
यो रुद्र सर्षपं हुत्वा आ वो राजा यवस्य तु
त्र्यम्बकेन हुनेच्छालिं द्रव्यान्ते व्याहृतिं हुनेत् ८८
शिवाधिवासनं ह्येवं शृणु गौर्यधिवासनम्
समिदाज्यचरुं लाजं तिलसर्षपमाषकाः ८९
होमद्रव्याणि सप्तैते जुहुयात्तु विशेषतः
गौरीमिमाय मन्त्रेण समिद्धोमं समाचरेत् ९०
गौरीगायत्रिमन्त्रेण घृतं हुत्वा विचक्षणः
देवस्य त्वा चरुं हुत्वा गौरीबीजेन लाजकम् ९१
यत्ते यमं तिलं हुत्वा सर्षपं कवचेन तु
माषं हुत्वा वृतं ते व्य शतमर्धार्धमेव वा ९२
निश्येवं जागरं कुर्यात्प्रभाते स्थापनं भवेत्
आचार्यो मूर्तिपैः सार्धं स्नानं कृत्वा विशेषतः ९३
अङ्गन्यासकरन्यासौ पूर्वोक्तविधिना कुरु
शयनाद्देवमुत्थाप्य प्रागानन उपस्थितः ९४
गन्धादिना समभ्यर्च्य हृदयं मन्त्रमुच्चरन्
गौरीमेवं समुत्थाप्य पूजयित्वा विशेषतः ९५
जयादिरभ्याधानं च राष्ट्रभृच्च हुनेत्क्रमात्
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ९६
पञ्चाङ्गभूषणैर्युक्तां दक्षिणां दापयेत्ततः
दशनिष्कोऽधमो ज्ञेयो द्विगुणो मध्यमो भवेत् ९७
उत्तमं त्रिगुणं प्रोक्तमाचार्यस्य तु दक्षिणा
अष्टभागैकभागं तु मूर्तिपानां च दक्षिणा ९८
द्विगुणं वास्तुहोमस्य दैवज्ञस्य तथा भवेत्
परिचाराणां सर्वेषां यथाश्रद्धं तु दक्षिणा ९९

गौर्याश्च स्थापकायैव एतदर्धं प्रदापयेत्
आसनं कल्पयेद्धीमान्स्नानश्वभ्रद्वयोरपि १००
अनन्तं पद्मं विमलं कल्पयेद्विधिना सह
तत्तन्मन्त्रमनुस्मृत्य पूजयित्वा यथाविधि १०१
सर्वातोद्यसमायुक्तं नृत्तगेयसमाकुलम्
ब्रह्मघोषसमायुक्तं स्वस्तिसूक्तसमन्वितम् १०२
प्रदक्षिणं तथा कृत्वा प्रासादं गुरुणा सह
पुत्रभ्रातृकलत्रैश्च यजमानो व्रजेदनु १०३
स्नानवेद्यां न्यसेद्देवं देवीं चैव विशेषतः
गन्धपुष्पादिना पूज्य कलाङ्गानि ततो भवेत् १०४
गौर्याश्चाङ्गकलाश्चैव गौरीदेहे तु विन्यसेत्
घृतं शिरोर्पणं कुर्याद्धेमदूर्वाङ्कुराक्षतैः १०५
हृन्मन्त्रं तु समुच्चार्य मूर्ध्नि बह्नोश्च पादयोः
शिवकुम्भं समादाय शिरसा धारयेद्गुरुः १०६
तत्तन्मूर्तिधराश्चैव तत्तत्कुम्भं समुद्धरेत्
स्थापयेत्प्रतिमाग्रे तु तत्तन्मन्त्रं समुच्चरन् १०७
मुहूर्तं निरीक्ष्य दैवज्ञो गुरवे संनिवेदयेत्
शुभे मुहूर्ते संप्राप्ते प्रतिष्ठाकर्म कारयेत् १०८
कुम्भाद्बीजं समादाय प्रतिमस्य हृदि न्यसेत्
हृदयं हृदये न्यस्य शिरः शिरसि विन्यसेत् १०९
शिखायां तु शिखां न्यस्य कवचं स्तनमध्यतः
अस्त्रं हस्तप्रदेशेषु नेत्रं नेत्रेषु विन्यसेत् ११०
वर्धनीबीजमादाय पिण्डिकायां तु विन्यसेत्
विद्येशानाभितः स्थाप्य तत्तत्कुम्भाद्विशेषतः १११
तेनोदकेन संस्नाप्य पञ्चब्रह्ममुदीरयन्
व्योमव्यापिनमुच्चार्य गन्धतोयेन स्नापयेत् ११२
स्नपनं कारयेदन्ते यथावित्तानुसारतः
गौरीकुम्भं समादाय देव्यग्रे तु विनिक्षिपेत् ११३
सुमुहूर्ते सुलग्ने तु मन्त्रन्यासं समारभेत्

उमाकुम्भादुमाबीजमादाय हृदि विन्यसेत्  ११४
मूर्ध्नि कण्ठे च योनौ गौरीबीजं सुविन्यसेत्
शक्तयः परितः स्थाप्य तत्तत्कुम्भाद्विशेषतः  ११५
तेनोदकेन संस्नाप्य गौरीबीजमुदाहरन्
स्नपनं कारयेदन्ते पूर्वोक्तविधिना सह  ११६
अन्यतो जाह्नवीबीजं तथापस्मारसोमयोः
तत्तद्धृदि सुविन्यस्य पूजयेत्तु स्वनामतः ११७
सुशुद्धे मण्डपे स्थाप्य देवदेव्यौ विशेषतः
वस्त्राभरणमालाभिर्भूषयेत्तु यथाविधि  ११८
अर्चनोक्तं समभ्यर्च्य नैवेद्यं पायसं ददेत्
हृदा चाचमनं दत्वा निर्माल्यं तु विसर्जयेत्  ११९
ताम्बूलं दापयेद्धीमान् पञ्चगन्धसमन्वितम्
उदकं दापयेद्गौर्या गौरीबीजमुदाहरन्  १२०
पुनराचमनं दद्यात्ताम्बूलं तु निवेदयेत्
कल्याणं कारयेत्पश्चात्पूर्वोक्तविधिना सह  १२१
उत्सवं कारयेदन्ते सप्ताहं विधिना सह
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्  १२२
इहैव धनवान्धीमान्परलोके शिवं व्रजेत्
प्रतिष्ठा नृत्तमूर्तेश्च प्रोक्ता चेह विशेषतः  १२३
चन्द्रशेखरमूर्तेस्तु स्थापनं शृणु चानल
इति श्रीदीप्तशास्त्रे प्रतिष्ठातन्त्रे नृत्तरूपस्थापनपटलः
एकोनचत्वारिंशत्तमः

चत्वारिंशत्तमः पटलः
चन्द्रशेखरस्थापनविधिः
अतः परं प्रवक्ष्यामि चन्द्रशेखरमूर्तिनः
स्थापनं भुक्तिदं प्रोक्तं राजराष्ट्रविवर्धनम्  १
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने
स्थापयेद्देशिको धीमान्शुभवारे तिथौ तथा  २

मण्डपे मण्डिते रम्ये स्थण्डिलं शालिभिः कुरु
तण्डुलैः शोभितं कृत्वा दिग्देवानभितो यजेत् ३
तन्मध्ये तु न्यसेत्पीठं नवकोष्ठसमन्वितम्
सर्वातोद्यसमायुक्तं रत्नानि क्रमशो न्यसेत् ४
वज्रं मरकतं नीलं वैडूर्यं च प्रवालकम्
स्फटिकं पुष्परागं च मौक्तिकं तु विशेषतः ५
महादिक्षु न्यसेदेतान्माणिक्यं मध्यमे न्यसेत्
ततो देवं समावेश्य स्निग्धं कृत्वा यथाविधि ६
गौरीपीठे न्यसेद्देवीं स्निग्धं कृत्वा विशेषतः
शुद्धिं कृत्वा यथान्यायं कुर्यान्नयनमोक्षणम् ७
प्रच्छन्नपटसंयुक्ते मण्डपे समलङ्कृते
शालिभिः स्थण्डिलं कुर्यात्तण्डुलैः समलङ्कृतम् ८
तस्य मध्ये न्यसेद्देवं प्राङ्मुखं हृदयेन तु
तस्यैव वामतो भागे स्थाप्य गौरीं विचक्षणः ९
परितोऽष्टौ घटान्न्यस्त्वा सवस्त्रान्वारिपूरितान्
लोकपालाधिदैवत्यान्पूज्य गन्धादिना बुधः १०
सर्वातोद्यसमायुक्तं हेमसूच्याभिलेखयेत्
पक्ष्मरेखां पुरा कृत्वा ततो वै कृष्णमण्डलम् ११
ज्योतिर्मण्डलमालिख्य नेत्रमन्त्रमुदाहरन्
तर्जन्यनामिकामध्यैः प्रोतहेमनखेन तु १२
मधुना तर्पयित्वा तु नेत्रमन्त्रमुदाहरन्
हृदयेन घृतं तर्प्य गौर्याप्येवं समाचरेत् १३
मधुक्षीरघृतं चैव दर्शयेद्बीजमुख्यया
गौर्धेनुभव्यमन्त्रेण दर्शयेद्धेनुमुत्तमाम् १४
ब्रह्मजज्ञानमन्त्रेण ब्राह्मणान्संप्रदर्शयेत्
प्रच्छन्नपटमावर्ज्यं जनान्सर्वांश्च दर्शयेत् १५
शुद्धिं कृत्वा ततो देवं देवीं पञ्चमृदम्भसा
व्योमव्यापि समुच्चार्य पञ्चगव्येन सेचयेत् १६
शुद्धैरुक्थेति मन्त्रेण शुद्धतोयेन सेचयेत्

अभिषिच्य ततो देवीं गौरीगायत्रिमन्त्रतः १७
वस्त्राभरणमालाभिर्देवं देवीं च भूषयेत्
ग्रामप्रदक्षिणं कुर्यात्तूर्यघोषसमन्वितम् १८
पिञ्छचामरसंयुक्तं धूपदीपसमाकुलम्
जलाधिवासनं कुर्यान्नद्यां वाप्यामथापि वा १९
तीरे समतले स्थाप्य पूजयित्वा हृदा बुधः
आवेष्ट्याहतवस्त्रेण देवं देवीं विशेषतः २०
जलमध्ये प्रपां कृत्वा चतुष्पादसमन्विताम्
तस्य मम्ध्ये न्यसेद्देवं स्थितं वा शयितं तु वा २१
आलयस्याग्रतः कुर्यान्मण्डपं विधिपूर्वकम्
दशद्वादशहस्तं वा दर्पणोदरसन्निभम् २२
षोडशस्तम्भसंयुक्तं चतुर्द्वारविभूषितम्
अष्टमङ्गलसंयुक्तमष्टदिग्ध्वजशोभितम् २३
एकाशीतिपदं कृत्वा मध्यमे नव वेदिका
रत्निमात्रसमुत्सेधं दर्पणोदरसन्निभम् २४
परितः कल्पयेत्कुण्डं चतुरश्रं चतुर्दिशि
आग्नेयादिषु कोणेषु योन्याकारं प्रकल्पयेत् २५
प्राक्कुण्डवेदिकामध्ये कुण्डं प्राधानिकं कुरु
मेखलात्रयसंयुक्तं द्वित्रिभिश्चतुरङ्गुलैः २६
गोमयालेपनं कृत्वा पर्यग्निकरणं कुरु
आनीय देवं देवीं च तीरे समतले जलात् २७
मण्डपस्योत्तरे पार्श्वे स्नानश्वभ्रं प्रकल्पयेत्
द्विमेखलासमायुक्तं नालावटसमन्वितम् २८
श्वभ्रमध्ये न्यसेद्देवं देवीं चैव हृदा बुधः
शुद्धिं कृत्वा विशेषेण भूषयेद्भूषणार्हकैः २९
स्थण्डिलं कल्पयेद्वेद्यां शालिभिस्तण्डुलैः सह
ततो लाजैस्तिलैर्दर्भैर्भूषयित्वा समन्ततः ३०
अभ्यर्च्य हृदयेनैव शयनं कल्पयेत्तदा
अण्डजैर्मुण्डजैश्चैव रोमजैश्चर्मजैरपि ३१

उपर्युपरि संयुक्तं शयनं परिकल्पयेत्
शन्नो देवीति मन्त्रेण शाययेच्चन्द्रशेखरम् ३२
शयनं पूर्ववत्कल्प्य देवीमुत्तरतो न्यसेत्
रक्तवस्त्रेण संवेष्ट्य देवं देवीं कुशैः सह ३३
ईशानशक्रयोर्मध्ये न्यसेत्कुम्भं च वर्धनीम्
सकूर्चं सापिधानं च सवस्त्रं हेमरत्नकम् ३४
चूतपल्लवसंयुक्तं चन्दनोदकपूरितम्
कुम्भमध्ये न्यसेद्बीजं तद्रूपं भावयेद्घटे ३५
उमाबीजं च वर्धन्यां ध्यात्वा चैव मनोन्मनीम्
तत्तद्बीजं समुच्चार्य पूज्य गन्धादिना बुधः ३६
अभितः कलशानष्टावष्टविद्येश्वरात्मकान्
द्रोणार्धतोयसंपूर्णान्हेमवस्त्रसमन्वितान् ३७
सवस्त्रान्कूर्चसंयुक्तान्सापिधानान्सपल्लवान्
विन्यसेच्चाष्टवर्धन्यीः तत्तत्कुम्भान्तरालये ३८
गन्धपुष्पादिना पूज्य नैवेद्यान्तं विशेषतः
सहितस्थापनं ह्येतद्वियोगं शृणु चानल ३९
योन्याकाराणि कुण्डानि दिग्वर्धन्या विना तथा
एवमेतत्क्रमाद्भिन्ने मण्डपे चाधिवासयेत् ४०
दिशास्वध्ययनं कुर्यात्ततो होमं समारभेत्
समिदाज्यचरुं लाजांस्तिलसर्षपवैणवान् ४१
कुलत्थमाषमुद्गांश्च प्रत्येकं जुहुयाच्छतम्
अश्वत्थोदुम्बरप्लक्षाशोकबिल्वं च खादिरम् ४२
शमीमायूरसमिधः प्रोक्ता दिक्षु विदिक्षु च
पलाशं तु प्रधानं स्याच्छतमर्धार्धमेव वा ४३
अयं त इध्म मन्त्रेण इध्मं हुत्वा पृथक्पृथक्
ईशानेन घृतं हुत्वा देवस्यत्वा चरुं हुनेत् ४४
लाजं हुत्वा तु वामेन त्र्यम्बकेन तिलं हुनेत्
गौरी शन्नेति मन्त्राभ्यां सर्षपं वैणवं हुनेत् ४५
हृच्छिरश्शूलिकामन्त्रैः कुलत्थान्माषमुद्गकान्

प्रत्येकं व्याहृतिं हुत्वा पूर्णाहुतिमथाचरेत्  ४६
गौरीगायत्रिया चैव घृतं हुत्वा विचक्षणः
गौर्या ब्रह्मषडङ्गैश्च प्रत्येकं तु दशाहुतिः  ४७
प्रभाते स्नानं कुर्वीत आचार्यो मूर्तिपैः सह
पूर्ववद्धोमयेद्धीमान्ब्रह्माङ्गैश्च विशेषतः  ४८
स्नानश्वभ्रे न्यसेत्पीठं दारवं कूर्चसंयुतम्
तत्रासनत्रयं कल्प्य पूज्य शक्तिसमन्वितम्  ४९
आचार्यं पूजयेत्तत्र मूर्तिपानथ पूजयेत्
शयनाद्देवमुत्थाप्य ततो देवीं समुद्धरेत्  ५०
पूर्वाभिजुखमास्थाप्य पूजयित्वा यथाविधि
देवं देवीं विशेषेण शिवकुम्भं च वर्धनीम्  ५१
उद्धृत्य हृदयेनैव प्रासादस्य तु प्रदक्षिणम्
स्नानश्वभ्रे न्यसेद्देवं देवीं तस्योत्तरे न्यसेत्  ५२
भिन्ने श्वभ्रेऽथवा स्थाप्य कलाङ्गानि ततो न्यसेत्
गौरीब्रह्मं ततोऽङ्गं च न्यस्त्वा देव्यां विशेषतः  ५३
घृतं शिरोर्पणं कुर्याद्देवं देवीं विशेषतः
सुमुहूर्ते सुलग्ने तु सर्वातोद्यसमायुतम्  ५४
कुम्भाद्बीजं समादाय प्रतिमाया हृदि न्यसेत्
वर्धन्या बीजमादाय देव्याश्च हृदि विन्यसेत्  ५५
मूर्तिकुम्भैः शिवं स्नाप्य वर्धनीभिरुमां तथा
तदन्ते स्नपनं कुर्यादर्चनोक्तं समर्चयेत्  ५६
हविर्निवेदयित्वा तु ताम्बूलं च निवेदयेत्
विवाहं कारयेदन्ते पूर्वोक्तविधिना सह  ५७
उत्सवं कारयेद्धीमान्शास्त्रदृष्टेन कर्मणा
एवं यः कुरुते मर्त्यो भोगमोक्षमवाप्नुयात्  ५८
एतद्वै स्थापनं प्रोक्तमर्धनारीमथ शृणु
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे चन्द्रशेखरस्थापनपटलः चत्वारिंशत्तमः

## एकचत्वारिंशत्तमः पटलः
## अर्धनारीश्वरस्थापनम्

अतः परं प्रवक्ष्यामि स्थापनं चार्धनारिणः
शुभदं कामदं लोके पुत्रपौत्रविवर्धनम् १
मानोन्मानप्रमाणानि पूर्वोक्तविधिना कुरु
दक्षिणांशे हरं कुर्यादुमां वै वामके कुरु २
कुञ्चितं दक्षिणं पादं वामपादं तु सुस्थितम्
परशुं हरिणं सव्ये वामे वै दर्पणोत्पलम् ३
कृत्तिवासधरः शर्वो दुकूलवसना उमा
उमायाः सुस्तनं कुर्यात्सुकेशं चालकान्वितम् ४
नयनार्धं ललाटे तु हरार्धे तु जटायुतम्
एवं लक्षणतः कृत्वा ततः स्थापनमारभेत् ५
अङ्कुरारार्पयेत्पूर्वं पूर्वोक्तविधिना सह
पिण्डिकां विन्यसेन्मध्ये मण्डपे समलङ्कृते ६
नवपदानि कृत्वा तु रत्नानि विधिवन्न्यसेत्
माणिक्यं पद्मरागं च वैडूर्यं च प्रवालकम् ७
महादिक्षु न्यसेदेतान्मध्यमे हैमकूर्चकम्
तत्र देवं समायोज्य सुस्निग्धं कारयेत्ततः ८
शालिभिः स्थण्डिलं कृत्वा तिलदर्भैः परिस्तरेत्
तन्मध्ये विन्यसेद्देवमभितोऽष्टघटान्न्यसेत् ९
सकूर्चान्वसुदैवत्यान्सवस्त्रान्वारिपूरितान्
पूजयित्वा स्वनाम्ना तु धूपदीपसमन्वितम् १०
अक्षिद्वययुते ऋक्षे नेत्रमोक्षणमारभेत्
हेमसूचिप्रहाराभ्यां पक्ष्मरेखां समालिखेत् ११
कृष्णमण्डलमालिख्य ज्योतिर्मण्डलमालिखेत्
नेत्रमन्त्रं समुच्चार्य प्रोतहैमनखेन तु १२
नेत्राणि मधुना तर्प्य मधुवातेति मन्त्रतः
सुवर्णदूर्वया विद्वान्तर्प्य नेत्रं घृतं हृदा १३

गौर्धेनुभव्यमन्त्रेण सवत्सां गां प्रदर्शयेत्
ब्रह्मजज्ञानमन्त्रेण ब्राह्मणानपि दर्शयेत्  १४
प्रच्छन्नपटमावर्ज्य जनसङ्घान्प्रदर्शयेत्
शुद्धिं कृत्वा विशेषेण पञ्चगव्यकषायकैः  १५
पञ्चब्रह्मं समुच्चार्य पञ्चगव्याभिषेचनम्
कषायं हृदयेनैव चन्दनोदकसंयुतम्  १६
स्रग्वस्त्रभूषणैर्भूष्य कुर्याद्ग्रामप्रदक्षिणम्
नानातोद्यसमायुक्तं नानादीपसमाकुलम्  १७
नानापिञ्छसमायुक्तं नृत्तगेयसमाकुलम्
कण्ठदघ्ने जले धीमान्प्रपां कृत्वातिसुन्दराम्  १८
वितानध्वजमालाभिर्दर्भमालासमाकुलम्
तन्मध्ये विन्यसेद्देवं नववस्त्रेण वेष्टयेत्  १९
प्रासादस्याग्रतः कुर्यान्मण्डपं दशहस्तकम्
षोडशस्तम्भसंयुक्तं चतुर्द्वारसमायुतम्  २०
चतुस्तोरणसंयुक्तं दर्भमालाविभूषितम्
तन्मध्ये वेदिकां कुर्यात्त्रिभागैकेन भागया  २१
रत्निमात्रसमुत्सेधं दर्पणोदरसन्निभम्
मानुषे कल्पयेत्कुण्डं दिशासु विदिशासु च  २२
दिशासु चतुरश्रं स्याद्विदिशासु भगाकृतिः
प्राक्कुण्डेशानयोर्मध्ये वृत्तं प्राधानिकं भवेत्  २३
मेखलात्रयसंयुक्तं प्रत्येकं स्यात्त्रियङ्गुलम्
नाभियोनिसमायुक्तं विस्तारं हस्तमात्रकम्  २४
मण्डपस्योत्तरे पार्श्वे स्नानश्वभ्रं प्रकल्पयेत्
हस्तमात्रप्रविस्तारं मेखलात्रयभूषितम्  २५
स्थण्डिलं कारयेद्धीमानष्टद्रोणैश्च शालिभिः
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि  २६
मध्यमे शयनं कल्प्य चर्मजाद्यैरनुक्रमात्
नवशक्तीर्न्यसेत्तस्मिन्प्रतिमां विन्यसेत्क्रमात्  २७
जलादानीय देवेशं वस्त्रेण परिवेष्टितम्

पूजयेद्धृदयेनैव शिवकुम्भं तु विन्यसेत्  २८
बिम्बस्य वामभागे तु वर्धनीं च क्रमान्न्यसेत्
सकूर्चौ सापिधानौ च सवस्त्रौ रत्नहेमकौ  २९
शिवबीजं शिवकुम्भे शिवरूपं च विन्यसेत्
गौरीबीजं तु वर्धन्यां न्यस्त्वा रूपं तु भावयेत्  ३०
अर्चयित्वा विधानेन तत्तन्मन्त्रमनुस्वरन्
अभितः कलशानष्टौ अष्टौ विद्येश्वरात्मकान्  ३१
द्रोणार्धतोयसंपूर्णान्सवस्त्रान्सापिधानकान्
विद्येशबीजसंयुक्तान्पूजयित्वा यथाविधि  ३२
नैवेद्यं दापयेद्धीमान्प्रत्येकं प्रतिमां तथा
पुनराचमनं दद्यात्ततो होमं समारभेत्  ३३
पलाशखादिराश्वत्थवटाः पूर्वादितः क्रमात्
शमीबिल्वमपामार्गमशोकं च विदिक्षु वै  ३४
समिदाज्यचरुं लाजांस्तिलसर्षपमाषकान्
मधु क्षीरं गुलं तत्र जुहुयात्क्रमशः पुनः  ३५
शिवाग्निं जनयेत्पूर्वं पूर्वोक्तविधिना सह
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरः शिव एव च  ३६
चतुर्दिक्षु प्रधाने च कुण्डानामधिदेवताः
वामा ज्येष्ठा च रौद्री च काली चैव विदिक्षु वै  ३७
समिधो जुहुयाद्दिक्षु शिवगायत्रिमन्त्रतः
गौरीगायत्रिमन्त्रेण विदिक्षु विनियोजयेत्  ३८
आज्यादिगुलपर्यन्तं सद्यादिकवचान्तकैः
मन्त्रैर्हुत्वा विधानेन प्रत्येकं तु शताष्टकम्  ३९
घृतादिगुलपर्यन्तमुपाहुतिमथाचरेत्
त्र्यम्बकेन घृतं हुत्वा अहमस्मि चरुं हुनेत्  ४०
धान्यं हुत्वाग्निमीलेति तिलं यत्तोयमेव च
जातवेदेति मन्त्रेण सर्षपं जुहुयान्क्रमात्  ४१
आ वो राजा माषस्योक्तं मधुवाता मधुं हुनेत्
गोक्षीरं जुहुयात्तत्र आप्यायस्वेति मन्त्रतः  ४२

गौरीगायत्रिमन्त्रेण गुलं हुत्वा विचक्षणः
गौरीब्रह्माङ्गबीजैश्च प्रत्येकं जुहुयाच्छतम्  ४३
रात्रौ जागरणं ह्येवं प्रभाते स्थापनं भवेत्
आचार्यो मूर्तिपैः सार्धं स्नानत्रयमथाचरेत्  ४४
स्नानश्वभ्रे विशेषेण कल्पयेदासनत्रयम्
शयनाद्देवमुत्थाप्य ततः स्थापनमारभेत्  ४५
सुशुद्धे मण्डपे रम्ये नयेद्देवं विशेषतः
वस्त्राभरणमालाभिर्यजेत्पूर्वोक्तमार्गतः  ४६
हविर्निवेदयेत्पश्चात्सोपदंशं गुलान्वितम्
पुनराचमनं दत्त्वा निर्माल्यं तु विसर्जयेत्  ४७
ताम्बूलं दापयेत्पश्चाद्धृदयेन विचक्षणः
आचार्यं पूजयेत्तत्र पूर्वोक्तविधिना सह  ४८
मूर्तिपान्पूजयेत्तत्र दैवज्ञमपि पूजयेत्
उत्सवं कारयेत्पश्चाद्यथावित्तानुसारतः  ४९
एवं यः कुरुते मर्त्यः शिवलोके महीयते
नार्यरूपिणः सूक्तं स्थापनं तु विशेषतः  ५०
हर्यर्धस्थापनं वक्ष्ये शृणु वह्ने समाहित  ५१

इति श्रीदीप्तशास्त्रे प्रतिष्ठातन्त्रे अर्धनारीश्वरस्थापनपटलः
एकचत्वारिंशत्तमः

## द्विचत्वारिंशत्तमः पटलः
### हर्यर्धस्थापनविधिः

अतः परं प्रवक्ष्यामि हर्यर्धस्य शिवस्य तु
स्थापनं चायुरारोग्यजयदं शृणु चानल  १
मानोन्मानप्रमाणेन प्रतिमां कारयेत्ततः
वामांशे तु हरिं कुर्याद्दक्षिणे शङ्करं कुरु  २
जटामकुटसंयुक्तमर्धचन्द्रविभूषितम्
नागकुण्डलसंयुक्तं ललाटनयनार्धकम्  ३
द्विपचर्माम्बरधरं मेखलाभिश्च शोभितम्

शिवरूपमिदं प्रोक्तं हरिरूपमतः शृणु ४
मकरैः कुराडलैर्युक्तं किरीटमकुटान्वितम्
पीताम्बरधरं रूपं हारकेयूरभूषितम् ५
अभयं दक्षिणं हस्तं वरदं वामहस्तकम्
परशुं दक्षिणे हस्ते वामहस्ते सुदर्शनम् ६
एवं कुर्याद्विशेषेण ततः स्थापनमारभेत्
माणिक्यं पद्मरागं च वैडूर्यं च प्रवालकम् ७
मौक्तिकं स्फटिकं वज्रमिन्द्रनीलं च पुष्पकम्
माणिक्यं मध्यमे चैव पूर्वादीनि प्रदक्षिणम् ८
न्यस्त्वा रत्नान्यशेषाणि नवबीजसमन्वितम्
सुस्निग्धं कारयित्वा तु ततः कुर्वक्षिमोक्षणम् ९
मरिडते मराडपे कुर्यात्स्थरिडलं मराडलान्वितम्
तिलदर्भैः परिस्तीर्य मूर्तिं मन्त्रेण विन्यसेत् १०
लोकपालाधिदैवत्यान्कलशानभितो यजेत्
ससूत्रान्सापिधानांश्च सवस्त्रान्वारिपूरितान् ११
गन्धादिभिः समभ्यर्च्य शिल्पिनं पूजयेत्ततः
तरङ्गेणापि संवेष्ट्य चाक्षिमोक्षणमारभेत् १२
पक्ष्मरेखां पुरालिख्य हैमसूच्या समन्त्रकम्
असितं मराडलं लिख्य दृष्टिमराडलमालिखेत् १३
हिररायनखयुक्ताभिरङ्गुलीभिर्विशेषतः
तत्तन्नेत्रमनुस्मृत्य सुप्रोतं मधुना सह १४
मधुवाता ऋतायेति मधुपात्रं प्रदर्शयेत्
घृतमिक्षेति मन्त्रेण घृतपात्रं प्रदर्शयेत् १५
कपिलां दर्शयेत्पश्चाद्गौर्धेन्वित्यादि मन्त्रतः
पुरायाहं वाचयेत्तत्र स्वस्तिसूक्तसमन्वितम् १६
प्रतिमाशुद्धिं कुर्वीत पञ्चमृत्पञ्चगव्यकैः
विष्णुसूक्तै रुद्रसूक्तैरभिषेकं समाचरेत् १७
शुद्धैरुक्थैः समुच्चार्य शुद्धतोयेन सेचयेत्
वस्त्राभरणमालाभिरलङ्कृत्य विशेषतः १८

ग्रामप्रदक्षिणं कृत्वा शङ्खभेर्या रवैः सह
जलाधिवासनं कुर्यान् नद्यां वाप्यां तटाकके १९
तीरे समतलं कृत्वा स्थाप्य स्नाप्य यथाविधि
वस्त्रेण वेष्टयित्वा तु जलमध्ये निवेशयेत् २०
एकरात्रं द्विरात्रं वा त्रिरात्रं वा जलोषितम्
प्रासादस्याग्रतः कुर्यान्मण्डपं चतुरश्रकम् २१
द्वादशं दशहस्तं वा नवहस्ताष्टहस्तकम्
षोडशस्तम्भसंयुक्तं दर्पणोदरसंनिभम् २२
वितानध्वजसंछन्नं मुक्तादामैरलङ्कृतम्
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् २३
दर्भमालासमायुक्तं फलपल्लवशोभितम्
तन्मध्ये वेदिकां कुर्यात् पञ्चतालप्रमाणकम् २४
द्वितालं वेदिकोत्सेधं दर्पणोदरसंनिभम्
कुण्डानि परितः कुर्यान्मानुषे तु पदे बुधः २५
चतुरश्रं धनुर्वृत्तं त्रिकोणं च दिशासु वै
आग्नेयादीशकोणान्तं पद्माकारं प्रकल्पयेत् २६
मेखलात्रयसंयुक्तं प्रत्येकं तु त्रयाङ्गुलम्
नाभियोनिसमायुक्तं हस्तमात्रं तु विस्तरम् २७
ईशानशक्रयोर्मध्ये कुण्डं प्राधानिकं कुरु
गोमयालेपनं कृत्वा मण्डपाभ्यन्तरं बहिः २८
पर्यग्निकरणं कृत्वा पुण्याहं वाचयेत्ततः
स्थण्डिलं कारयेद्वेद्यामष्टद्रोणैश्च शालिभिः २९
तण्डुलैः शोभितं कृत्वा तिलदर्भैः परिस्तरेत्
शयनं कल्पयेत्तत्र चाण्डजाद्यैरनुक्रमात् ३०
गौरीगायत्रिमन्त्रेण शयनं चाभिमन्त्रयेत्
अर्चयित्वा यथान्यायं मूर्तिं तत्रैव शाययेत् ३१
प्राक्शिरस्कं न्यसेद्धीमानूर्ध्ववक्त्रं सपिण्डकम्
रक्तवस्त्रेण संवेष्ट्य पूजयित्वा हृदा बुधः ३२
ईशानशक्रयोर्मध्ये शिवकुम्भं च वर्धनीम्

अभितः कलशानष्टौ स्थापयेद्वसुदेवतान् ३३
द्रोणार्धतोयसंपूर्णान् सवस्त्रान्वारिपूरितान्
सकूर्चान्सापिधानांश्च हेमपङ्कजसंयुतान् ३४
तत्तत्कुम्भे तु तद्बीजं न्यस्त्वा देवं तु भावयेत्
पूजयित्वा स्वनाम्ना तु नैवेद्यान्तं विशेषतः ३५
तत्तन्मूर्तिं दिशाकुण्डे ध्यात्वा होमं समाचरेत्
अर्कश्च खादिराश्वत्थोदुम्बरप्लक्ष एव च ३६
न्यग्रोधं चैव मायूरं समिधः संप्रकीर्तिताः
शिवाग्नौ चैव पालाशमर्घ्यपाद्यादि निक्षिपेत् ३७
समिदाज्यचरुं लाजान्सक्तुं च गुलसर्षपान्
नीवारं तिलमुद्गं च होमयेत्तु विधानतः ३८
शोधनं क्षालनं चैव शोषणं पाचनं तथा
कुण्डसंस्कारकं सर्वमग्निकार्योक्तमाचरेत् ३९
शिवाग्निं जनयेत्पूर्वं दिशाहोममतः परम्
शिवाग्नौ समिधो हुत्वा ईशानेन तु मन्त्रतः ४०
समिधो जुहुयाद्दिक्षु त्र्यम्बकेन च मन्त्रतः
शन्नो देवीति मन्त्रेण विदिक्षु जुहुयात्ततः ४१
शतमर्धं तदर्धं वा तन्मन्त्रेण घृतं हुनेत्
शिवाङ्गैश्चैव विद्याङ्गैः शिवबीजेन होमयेत् ४२
लाजं यो रुद्र मन्त्रेण सक्तुं चैव हृदा हुनेत्
गणानां त्वा गुलं हुत्वा कद्रुद्रायेति सर्षपम् ४३
इमा रुद्राय नीवारं इदं विष्णवेति वै तिलम्
आ वो राजेति मन्त्रेण मुद्गं हुत्वा विचक्षणः ४४
घृतमिक्षेति मन्त्रेण घृतहोमं समाचरेत्
अन्नं प्राणेति मन्त्रेण हविर्हुत्वा विचक्षणः ४५
द्रव्यान्ते व्याहृतिं हुत्वा हृदा पूर्णाहुतिं ददेत्
एवं जागरणं रात्रौ प्रभाते स्थापनं भवेत् ४६
स्नानत्रयं पुरा कृत्वा देशिको मूर्तिपैः सह
दिक्कुम्भान्मूर्तिकुम्भांश्च अग्निमूर्तिं च पूजयेत् ४७

ब्रह्माङ्गैर्बीजमुख्यैश्च दशबीजैश्च होमयेत्
जयादिरभ्याधानं च राष्ट्रभृत्स्विष्टकृद्धुनेत् ४८
वस्त्रहेमाङ्गुलीयैश्च यज्ञसूत्रैश्च हैमकैः
स्वर्णैश्च धनधान्यैश्च देशिकं पूजयेत्क्रमात् ४९
मूर्तिपान्पूजयेत्तत्र अध्येतृंश्च प्रपूजयेत्
भक्तांश्च परिचारांश्च दैवज्ञमपि पूजयेत् ५०
उत्थाप्य शयनाद्देवं शकुनं सूक्तमुच्चरन्
स्नानश्वभ्रे विशेषेण कल्पयेदासनत्रयम् ५१
स्नानवेद्यां समानीय स्थापयेद्विष्टरोपरि
आनीय शिवकुम्भं तु वर्धनीमूर्तिकुम्भकैः ५२
नृत्तगेयसमायुक्तं सर्वातोद्यसमन्वितम्
ब्रह्मघोषसमायुक्तं स्वस्तिमङ्गलवाचकैः ५३
अष्टत्रिंशत्कलान्यासमङ्गैरङ्गानि कल्पयेत्
मुहूर्तं निरिक्ष्य दैवज्ञो गुरवे तन्निवेदयेत् ५४
शिवकुम्भात्समादाय शिवबीजं हृदि न्यसेत्
वर्धन्या बीजमादाय गौर्याश्च हृदि विन्यसेत् ५५
अभिषिच्य हृदा मन्त्री वसुकुम्भैर्यथाक्रमम्
स्नपनं कारयेदन्ते शुद्धदेशे न्यसेत्ततः ५६
पाद्यैराचमनीयार्घ्यैर्गन्धपुष्पैश्च धूपकैः
वस्त्राभरणमालाभिरर्चनोक्तं समर्चयेत् ५७
नैवेद्यं पायसं दद्यात्पुनराचमनं ददेत्
ताम्बूलं दापयित्वा तु हृदयं मन्त्रमुच्चरन् ५८
उत्सवं कारयेदन्ते पूर्वोक्तविधिना सह
सर्वलोकहितं पुण्यं सर्वकामार्थसाधनम् ५९
हर्यर्धस्थापनं प्रोक्तं चण्डेशस्थापनं शृणु ६०
इति दीप्ताशास्त्रे प्रतिष्ठातन्त्रे हर्यर्धस्थापनपटलः द्विचत्वारिंशत्तमः

## त्रिचत्वारिंशत्तमः पटलः
## चण्डेशानुग्रहमूर्तिस्थापनम्

अतः परं प्रवक्ष्यामि चण्डानुग्रहमूर्तिनः
स्थापनं शृणु तत्त्वेन भुक्तिमुक्तिप्रदं नृणाम् १
आसने च सुखासीनमुमया च सुतेन च
मृगटङ्कसमायुक्तं सर्वाभरणभूषितम् २
चण्डेशस्य मालां ग्राह्य हस्ताभ्यां च विनिक्षिपेत्
आसनाधिष्ठितं चण्डं कराभ्यां च कृताञ्जलिम् ३
अवनताननं चण्डं वामभागाश्रितं कुरु
अङ्कुराण्यर्पयेत्पूर्वं पूर्वोक्तविधिना सह ४
प्रतिष्ठादिनात्पूर्वे तु पञ्चाहे वा त्र्यहेऽपि वा
रत्नन्यासं प्रकर्तव्यं सुमुहूर्ते शुभे दिने ५
इन्द्रनीलं महानीलं मुक्तामरकतं तथा
एतानीह महादिक्षु माणिक्यं मध्यमे न्यसेत् ६
एवमेव क्रमाद्देव्या न्यस्त्वा हेमसमन्वितम्
सुस्निग्धं कारयित्वा तु कुर्यान्नयनमोक्षणम् ७
मण्डपे स्थण्डिलं कुर्यात्सर्वालङ्कारसंयुतम्
तन्मध्ये विन्यसेद्देवं प्राङ्मुखं चण्डसंयुतम् ८
परितोऽष्टौ न्यसेत्कुम्भान्लोकपालाधिदैवतान्
सकूर्चान्सापिधानांश्च सवस्त्रान्वारिपूरितान् ९
गन्धादिना समभ्यर्च्य देवं देवीं च चण्डकम्
वस्त्रहेमाङ्गुलीयैश्च संपूज्याचार्यशिल्पिनौ १०
सुमुहूर्ते शुभे लग्ने दृष्टिमोक्षणमारभेत्
हेमसूचिप्रहाराभ्यां पक्ष्मरेखां समालिखेत् ११
असितं मण्डलं लिख्य ततो वै दृष्टिमण्डलम्
नखैर्हेममयैर्विद्वान्प्रोतनेत्रमुदाहरन् १२
देवीमेवं समादाय चण्डेशस्य विशेषतः
मध्वाज्याभ्यां च सन्तर्प्य मध्वाज्यसूक्तमुच्चरन् १३
गौर्धेनुभव्यामन्त्रेण दर्शयेद्धेनुमुत्तमाम्
प्रच्छनपटमावर्ज्य जनान्सर्वान्प्रदर्शयेत् १४
अष्टमृद्भिश्च शकृता भस्मना चाभिषेचयेत्

स्नापयेत्पञ्चगव्येन रुद्रसूक्तं समुच्चरन्  १५
महाव्योमेति मन्त्रेण स्नापयेद्गन्धवारिणा
वस्त्राभरणमालाभिरलङ्कृत्य विशेषतः  १६
ग्रामप्रदक्षिणं कुर्याद्भेरीघोषसमायुतम्
जलतीरे समानीय शुद्धिं कृत्वा तु पूर्ववत्  १७
वस्त्रकूर्चैः समावेष्ट्य देवं देवीं च चण्डकम्
बाहुदघ्नजले शुद्धे चतुष्पादस्य मध्यमे  १८
प्राक्शिरस्कं न्यसेद्देवं चण्डं च उमया सह
एकरात्रं द्विरात्रं वा जले चैवाधिवासयेत्  १९
मण्डपं कारयेद्धीमान्शिवाग्रे दक्षिणेऽथवा
द्वादशं दशहस्तं वा नवहस्तमथापि वा  २०
षोदशस्तम्भसंयुक्तं दर्पणोदरसंनिभम्
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्  २१
दर्भमालासमायुक्तं मुक्तादामैरलङ्कृतम्
तन्मध्ये वेदिकां कुर्याद्विस्तारेण द्विहस्तकाम्  २२
रत्निमात्रसमुत्सेधां दर्पणोदरसंनिभाम्
कुण्डानि परितः कुर्याद्दिशासु विदिशासु च  २३
ईशानशक्रयोर्मध्ये वृत्तं प्राधानिकं कुरु
द्वित्रिभिश्चतुरङ्गुल्यैर्मेखलाभिरलङ्कृतम्  २४
गोमयालेपेनं कृत्वा प्रोक्षयेत्पुरुषेण तु
स्थण्डिलं कारयेद्विद्वान्शालिभिश्चतुरङ्गुलम्  २५
तण्डुलैस्तिलदर्भैश्च भूषयित्वा समन्ततः
शयनं कल्पयेन्मध्ये अ्रण्डजाद्यैरनुक्रमात्  २६
जलाद्देवं समुत्थाप्य शुद्धिं कृत्वा तु पूर्ववत्
वस्त्राभरणमालाभिर्भूषयित्वा यथाविधि  २७
शयने शाययेद्देवं प्राक्शिरस्कं सतीं सह
पाददेशे न्यसेच्चण्डं रक्तवस्त्रेण वेष्टयेत्  २८
ततः शिरःप्रदेशे तु शिवकुम्भं च वर्धनीम्
चण्डकुम्भं च विन्यस्य तत्तन्मन्त्रं समुच्चरन्  २९

परितोऽष्टघटान्न्यस्त्वा द्रोणतोयेन पूरितान्
विन्यसेदष्टवर्धन्या कुम्भकुम्भान्तरालके ३०
चण्डकुम्भे तु चण्डेशं ध्यात्वा तन्मूर्तिमेव च
अनन्तादिशिखण्ड्यन्तानष्टकुम्भाधिदेवतान् ३१
शक्तयश्चाष्ट वामाद्या वर्धनीषु च विन्यसेत्
ससूत्रान्सापिधानांश्च सवस्त्रान्वारिपूरितान् ३२
रत्नहेमसमायुक्तान्पल्लवैरुपशोभितान्
गन्धादिना समभ्यर्च्य नैवेद्यान्तं विशेषतः ३३
अश्वत्थोदुम्बरप्लक्षवटान्पूर्वादितः क्रमात्
अशोकबिल्वमायूरश्चार्कश्चेति विदिक्षु च ३४
पलाशं तु प्रधानस्य सर्वेषामिध्ममेव च
समिदाज्यचरुं लाजान्सक्तुमाषतिलानपि ३५
कदलीफलगुलक्षीरान्ब्रह्माङ्गैरपि होमयेत्
अनन्तादिशिखण्ड्यन्ताः कुण्डानामधिदेवताः ३६
शोधनं क्षालनं चैव शोषणं पाचनं तथा
संस्काराणि च सर्वाणि अग्निकार्योक्तमार्गतः ३७
शिवाग्निं जनयेत्पूर्वं दिगग्निं च ततः परम्
उपाहुतिं ततः कुर्यात्प्रत्येकं षोडश क्रमात् ३८
आ वो राजेति मन्त्रेण आज्यं हुत्वा विचक्षणः
देवस्य त्वा चरुं हुत्वा लाजं यच्छिद्धितेन च ३९
सक्तुं सावित्रिमन्त्रेण माषं वै जातवेदसा
यत्ते यमं तिलस्योक्तं गणानां त्वा फलं गुलम् ४०
आ प्याय स्वेति च क्षीरं द्रव्यान्ते व्याहृतिं हुनेत्
निशि जागरणं ह्येवं प्रभाते स्नानमाचरेत् ४१
अङ्गन्यासं करन्यासं कुर्याद्वै देशिकोत्तमः
देवं देवीं च चण्डं च कुम्भं कुण्डानि पूजयेत् ४२
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः
दक्षिणां दापयेत्पश्चात्पूर्वोक्तविधिना सह ४३
जयादिरभ्याधानं च ततो राष्ट्रभृतं हुनेत्

शयनाद्देवमुत्थाप्य चण्डेश्वरसमन्वितम्  ४४
शिरसा धारयेत्कुम्भं वर्धनीं प्रतिमामपि
आलयं तु परिभ्राम्य नृत्तगेयसमन्वितम्  ४५
आसनं कल्पयेत्पूर्वं स्नानश्वभ्रस्य मध्यमे
आसनोपरि संस्थाप्य प्राङ्मुखं परमेश्वरम्  ४६
कलाङ्गानि न्यसेद्विद्वान्पूजयित्वा हृदा बुधः
गौरीकलां न्यसेत्तत्र चण्डाङ्गं चण्डदेहके  ४७
सुमुहूर्ते न्यसेद्बीजं शिवकुम्भात्समाहितः
उमाबीजं हृदि न्यस्त्वा चण्डबीजं हृदि न्यसेत्  ४८
कुम्भोदकैः शिवं स्नाप्य वर्धनीभिरुमां तथा
स्नपनं कारयेदन्ते पूजान्ते तु विशेषतः  ४९
चण्डं तु चण्डकुम्भेन स्नाप्य स्थापनमारभेत्
चण्डेशानुग्रहः प्रोक्तः शृणु कामारिमूर्तिनम्  ५०

इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे चण्डेशानुग्रहस्थापनपटलः
त्रिचत्वारिंशत्तमः

## चतुश्चत्वारिंशत्तमः पटलः
## कामारिस्थापनविधिः

अतः परं प्रवक्ष्यामि स्थापनं कामहारिणः
भुक्तिमुक्तिप्रदं जन्तोः पुत्रपौत्रविवर्धनम्  १
आसने तु सुखासीनं कृष्णापरशुधारिणम्
किंचित्तिर्यग्गतं वक्त्रं रौद्रदृष्टिभयावहम्  २
कामारिमेवं कुर्यात्तु सूचिहस्तपरावृतम्
धनुःशरधरं काममग्निज्वालाविभूषितम्  ३
अवनताननं कुर्यान्निश्वसन्तं विशेषतः
प्रतिष्ठादिनात्पूर्वे तु वापयेदङ्कुराणि वै  ४
सुमुहूर्ते सुलग्ने तु रत्नानि विधिवन्न्यसेत्
माणिक्यं वज्रवैडूर्यं स्फटिकं चन्द्रकान्तकम्  ५
मध्यमादिक्रमान्न्यस्त्वा हृद्बीजेन प्रदक्षिणम्

सुस्निग्धं कारयित्वा तु शुद्धिं कृत्वा यथोदितम् ६
ततोऽक्षिमोक्षणं कुर्यात्पूर्वोक्तविधिना सह
पञ्चगव्यैः कुशाम्भोभिः प्रतिमाशुद्धिमाचरेत् ७
वस्त्राभरणमालाभिर्भूषयित्वा यथाविधि
ग्रामप्रदक्षिणं कृत्वा सर्वातोद्यसमन्वितम् ८
जलाधिवासनं कुर्याद्बाहुदघ्ने जले बुधः
एकरात्रं द्विरात्रं वा त्रिरात्रं वाधिवासयेत् ९
प्रतिष्ठामण्डपं कुर्यात्प्रासादस्याग्रतोऽन्तिके
द्वादशं दशहस्तं वा षोडशस्तम्भसंयुतम् १०
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्
वितानध्वजवस्त्रैश्च मुक्तादामैरलङ्कृतम् ११
तन्मध्ये वेदिकां कुर्याद्विस्तारेण त्रिहस्तकम्
रत्निमात्रसमुत्सेधं दर्पणोदरसन्निभम् १२
कुण्डानि परितः कुर्यान्मानुषे तु पदे बुधः
चतुरश्रं चतुर्दिक्षु वृत्तं वाथ प्रकल्पयेत् १३
प्राक्कुण्डवेदिकामध्ये कुण्डं प्रधानिकं कुरु
मेखलात्रयसंयुक्तं नाभियोनिसमन्वितम् १४
गोमयालेपनं कृत्वा पुण्याहं वाचयेत्ततः
जलादुत्तीर्य देवेशं कामं चापि विशेषतः १५
शुद्धिं कृत्वा यथान्यायं भूषयेद्भूषणार्हकैः
स्थण्डिलं कारयेद्वेद्यां शालिभिस्तण्डुलैः सह १६
तिलदर्भैः परिस्तीर्य प्रोक्षायेत्पुरुषेण तु
शयनं कल्पयेत्तत्र चर्मजाद्यैरनुक्रमात् १७
उपस्तरणसंयुक्तं शयनं पञ्च कल्पयेत्
गन्धादिना समभ्यर्च्य शक्तिमन्त्रमनुस्मरन् १८
प्राक्शिरस्कं न्यसेद्देवं वामभागे स्मरं न्यसेत्
पूजयित्वा हृदा मन्त्री रक्तवस्त्रेण वेष्टयेत् १९
अभितः कलशानष्टौ न्यसेद्गन्धाम्बुपूरितान्
सकूर्चान्सापिधानांश्च सवस्त्रान्सूत्रसंयुतान् २०

लोकपालाधिदैवत्यान्पूजयित्वा स्वनामतः
ईशानशक्रयोर्मध्ये शिवकुम्भं च वर्धनीम्  २१
स्थापयेत्तु विशेषेण शिवोमाबीजसंयुतम्
गन्धादिना समभ्यर्च्य नैवेद्यान्तं विचक्षणः  २२
ततो होमं प्रकुर्वीत शास्त्रदृष्टेन कर्मणा
पलाशोदुम्बरप्लक्षन्यग्रोधं बिल्वमेव च  २३
प्रत्येकं शतमर्धं वा तदर्धार्धमथापि वा
समिदाज्यचरुं लाजान् शालींश्च तिलसर्षपान्  २४
दूर्वाक्षतयवांश्चैव जुहुयात्क्रमशः पुनः
वक्त्रेण च समिद्धोमं पूर्वभागे विचक्षणः  २५
दक्षिणेऽघोरमन्त्रेण पश्चिमे सद्यमन्त्रतः
उत्तरे वामदेवेन पञ्चमेन प्रधानके  २६
आज्यादियवपर्यन्तं सद्यादिकवचान्तकैः
मन्त्रैर्हुत्वा विशेषेण शतमर्धार्धमेव वा  २७
त्र्यम्बकेन घृतं हुत्वाग्निमीले चरुं हुनेत्
तिलादियवपर्यन्तं रुद्रसूक्तेन होमयेत्  २८
द्रव्यन्ते व्याहृतिं हुत्वा समिदाहुतिमाचरेत्
एवं जागरणं रात्रौ प्रभाते स्थापनं भवेत्  २९
आचार्यो मूर्तिपैः सार्धं स्नानत्रयमथाचरेत्
रुद्रकुम्भं च बिम्बं च पूजयेदग्निमेव च  ३०
रात्रिवद्धोमयेत्पश्चात्स्विष्टान्तं हि समाचरेत्
जयादिरभ्याधानं च राष्ट्रभृच्च हुनेत्क्रमात्  ३१
आचार्यं मूर्तिपान्सर्वान्पूजयित्वा यथाविधि
शयनाद्देवमुत्थाप्य स्मरेण सह देशिकः  ३२
स्नानश्वभ्रस्य मध्ये तु कल्पयेदासनत्रयम्
तदूर्ध्वे विन्यसेद्देवं हृदयेन समन्वितः  ३३
कलाङ्गानि ततो न्यस्त्वा पूजयित्वा यथाविधि
सुमुहूर्ते सुलग्ने तु मन्त्रन्यासं समाचरेत्  ३४
शिवकुम्भात्समादाय शिवबीजं हृदि न्यसेत्

वर्धन्या बीजमादाय पिण्डिकायां तु विन्यसेत् ३५
अभिषिच्य दिशाकुम्भैस्तत्तन्मन्त्रं समुच्चरन्
पुण्याहं वाचयेदन्ते स्मरमूर्तेर्विशेषतः ३६
स्नपनं कारयेदन्ते देवेशं कामहारिणम्
मनोरमे समे देशे स्थाप्य देवं सुपूजयेत् ३७
अर्चनोक्तं समभ्यर्च्य पायसं तु निवेदयेत्
हृदा चाचमनं दद्यान्निर्माल्यं तु विसर्जयेत् ३८
ताम्बूलं दापयेद्धीमान्हृदयेन फलत्रयम्
उत्सवं कारयेदन्ते यथावित्तानुसारतः ३९
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
कामारिस्थापनं प्रोक्तं कालहारिं ततः शृणु ४०
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे कामारिस्थापनपटलः चतुश्चत्वारिंशत्तमः

## पञ्चचत्वारिंशत्तमः पटलः
## कालारिस्थापनविधिः

अतः परं प्रवक्ष्यामि स्थापनं कालहारिणः
लोकशान्तिकरं पुण्यं राजराष्ट्रविवर्धनम् १
प्रतिमां कारयेद्धीमान्पूर्वोक्तविधिना सह
देवस्य बाहुमात्रेण देवीं कुर्याद्द्विबाहुकाम् २
पूर्वोक्तविधिना धीमानङ्कुराणि समर्पयेत्
विचित्रे मण्डपे रम्ये रत्नन्यासं समारभेत् ३
माणिक्यं पुष्परागं च वैडूर्यं नीलमेव च
स्फटिकं शङ्खमुक्ताश्च चन्द्रकान्तं प्रवालकम् ४
माणिक्यं मध्यमे न्यस्त्वा शेषणीन्द्रादि योजयेत्
गौरीबीजं न्यसेदेवमष्टदिक्षु च मध्यमे ५
सुस्निग्धं कारयित्वा तु स्थण्डिलं मण्डपे कुरु
तन्मध्ये विन्यसेद्देवं वामभागे तु पार्वतीम् ६
पादाधः पतितं कालं पाशशूलधरं न्यसेत्
अभितः कलशानष्टौ विन्यसेद्वारिपूरितान् ७

सकूर्चान्वस्त्रसंयुक्तान्ससूत्रान्वसुदैवतान्
अर्चयित्वा यथान्यायं देवं देवीं हृदा बुधः ८
आचार्यशिल्पिनौ पूज्य वस्त्रहेमाङ्गुलीयकैः
ततोऽक्षिमोक्षणं कुर्यान्नेत्रयुग्मयुते दिने ९
पक्ष्मरेखां पुरालिख्य कृष्णमण्डलमालिखेत्
दृष्टिमण्डलमालिख्य हेमसूच्या समन्त्रकम् १०
नेत्रेषु नेत्रमुच्चार्य प्रोतहेमनखैरपि
मधुवाता ऋतायेति मधु नेत्रेषु तर्पयेत् ११
घृतं मिमिक्षमन्त्रेण घृतं नेत्रेषु तर्पयेत्
धेनुं गौर्धेनुना दृश्य ब्रह्मसूक्तेन ब्राह्मणान् १२
स्नाप्य शुद्धोदकेनैव शुद्धिसूक्तं समुच्चरन्
पञ्चगव्यैः कषायैश्च मृद्भिश्चैवाभिषेचयेत् १३
पुण्याहं वाचयेदन्ते पूज्य गन्धादिना बुधः
एवमेव क्रमाद्देव्याः कुर्यान्नयनमोक्षणम् १४
ग्रामप्रदक्षिणं कुर्यात्सर्वालङ्कारसंयुतम्
जलतीरे समानीय पूज्य गन्धादिना बुधः १५
वस्त्रेण वेष्टयेद्देवं देवीं कूर्चसमन्विताम्
जलमध्ये प्रपां कृत्वा वितानध्वजसंयुताम् १६
तन्मध्ये विन्यसेद्देवं देवीं च फलकोपरि
प्रासादस्याग्रतः कुर्यान्मण्डपं चतुरश्रकम् १७
द्वादशं दशहस्तं वा नवहस्तमथापि वा
षोडशस्तम्भसंयुक्तं चतुर्द्वारसमन्वितम् १८
चतुस्तोरणसंयुक्तं दर्भमालाविभूषितम्
मण्डपस्य तु तन्मध्ये वेदीं कुर्याद्द्विहस्तकाम् १९
रत्निमात्रसमुत्सेधां दर्पणोदरसंनिभाम्
तस्य मानुषभागे तु कुण्डानि परिकल्पयेत् २०
चतुरश्रं योनिखण्डेन्दुपञ्चाश्रं वृत्तषड्भुजम्
पद्ममष्टाश्रकं विद्धि पूर्वादि क्रमयोगतः २१
ईशानशक्रयोर्मध्ये कुण्डं प्राधानिकं कुरु

मेखलात्रयसंयुक्तमेकैकं स्यात्त्रियङ्गुलम्  २२
नाभियोनिसमायुक्तं विस्तारं रत्निमात्रकम्
मण्डपस्योत्तरे पार्श्वे स्नानश्वभ्रं प्रकल्पयेत्  २३
मेखलात्रयसंयुक्तं नालावटसमन्वितम्
गोमयालेपनं कृत्वा पिष्टचूर्णैर्विचित्रयेत्  २४
जलादुत्तीर्य देवेशमेकरात्रोषितं परम्
देवीमुत्थाप्य तत्रैव पूर्ववच्छुद्धिमाचरेत्  २५
पुण्याहं वाचयित्वा तु कौतुकं बन्धयेद्बुदा
स्थण्डिलं कारयेद्धीमान्शालिभिर्वेदिकोपरि  २६
तण्डुलैश्च तिलैश्चैव दर्भैर्लाजैः समन्वितम्
शयनं कल्पयेन्मध्ये चाण्डजाद्यैरनुक्रमात्  २७
शक्तिमन्त्रं समुच्चार्य मूर्तिं तत्रैव शाययेत्
देवीं च शाययित्वा तु रक्तवस्त्रेण वेष्टयेत्  २८
पाददेशे न्यसेत्कालं रक्तवस्त्रेण वेष्टयेत्
ईशानशक्रयोर्मध्ये शिवकुम्भं च वर्धनीम्  २९
स्थापयेत्स्थण्डिले धीमान्सवस्त्रान्वारिपूरितान्
सकूर्चान्सापिधानांश्च ससूत्रान्रत्नहैमकान्  ३०
चन्दनोदकसंपूर्णानाम्रपल्लवशोभितान्
शिवकुम्भे न्यसेत्कूटं वर्धन्यां खान्तमेव च  ३१
अभितः कलशानष्टौ द्रोणतोयप्रपूरितान्
सवस्त्रान्सापिधानांश्च विद्येश्वरसमायुतान्  ३२
तत्तद्रूपं तु तत्कुम्भे ध्यात्वा तद्बीजसंयुतम्
न्यस्त्वा कुम्भान्तराले तु वर्धन्यष्टौ विशेषतः  ३३
गन्धपुष्पादिना पूज्य तत्तन्मन्त्रमुदाहरन्
अष्टमङ्गलरूपाणि द्वारकुम्भांश्च पूजयेत्  ३४
दिशास्वध्ययनं कुर्यात्ततो होमं समारभेत्
समिदाज्यचरुं लाजान्सक्तुशालियवांस्तिलान्  ३५
सर्षपं च गुलं चैव माषापूपफलानि वै
शतमर्धं तदर्धं वा प्रत्येकं जुहुयात्ततः  ३६

पालाशखादिराश्वत्थप्लक्षोदुम्बरवञ्जुलाः
वैकङ्कतशमीबिल्वाः समिधः संप्रकीर्तिताः ३७
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरः शिव एव च
प्रागादीशानकुण्डान्तं कुण्डानामधिदेवताः ३८
उमा दुर्गा तथा लक्ष्मीर्ज्येष्ठा चाग्न्यादिदेवताः
शिवाग्निं जनयेत्पूर्वं पञ्चसंस्कारसंयुतम् ३९
प्रणीताग्निं समादाय मूर्तिकुण्डेषु निक्षिपेत्
आघारमाज्यभागं च व्याहृतिं च यथाक्रमम् ४०
पूर्वोक्तविधिना हुत्वा पञ्चद्रव्येण होमयेत्
सद्यादिवक्त्रपर्यन्तं चतुर्दिक्षु समिद्धुनेत् ४१
ईशानेन समिद्धोमं शिवकुण्डे समाचरेत्
गौरीगायत्रिमन्त्रेण विदिक्षु समिधा हुनेत् ४२
त्र्यम्बकेन हुनेदाज्यं गौरीगायत्रिमन्त्रतः
चर्वादिफलपर्यन्तं ब्रह्माङ्गैर्जुहुयात्क्रमात् ४३
उपाहुतिं ततः कुर्यात्प्रत्येकं षोडश क्रमात्
घृतमिक्षे घृतं प्रोक्तमन्नं प्राणं चरुं हुनेत् ४४
इदं विष्णिवति मन्त्रेण लाजं हुत्वा विशेषतः
अग्न आ याहि शालींश्च ममाग्नेति वै तिलम् ४५
एष ते सर्षपं हुत्वा गुलं गायत्रिमन्त्रतः
यत्ते यमं यवस्योक्तं माषं धात्रे हि मन्त्रतः ४६
शन्नो देवीत्यपूपं स्याद्गौरीगायत्रिया फलम्
द्रव्यान्ते व्याहृतिं हुत्वा हृदा पूर्णाहुतिं हुनेत् ४७
एवं जागरणं रात्रौ प्रभाते स्थापनं भवेत्
निद्राकुम्भं च बिम्बं च वह्निमूर्तिं च पूजयेत् ४८
शिवाङ्गैश्च तथा ब्राह्मैर्जुहुयात्षोडशं पृथक्
जयादिरभ्याधानं च राष्ट्रभृच्च हुनेत्क्रमात् ४९
आसनं कल्पयेद्विद्वान्स्नानवेद्युपरि न्यसेत्
घृतं शिरोर्पणं कुर्यात्पूर्वोक्तविधिना सह ५०
शिवकुम्भात्समादाय प्रासादं प्रतिमाहृदि

न्यस्त्वा समाहितो भूत्वा यजेद्गन्धादिना बुधः ५१
वर्धन्या बीजमादाय गौर्यास्तु हृदि विन्यसेत्
मूर्तिकुम्भैः शिवं स्नाप्य वर्धनीभिरुमां तथा ५२
स्नपनं कारयेदन्ते यथाविधि पुरःसरम्
शुद्धस्थाने समानीय देवं देवीं तथान्तकम् ५३
वस्त्राभरणमालाभिः पूजयित्वा यथाविधि
नैवेद्यं दापयेद्द्वाभ्यामुपदंशसमन्वितम् ५४
हृदा चाचमनं दद्याद्देवस्य त्वा निवेदयेत्
पुनराचमनं दद्यान्निर्माल्यं तु विसर्जयेत् ५५
ताम्बूलं दापयेत्पश्चाद्धृदयेन समन्वितम्
पश्चाद्विवाहसंस्कारं पूर्वोक्तविधिना कुरु ५६
सप्ताहमुत्सवं कुर्यादेकाहमपि भावयेत्
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ५७
कालारेः स्थापनं प्रोक्तं दक्षिणामूर्तिनः शृणु ५८
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे कालारिस्थापनपटलः पञ्चचत्वारिंशत्तमः

## षट्चत्वारिंशत्तमः पटलः
## दक्षिणामूर्तिस्थापनविधिः

अतः परं प्रवक्ष्यामि दक्षिणामूर्तिनस्ततः
स्थापनं ज्ञानदं लोके राजराष्ट्रविवर्धनम् १
दक्षिणामूर्तिनं कुर्यात्पूर्वोक्तविधिना सह
पूर्वोक्तविधिना धीमानङ्कुराणि समर्पयेत् २
प्रासादस्याग्रतः कुर्यान्मण्डपं चतुरश्रकम्
तण्डुलैः समलङ्कृत्य तिलदर्भैः परिस्तरेत् ३
तन्मध्ये विन्यसेत्पीठं तत्र रत्नानि विन्यसेत्
माणिक्यं चेन्द्रनीलं च मरकतं च मौक्तिकम् ४
वज्रं चैव हृदा धीमान्मध्यादिक्रमशो न्यसेत्
तत्र देवं समायोज्य सुस्निग्धं कारयेत्ततः ५
पञ्चगव्याष्टमृद्भिश्च स्नाप्य रुद्रं समुच्चरन्

स्नाप्य गन्धोदकेनैव पञ्चब्रह्ममुदाहरन् ६
शूलस्थापनकाले तु न्यसेद्रत्नानि मृण्मये
जलाधिवासनं नोक्तं मृण्मयस्य विशेषतः ७
सर्वालङ्कारसंयुक्तं कुर्याद्ग्रामप्रदक्षिणम्
जलतीरे समास्थाय शुद्धिं कृत्वा तु पूर्ववत् ८
वस्त्रकूर्चेन संवेष्ट्य जले चैवाधिवासयेत्
एकरात्रं द्विरात्रं वा प्रहरद्वयमेव वा ९
प्रासादस्याग्रतः कुर्यान्मण्डपं दशहस्तकम्
बिम्बाग्रे वाथ कर्तव्यं मण्डपं चेत्सलक्षणम् १०
चग्तुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्
दर्भमालासमायुक्तं वितानैरुपशोभितम् ११
मण्डपस्य त्रिभागैकं वेदिविस्तारमुच्यते
रत्निमात्रसमुत्सेधं दर्पणोदरसंनिभम् १२
कुण्डानि परितः कुर्याच्चतुर्दिक्षु विशेषतः
चतुरश्रं तु पूर्वायां याम्यायामर्धचन्द्रकम् १३
वृत्तं वै वारुणे भागे पद्मकुण्डं तु चोत्तरे
प्राक्कुण्डवेदिकामध्ये वृत्तं प्राधानिकं कुरु १४
पूर्वोक्तविधिना तेन नाभियोनिसमन्वितम्
पर्यग्निकरणं कृत्वा पुण्याहं तत्र वाचयेत् १५
वेद्यां च स्थण्डिलं कृत्वा अष्टद्रोणेन शालिना
तण्डुलैः समलङ्कृत्य तिलदर्भैः परिस्तरेत् १६
शयनं कल्पयेद्धीमानण्डजाद्यैरनुक्रमात्
शाययेद्दक्षिणामूर्तिं प्राक्शिरश्चोर्ध्ववक्त्रकम् १७
रक्तवस्त्रेण संवेष्ट्य हृदयं मन्त्रं समुच्चरन्
शयनोपरि विन्यस्य कूर्चं चेद्वर्तनान्वितम् १८
शिरःस्थाने न्यसेत्कुम्भं दक्षिणामूर्तिदैवतम्
अभितः कलशानष्टौ लोकपालाधिदैवतान् १९
सकूर्चान्सापिधानांश्च सवस्त्रान्वारिपूरितान्
रत्नहेमसमायुक्तान्पल्लवैरुपशोभितान् २०

पूजयित्वा यथान्यायं गन्धपुष्पादिना हृदा
मङ्गलाष्टकरूपाणि द्वारकुम्भानि योजयेत् २१
यकारादष्टमं बीजं मायानलसमन्वितम्
औकारस्वरसंयुक्तं बिन्दुनादसमन्वितम् २२
कुम्भमध्ये न्यसेद्देवं तद्रूपं च विभावयेत्
इन्द्रादिलोकपालानां बीजं तत्तद्धटे न्यसेत् २३
नैवेद्यं दापयित्वा तु ततो होमं समारभेत्
समिदाज्यचरुं लजांस्तिलसर्षपमाषकान् २४
शतमर्धं तदर्धं वा जुहुयात्तदनन्तरम्
अश्वत्थोदुम्बरप्लक्षन्यग्रोधं जुहुयाद्दिशि २५
पलाशं तु प्रधानस्य पञ्चमेनैव होमयेत्
सद्यादिवक्त्रपर्यन्तं पूर्वादिसमिधो हुनेत् २६
हृदादिनेत्रपर्यन्तं द्रव्याणि जुहुयात्क्रमात्
खदिरं च हुनेद्धीमान्प्रत्येकं तु शतं शतम् २७
एवं जागरणं रात्रौ प्रभाते स्थापनं भवेत्
आचार्यो मूर्तिपैः सार्धं स्नानत्रयमथाचरेत् २८
बिम्बं कुम्भं च वह्निं च पूजयित्वा विशेषतः
जयादिरभ्याधानं च राष्ट्रभृच्च हुनेत्क्रमात् २९
उत्थापयेत्ततो देवं शयनात्कुम्भसंयुतम्
प्रदक्षिणं ततः कृत्वा प्रासादं घोषसंयुतम् ३०
स्नानवेद्यां न्यसेद्देवमासनोपरि देशिकः
मुहूर्तं निरीक्ष्य दैवज्ञो गुरवे संनिवेदयेत् ३१
कुम्भाद्बीजं समादाय प्रतिमस्य हृदि न्यसेत्
व्योमव्यापिनमुच्चार्य अभिषेकं समाचरेत् ३२
कलाङ्गानि ततो न्यस्त्वा पूजयित्वा विधानतः
स्नपनं कारयेदन्ते यथाशक्ति विशेषतः ३३
अचलं चालये स्थाप्य प्रोक्षणेनैव शुद्ध्यति
शुद्धदेशे समादाय पूजयेद्विधिना सह ३४
आचार्य मूर्तिपांश्चैव पूजयित्वा यथाविधि

एवं यः कुरुते मर्त्यो ज्ञानमुक्तिमवाप्नुयात्  ३५
राजराष्ट्रं विवर्धन्ते पुत्रपौत्रविवर्धनम्
स्थापनं दक्षिणामूर्तेः प्रोक्तं भिक्षाटनं शृणु  ३६
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे दक्षिणामूर्तिस्थापनपटलः
षट्चत्वारिंशत्तमः

सप्तचत्वारिंशत्तमः पटलः
भिक्षाटनस्थापनम्

अतः परं प्रवक्ष्यामि यागं भिक्षाटनस्य तु
आयुरारोग्यफलदं पुत्रश्रीकीर्तिवर्धनम्  १
भिक्षाटनं द्विधा प्रोक्तं कपालं कङ्कालमेव च
ब्रह्मकच्छेदने भिक्षां निष्कृत्यर्थं समाचरेत्  २
पादे पादुकसंयुक्तं नानानागविभूषितम्
त्रिणेत्रं चतुर्भुजं रूपं किञ्चिद्वै गमनोन्मुखम्  ३
डमरुं दक्षिणे हस्ते वामहस्ते तु पिञ्छकम्
हरिणीमुखगं हस्तं वामहस्ते कपालकम्  ४
नग्नरूपं विभूषाङ्गं नागभूषासमन्वितम्
कपालमधुना ख्यातं कङ्कालमथ वक्ष्यते  ५
मध्यमे देवगङ्गायाः सलिलाशयमाविशेत्
नारदो नाम महर्षिर्धौम्यपुत्रो महातपाः  ६
अतिवेगेन सा गङ्गा सहस्रमुखमार्गतः
दिवो निभ्रंशनेनैव पतिता हरमूर्धनि  ७
तस्याश्च वेगेनोत्क्षिप्तो मुनिवरो महातपाः
शिवहस्तमनुप्राप्तः शूलं मूर्धनि उत्पतन्  ८
सद्यो मरणमाप्नोति तस्य निष्कृतिकारणम्
भिक्षाटनवशात्प्राप्तं लोकानां स्थितिकारणात्  ९
त्रिणेत्रं चतुर्भुजं रूपं जटामकुटमण्डितम्
पादे पादुकसंयुक्तं किञ्चिद्वै गमनोन्मुखम्  १०
जटामकुटसंयुक्तं चन्द्रालङ्कृतशेखरम्

द्विपचर्माम्बरधरं क्षुरिकाभिरलङ्कृतम् ११
हारकेयूरसंयुक्तं यज्ञसूत्रविभूषितम्
आतोद्यं वामहस्ते तु ब्रह्मघ्नं दक्षिणे करे १२
पिञ्छं वै वामहस्ते तु हरिणीमुखगं परम्
नानाभुजङ्गसंयुक्तं नानाभूतसमाकुलम् १३
भिक्षादेयोन्मुखस्त्रीभिः समन्ताच्च समाकुलम्
एवं कृत्वा विशेषेण स्थापनं हि समाचरेत् १४
शैलजे मृण्मये बिम्बे लोहजे दारुजेऽथवा
रत्नन्यासं प्रकर्तव्यं भित्तिचित्रपटेऽथवा १५
शूलस्थापनकाले तु न्यसेद्रत्नानि मृण्मये
भद्रपीठे न्यसेल्लोहे मध्यमादि समाहितः १६
माणिक्यमिन्द्रनीलं च वैडूर्यं स्फटिकं तथा
मरकतं पद्मरागं च प्रवालं शङ्खमौक्तिकम् १७
दिग्बीजेन न्यसेद्धीमान्ब्रह्ममन्त्रेण मध्यमे
ततोऽक्षिमोक्षणं कुर्यान्मण्डपे समलङ्कृते १८
स्थण्डिलं तत्र कुर्वीत शालिभिश्चतुरङ्गुलम्
तण्डुलैश्च तिलैश्चैव दर्भैश्चैव परिस्तरेत् १९
तत्र देवं समायोज्य प्राङ्मुखं भूतसंयुतम्
अभितः कलशानष्टौ स्थापयेच्च यथाक्रमम् २०
सकूर्चान्सापिधानांश्च सवस्त्रान्वारिपूरितान्
पूजयित्वा स्वनाम्ना तु लोकपालाधिदेवतान् २१
पूर्वोक्तविधिना चैव आचार्यं पूजयेत्ततः
अक्षिद्वययुते ऋक्षे नेत्रमोक्षणमारभेत् २२
हेमसूचिप्रहाराभ्यां पक्ष्मरेखां समालिखेत्
कृष्णमण्डलमालिख्य ज्योतिर्मण्डलमालिखेत् २३
हिरण्यनखयुक्ताभिरङ्गुलीभिर्विचक्षणः
नेत्रमन्त्रं समुच्चार्य प्रोतनेत्रेषु देशिकः २४
सुवर्णदूर्वया विद्वान्मध्वाज्याभ्यां च तर्पयेत्
मधुना पूरितं पात्रं मधुवातेति दर्शयेत् २५

घृतं वै दर्शयेद्धीमान्घृतमिक्षेति मन्त्रतः
सप्तबीजानि संदर्श्य बीजमन्त्रमनुस्मरन् २६
गौर्धेनुभव्यामन्त्रेण धेनुं दृष्ट्वा सवत्सकाम्
ब्रह्मसूक्तेन मन्त्रेण ब्राह्मणान्दर्शयेत्ततः २७
प्रच्छन्नपटमावर्ज्य जनसङ्घान्प्रदर्शयेत्
अचले तत्स्थानदेशे कुर्यान्नयनमोक्षणम् २८
पूर्वोक्तविधिना कुर्यात्प्रतिमाशुद्धिमाचरेत्
पञ्चगव्यैः कषायैश्च मृत्तोयैर्गन्धतोयकैः २९
पवमानं समुच्चार्य पञ्चगव्याभिषेचनम्
यत इन्द्रेति मन्त्रेण शुद्धतोयेन सेचयेत् ३०
पुण्याहं वाचयेत्तत्र पूजयित्वा यथाविधि
महाव्योमेति मन्त्रेण प्रोक्षयेदचलं बुधः ३१
चलं चेत्तदलङ्कृत्य कुर्याद्ग्रामप्रदक्षिणम्
सर्वातोद्यसमायुक्तं नृत्तगेयसमाकुलम् ३२
पिञ्छचामरसंकीर्णं धूपदीपसमाकुलम्
तीरे समतले स्थाप्य शुद्धिं कृत्वा तु पूर्ववत् ३३
नद्यां वापि तटाके वा ह्रदे वाप्यामथापि वा
जलाधिवासनं कुर्यात्कण्ठदघ्नजले बुधः ३४
जलमध्ये प्रपां कुर्याद्वितानध्वजभूषिताम्
चतुष्पादीं न्यसेन्मध्ये तस्य मध्ये न्यसेद्धरम् ३५
एकरात्रं द्विरात्रं वा त्रिरात्रं वाधिवासयेत्
जलाधिवासनं प्रोक्तं मृण्मये भित्तिचित्रके ३६
प्रासादस्याग्रतः कुर्यान्मण्डपं चातिभूषितम्
दशहस्ताष्टहस्तं वा नवहस्तमथापि वा ३७
षोडशस्तम्भसंयुक्तं चतुर्द्वारसमन्वितम्
चतुस्तोरणसंयुक्तं वितानैरुपशोभितम् ३८
दर्भमालासमायुक्तं ध्वजमालोपशोभितम्
मण्डपस्य त्रिभागैकं वेदीविस्तारमुच्यते ३९
रत्निमात्रसमुत्सेधं दर्पणोदरसंनिभम्

परितः कल्पयेत्कुण्डान्मानुषे तु पदे क्रमात् ४०
हस्तमात्रप्रविस्तारं खातं हस्तस्य मात्रकम्
चतुस्त्रिद्व्यङ्गुलोत्सेधं विस्तारं तावदेव तु ४१
चतुरश्रं चतुर्दिक्षु विदिक्षु परिमण्डलम्
मण्डपस्योत्तरे पार्श्वे स्नानश्वभ्रं प्रकल्पयेत् ४२
नालावटसमायुक्तं मेखलाद्वयभूषितम्
जलादुत्तीर्य देवेशं पूर्ववच्छुद्धिमाचरेत् ४३
स्थण्डिलं कारयेद्वेद्यामष्टद्रोणैश्च शालिभिः
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि ४४
तन्मध्ये पद्ममालिख्य तिलदर्भैः परिस्तरेत्
शयनं तस्य मध्ये तु कल्पयेच्छक्तिमन्त्रतः ४५
शक्तिबीजेन संपूज्य प्राक्शिरस्कं निवेशयेत्
रक्तवस्त्रेण संवेष्ट्य हरिणीभूतसंयुतम् ४६
पूजयित्वा यथान्यायं हृदयं मन्त्रमुच्चरन्
ईशानशक्रयोर्मध्ये शिवकुम्भं च वर्धनीम् ४७
स्थापयेत्तौ विशेषेण रत्नहेमसमन्वितौ
सकूर्चौ सापिधानौ च सवस्त्रौ वारिपूरितौ ४८
पूजयित्वा स्वनाम्ना च गन्धपुष्पादिना बुधः
अभितः कलशानष्टावष्टविद्येश्वरात्मकान् ४९
सकूर्चान्सापिधानांश्च स्वस्त्रान्वारिपूरितान्
हेमटङ्कसमायुक्तान्तत्तद्बीजसमायुतान् ५०
नैवेद्यं दापयेद्धीमानुपदंशसमन्वितम्
ताम्बूलं दापयेत्पश्चात्ततो होमं समारभेत् ५१
शयनोपरि न्यसेत्कूर्चमचलं चेत्स्वनामभिः
अश्वत्थोदुम्बरप्लक्षवटाः पूर्वादितः क्रमात् ५२
शम्यर्कखदिराबिल्वाः प्रधानस्य पलाशकम्
समिदाज्यचरुं लाजान्सक्तुमाषतिलानपि ५३
यवसिद्धार्थगोधूमं प्रत्येकं जुहुयाच्छतम्
शिवाग्निं जनयेद्धीमान्पूर्वोक्तविधिना सह ५४

प्रणीताग्निं समानीय दिक्कुण्डेषु विनिक्षिपेत्
सद्यादिभिश्चतुर्दिक्षु विदिक्षु हृदयादिभिः ५५
समिधो जुहुयादग्नौ पञ्चमेन हुनेच्छिवे
हृदयेन हुनेदाज्यं शिरसा च चरुं हुनेत् ५६
हुत्वा लाजं तु शिखया सक्तुं वै कवचेन तु
माषमस्त्रेण जुहुयान्नेत्रेण तु तिलाहुतिम् ५७
यवं हुत्वा तु सद्येन सिद्धार्थं गुह्यकेन वै
पुरुषेण तु गोधूमं प्रत्येकं तु शतं हुनेत् ५८
उपाहुतिं तथा कुर्याद्द्रव्यं प्रतिविशेषतः
त्र्यम्बकेन घृतं हुत्वा देवस्य त्वा चरुं हुनेत् ५९
लाजं हुत्वाग्निमा वाह्य शन्नो देवीति सक्तु च
यस्त्वा हृदा हुनेन्माषं कद्रुद्राय तिलं हुनेत् ६०
यवं यो रुद्रमन्त्रेण त्वं नो अग्नेति सर्षपम्
गोधूमं जुहुयाद्विद्वान्गायत्रीमन्त्रमुच्चरन् ६१
द्रव्यान्ते व्याहृतिं हुत्वा व्याहृत्यन्ते स्पृशेच्छिवम्
एवं जगरणं रात्रौ प्रभाते स्थापनं भवेत् ६२
आचार्यो मूर्तिपैः सार्धं स्नानत्रयमथाचरेत्
जयादिरभ्याधानं च राष्ट्रभृच्च हुनेत्क्रमात् ६३
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः
दक्षिणां दापयेत्तस्मै पूर्वोक्तविधिना सह ६४
मूर्तिपान्पूजयित्वा तु दैवज्ञमपि पूजयेत्
स्विष्टाहुतिं ततः कुर्याद्देवमुत्थापयेद्धृदा ६५
आसनं कल्पयेद्धीमान्स्नानश्वभ्रे च दारवे
आनीय प्रतिमां तत्र शिवकुम्भं च वर्धनीम् ६६
दिक्कुम्भानि समुत्थाप्य कारयित्वा प्रदक्षिणम्
सर्वातोद्यसमायुक्तं स्वस्तिसूक्तसमन्वितम् ६७
स्नानवेद्यां न्यसेद्देवं मृगभूतसमन्वितम्
अष्टत्रिंशत्कलान्यासं ब्रह्माङ्गानि ततो न्यसेत् ६८
हरिणीभूतहृदये स्वनामाद्यक्षरं न्यसेत्

मूर्तिबीजं न्यसेद्धीमान्प्रागादीशान्तमेव च ६९
स्नपनं कारयेदन्ते यथाशक्त्या विशेषतः
पाद्यमाचमनं चार्घ्यं हृदयेन प्रदापयेत् ७०
विशुद्धे मराडपे स्थाप्य पूजयित्वा यथाविधि
नैवेद्यं दापयेद्विद्वानुपदंशसमन्वितम् ७१
पुनराचमनं दद्यान्निर्माल्यं च विसर्जयेत्
ताम्बूलं दापयेत्पश्चादुत्सेधं कारयेत्ततः ७२
एवं यः कुरुते मर्त्यः स पुरायां गतिमाप्नुयात्
राजा विजयमाप्नोति पुत्रपौत्रविवर्धनम् ७३
भिक्षाटनमिदं प्रोक्तं व्यक्ताव्यक्तमतः शृणु ७४
इति श्रीदीप्तशास्त्रे प्रतिष्ठातन्त्रे भिक्षाटनस्थापनपटलः
सप्तचत्वारिंशत्तमः

## ग्रष्टचत्वारिंशत्तमः पटलः
## मुखलिङ्गस्थापनविधिः

ग्रतः परं प्रवक्ष्यामि मुखलिङ्गस्य चैव हि
स्थापनं परमं गुह्यं पुत्रपौत्रविवर्धनम् १
द्वारमानेन वा कुर्याद्गर्भमानेन वा पुनः
उक्तं लिङ्गस्य यन्मानं तन्मानेनैव कारयेत् २
उत्सेधं तु त्रिधा कृत्वा पूजाभागं त्रिधा भवेत्
मध्यमांशे मुखं कुर्यान्मौलिं चैवोर्ध्वभागया ३
ग्रधो ग्रीवां भुजांश्चैव भागेनैकेन कारयेत्
लिङ्गायामत्रिभागेन भुजनिर्गमनं भवेत् ४
ब्रह्मांशं नवधा कृत्वा संत्यजेद्भागपञ्चकम्
मुखनिर्गमनार्थं च चतुर्भागं मुखं भवेत् ५
भुजभागस्तथैकेन मध्यभागे मुखं भवेत्
कृष्णांशं चतुरश्रं स्याद्ब्रह्मांशाष्टाश्रकं भवेत् ६
जटामकुटसंयुक्तं चन्द्रार्धकृतशेखरम्
वसुश्रोत्रं चतुर्नासि लोचनैर्द्वादशैर्युतम् ७

चतुर्मुखस्य लिङ्गस्य नाथोऽयं त्रिमुखं शृणु
ब्रह्मांशं नवधा कृत्वा चतुर्भागं मुखं भवेत् ८
एकैकं मुखमानं स्याद्भुजभागं द्विभागया
अथैकवक्त्रकं कुर्यात्त्रिभागाभिर्विशेषतः ९
भद्रेश्वरमुखं पूर्वं दक्षिणं भीषणं मुखम्
पश्चिमास्यं तथा सौम्यं विरागं चोत्तरं मुखम् १०
पूर्ववक्त्रमतिश्यामं दक्षिणं चाञ्जनप्रभम्
सुशुक्लं पश्चिमं वक्त्रं वामवक्त्रं रक्तकम् ११
चतुरास्यं त्रिरास्यं वा प्रासादे स्थाप्य लिङ्गवत्
एकवक्त्रमतिशुक्लं स्थापयेच्चलवद्बुधः १२
पद्मे वा भद्रपीठे वा ब्रह्मभागं विनिक्षिपेत्
प्रतिमालक्षणं प्रोक्तं स्थापनं शृणु चानल १३
अङ्कुराण्यर्पयेद्धीमान्निर्दिष्टदिनपूर्वके
अचले निक्षिपेद्रत्नं चले रत्नं न निक्षिपेत् १४
स्थण्डिलं शालिभिः कुर्यात्तिलदर्भसमन्वितम्
तस्य मध्ये न्यसेद्देवं सर्वातोद्यसमन्वितम् १५
अभितः कलशानष्टौ द्रोणतोयेन पूरितान्
सकूर्चान्सापिधानांश्च कल्पयेत्तु यथाक्रमम् १६
गन्धादिना समभ्यर्च्य नेत्रमोक्षणमारभेत्
हेमसूचिप्रहाराभ्यां पक्ष्मरेखां समालिखेत् १७
कृष्णमण्डलमालिख्य ज्योतिर्मण्डलमालिखेत्
नेत्रमन्त्रं समुच्चार्य प्रोतहेमनखेन च १८
वामाघोरसमन्त्राभ्यां मध्वाज्याभ्यां च तर्पयेत्
पञ्चगव्यैः कषायैश्च मृद्भिरद्भिः प्रसेचयेत् १९
पुण्याहं वाचयेदन्ते पूज्य गन्धादिना बुधः
रथमारोपयेन्मूर्तिं कुर्याद्ग्रामप्रदक्षिणम् २०
रथरङ्गं तथा कुर्यादीशानेनैव पूजयेत्
वस्त्रकूर्चसमायुक्तं जले चैवाधिवासयेत् २१
एकरात्रं द्विरात्रं वा त्रिरात्रं वा जलोषितम्

प्रासादस्याग्रतः कुर्यान्मण्डपं चतुरश्रकम् २२
दशद्वादशहस्तं वा नवहस्ताष्टहस्तकम्
षोडशस्तम्भसंयुक्तं चतुर्द्वारसमन्वितम् २३
चतुस्तोरणसंयुक्तं वितानध्वजसंयुतम्
तन्मध्ये वेदिकां कुर्यात्त्रिहस्तं विस्तरं क्रमात् २४
रत्निमात्रसमुत्सेधं तालमात्रमथापि वा
चतुरश्राणि कुण्डानि दिक्षु कुर्याद्यथाक्रमम् २५
आग्नेयादीशकोणान्तं वृत्तकुण्डानि कारयेत्
ईशानशक्रयोर्मध्ये वृत्तं प्राधानिकं कुरु २६
सर्वेषां हस्तविस्तीर्णं गाम्भीर्यं तत्समं भवेत्
मेखलात्रयसंयुक्तं नाभियोनिसमन्वितम् २७
गोमयालेपनं कृत्वा शालिपिष्टैर्विचित्रयेत्
स्थण्डिलं वेदिकामध्ये तण्डुलैः सह कल्पयेत् २८
तिलदर्भैः समाकीर्य शयनं तत्र कल्पयेत्
तन्मध्ये विन्यसेद्देवं प्राक्शिरस्कमधोमुखम् २९
गन्धपुष्पादिना पूज्य रक्तवस्त्रेण वेष्टयेत्
शिवकुम्भं वर्धनीं च तत्तद्देशे तु विन्यसेत् ३०
पूर्वोक्तं शिवमन्त्रं तु शिवकुम्भे तु विन्यसेत्
वर्धन्यां वर्धनीबीजं तत्तद्रूपं तु भावयेत् ३१
अभितोऽष्टघटान्यस्त्वा शिवतोयेन पूरयेत्
सवस्त्रान्सापिधानांश्च लोकपालाधिदैवतान् ३२
बीजानि लोकपालांश्च तत्तत्कुम्भेषु विन्यसेत्
पूजयित्वा यथान्यायं नैवेद्यान्तं विशेषतः ३३
दिशास्वध्ययनं कुर्यात्ततो होमं समाचरेत्
समिदाज्यचरुं क्षीरं लाजं चापि तथा मधु ३४
अपूपं फलसिद्धार्थं तिलं वै जुहुयात्क्रमात्
पलाशोदुम्बराश्वत्थवटाः पूर्वदितः क्रमात् ३५
शम्यर्कखादिरं बिल्वं विदिक्षु परिकल्पयेत्
पलाशं तु प्रधानस्य प्रत्येकं जुहुयाच्छतम् ३६

शिवकुण्डे शिवः प्रोक्तः दिक्कुण्डेषु भवादिकान्
शिवाग्निं जनयेत्पूर्वं पञ्चसंस्कारसंयुतम् ३७
प्रणीताग्निं समादाय दिक्कुण्डेषु विनिक्षिपेत्
सद्यादि जुहुयाद्दिक्षु विदिक्षु हृदयादयः ३८
आज्यादितिलपर्यन्तं ब्रह्माङ्गैर्जुहुयात्क्रमात्
रुद्रसूक्तैर्ब्रह्मसूक्तैर्विष्णुसूक्तैश्च होमयेत् ३९
एवं जागरणं रात्रौ प्रभाते स्थापनं भवेत्
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ४०
जयादिरभ्याधानं च राष्ट्रभृच्च हुनेत्क्रमात्
स्विष्टान्तं होमयित्वा तु ततः स्थापनमारभेत् ४१
उत्थाप्य शयनाद्देवं शन्नो देवीति मन्त्रतः
अचलं गर्भगेहे तु स्नानवेद्यां न्यसेच्चलम् ४२
रत्नन्यासं ततः कुर्याद्गर्भगेहे विधानतः
आसनं कल्पयेद्धीमान्स्नानश्वभ्रे विशेषतः ४३
तत्र देवं समायोज्य कलाङ्गानि ततो न्यसेत्
सुमुहूर्ते सुनक्षत्रे सुतिथौ स्थापयेद्बुधः ४४
शिवकुम्भात्समादाय प्रासादं प्रतिमस्य च
हृदये विन्यसेद्धीमान्पिण्डिकायां तु वर्धनीम् ४५
दिशाकुम्भैश्च संस्नाप्य व्योमव्यापिमुदाहरन्
शुद्धदेशं समानीय वस्त्राभरणमालया ४६
अर्चनोक्तं समभ्यर्च्य नैवेद्यान्तं हृदा बुधः
मुखवासं ततो दद्याद्धृदयेन तु मन्त्रतः ४७
एकाहमुत्सवं कुर्यात्सप्ताहं वापि कारयेत्
एवं यः कुरुते मर्त्यः पुत्रपौत्रकलत्रकैः ४८
इह लोके सुखं प्राप्य देहान्ते मुक्तिमाप्नुयात्
व्यक्ताव्यक्तं इदं प्रोक्तं लिङ्गोद्भवमतः शृणु ४९
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे मुखलिङ्गस्थापनपटलः अष्टचत्वारिंशत्तमः

## नवचत्वारिंशत्तमः पटलः

## लिङ्गोद्भवस्थापनविधिः

अतः परं प्रवक्ष्यामि यागं लिङ्गोद्भवस्य च
पुत्रपौत्रा विवर्धन्ते राजराष्ट्रविवर्धनम् १
कल्पान्ते प्रापिते काले जलौघैरमरादिभिः
नष्टास्तु देवताः सर्वा जगत्स्थावरजङ्गमाः २
हरिब्रह्माऽण्डमध्यस्थौ विवादं चक्रतुस्तदा
जगदीशोऽह्यहं ब्रह्मा विष्णुमाह च सोऽपि तम् ३
दृष्ट्वा विवादमुभयोर्विस्मितः प्रभुरव्ययः
महाजलौघमध्ये तु स्थूणस्तेजोमयः स्थितः ४
दृष्ट्वा स्थितं तथापन्नौ विस्मयं परमं ततः
परस्परं संप्रधार्य ब्रह्मा विष्णुश्च तावुभौ ५
विष्णुर्वराहरूपेण निर्मज्जति दिदृक्षया
ब्रह्मा तु हंसरूपेण दिवं प्राप्तो दिदृक्षया ६
तौ च नागमतां शम्भोरन्तं विस्मयमागतौ
समेत्य तौ हरिब्रह्मा लिङ्गं तुष्टावतुस्तदा ७
आविर्बभूव तन्मध्ये रूपं वै चन्द्रशेखरम्
कृताञ्जलिपुटौ भूत्वा स्तुतौ देवं त्रियम्बकम् ८
तदा प्रभृति ब्रह्माद्या लिङ्गं संस्थाप्य पूजिताः
असुरा राक्षसा दैत्या गन्धर्वाः सर्व एव च ९
ऋषयः किन्नरा यक्षा यातुधाना नरास्तथा
लिङ्गं संस्थाप्य चादाय पूजयन्ति यथाविधि १०
सौवर्णैराजतैर्वापि ताम्रैश्चैवारकूटकैः
शिलामृद्दारुभिः कुर्याद्धरिब्रह्मसमन्वितम् ११
गर्भगेहसमं वापि गर्भार्धं वा त्रिपादकम्
तद्द्वारोत्सेधमानं वा स्तम्भमानमथापि वा १२
एतल्लिङ्गोच्छ्रयं मानं नाहमर्धेन कारयेत्
स्तम्भत्रिभागमानेन स्तम्भान्तः प्रतिमां कुरु १३
परशुं कृष्णमृगं च वरदाभयहस्तकम्

चन्द्रशेखरवत्कुर्याद्धरिं ब्रह्माणमेव च १४
ब्रह्माणं दक्षिणे कुर्याद्विष्णुं वामे तु कल्पयेत्
हृदयेऽञ्जलिसंयुक्तौ तौ द्वौ तु विकृताननौ १५
एवं कृत्वा विशेषेण ततः स्थापनमारभेत्
रत्नन्यासं न कर्तव्यं कर्तव्यं चाक्षिमोक्षणम् १६
मण्डपे स्थण्डिलं कुर्याच्छालिभिस्तण्डुलैः सह
तिलदर्भैः समाकीर्य लिङ्गं तत्रैव शाययेत् १७
ब्रह्माणं दक्षिणे स्थाप्य विष्णुं वै वामदेशतः
शैलजं भित्तिचित्रं वा मृण्मयं तत्र कारयेत् १८
सूच्या वह्निकरेणैव पक्ष्मरेखां समालिखेत्
कृष्णमण्डलमालिख्य ततो वै दृष्टिमण्डलम् १९
नेत्रमन्त्रं समुच्चार्य प्रोतहेमनखैस्तथा
पितामहानन्तयोश्च चक्षुर्मोक्षणमारभेत् २०
मध्वाज्यसूक्तमुच्चार्य तर्पयेन्मधुसर्पिषा
शुद्धिं कृत्वा विशेषेण पुण्याहं वाचयेत्तदा २१
जलाधिवासनं कुर्यात्पूर्ववल्लोहकर्मणि
चित्रे वा चित्रभासे वा शैले वापि विधीयते २२
देवस्याभिमुखं स्थाप्य जलाधारां जलान्विताम्
वस्त्रेण कण्ठमावेष्ट्य दर्पणं तत्र निक्षिपेत् २३
दर्पणे प्रतिबिम्बाङ्गं जलमध्ये विनिक्षिपेत्
एकरात्रं द्विरात्रं वा प्रहरं पञ्चमेव वा २४
आलयाग्रे तु कर्तव्यं मण्डपं विधिपूर्वकम्
अचलं स्यात्तदग्रे तु कुर्यान्मण्डपमुत्तमम् २५
द्वादशं दशहस्तं वा नवहस्ताष्टहस्तकम्
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् २६
वितानध्वजमालाभिर्दर्भमालासमन्वितम्
तन्मध्ये वेदिकां कुर्याद्रत्निमात्रसमुच्छ्रयाम् २७
द्विहस्तमात्रं विस्तारं दर्पणोदरसंनिभम्
चतुरश्राणि कुण्डानि चतुर्दिक्षु प्रकल्पयेत् २८

ईशानशक्रयोर्मध्ये कुण्डं प्राधानिकं कुरु
हस्तमात्रप्रविस्तारं खातं वै हस्तमात्रकम् २९
मेखलात्रयसंयुक्तं नाभियोनिसमन्वितम्
गोमयालेपनं कृत्वा पुण्याहं तत्र वाचयेत् ३०
स्थण्डिलं कारयेद्वेद्यां शलिभिश्चतुरङ्गुलम्
तण्डुलैः शोभितं कृत्वा तिलदर्भैः परिस्तरेत् ३१
शयनं कल्पयेद्धीमानण्डजाद्यैरनुक्रमात्
आवर्ज्य जलाधारं तु शुद्धिं कृत्वा विशेषतः ३२
शयने शाययेल्लिङ्गं वेधाविष्णुसमन्वितम्
कूर्चाधिवासनं कुर्यादचलं चेद्विचक्षणः ३३
कूर्चं कृत्वा शतैर्दर्भैः प्रतिमायाश्च तत्समम्
तत्तद्देवं स्पृशेत्कूर्चैः शाययेच्छयनोपरि ३४
प्रागग्रं स्थापयित्वा तु तदानन्तपितामहौ
गन्धादिना समभ्यर्च्य मूर्तिकुम्भत्रयं न्यसेत् ३५
अभितः कलशानष्टौ विन्यसेद्वसुदैवतान्
द्रोणार्धतोयसंपूर्णान्सवस्त्रान्सापिधानकान् ३६
गन्धादिना समभ्यर्च्य ततो होमं समारभेत्
बिल्वोदुम्बरन्यग्रोधं पलाशं च यथाक्रमम् ३७
समिद्भिः सर्पिषा चैव चरुभिश्च यवैस्तथा
सिद्धार्थैस्तिललाजैश्च जुहुयादष्टशतं प्रति ३८
शिवाग्निं जनयेत्पूर्वं पञ्चसंस्कारसंयुतम्
शिवावाहनं पूर्वे तु वह्निं ग्राह्य क्षिपेद्दिशि ३९
अग्न्याधानादिकं सर्वं पूर्वोक्तविधिना कुरु
सद्यादिभिश्चतुर्दिक्षु जुहुयात्समिधः क्रमात् ४०
ईशानेन शिवाग्नौ तु समिधं जुहुयात्क्रमात्
घृतमिक्षे घृतं हुत्वा देवस्य त्वा चरुं हुनेत् ४१
आ वो राजा यवस्योक्तं सर्षपं कवचेन तु
यत्ते यमं तिलस्योक्तं लाजं वै शिरसा हुनेत् ४२
वेधसाग्निं ततो हुत्वा प्रत्येकं पञ्चविंशतिः

एवं जागरणं रात्रौ प्रभाते स्थापनं भवेत् ४३
आचार्यो मूर्तिपैः सार्धं स्नात्वोद्धूल्य च भस्मना
जयादिरभ्याधानं च राष्ट्रभृच्च हुनेत्क्रमात् ४४
आचार्यं मूर्तिपांश्चैव दैवज्ञमपि पूजयेत्
चलं स्यात्स्नानवेद्यां तु प्रतिष्ठां हि समाचरेत् ४५
अचलं गर्भगेहे तु स्थापनं हि समाचरेत्
सुमुहूर्ते न्यसेद्बीजं शिवाख्यं प्रतिमाहृदि ४६
ब्राह्मं च वैष्णवं बीजं तत्तद्धृदि सुविन्यसेत्
स्नापयेद्वसुकुम्भैश्च तत्तद्बीजं समुच्चरन् ४७
अर्चनोक्तं समभ्यर्च्य नैवेद्यं दापयेद्धृदा
पुनराचमनं दद्यान्निर्माल्यं च विसर्जयेत् ४८
ताम्बूलं दापयेद्धीमान्हृदयेनैव मन्त्रतः
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ४९
लिङ्गोद्भवमिदं प्रोक्तं सकलाराधनं शृणु ५०

इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे लिङ्गोद्भवस्थापनपटलः
नवचत्वारिंशत्तमः

## पञ्चाशत्तमः पटलः
## सकलाराधनविधिः

अतः परं प्रवक्ष्यामि सकलाराधनं परम्
द्विविधं सकलं प्रोक्तं चलं चैवाचलं तथा १
चलं लोहमयं सर्वं सकलं चैव कथ्यते
सुखासनं विवाहं चोमास्कन्दसहितं तथा २
वृषारूढं पुरारिं च सन्ध्यानृत्तेन्दुशेखरम्
अर्धनारीं च हर्यर्धं चण्डेशानुग्रहं परम् ३
कामारिं कालनाशं च दक्षिणामूर्तिरूपिणम्
भिक्षाटनं मुखलिङ्गं लिङ्गोद्भवं तथैव च ४
अन्यच्च प्रतिमारूपं भेदेनैव सुपूजयेत्
कर्मार्चसहितं पूज्यं मृण्मयं चित्रयुक्शिलाम् ५

भित्तिचित्रपटं तद्वच्चलं मणिमयं शिवम्
नाभ्यन्तं वापि जान्वन्तं कर्मार्चाप्रतिमोच्छ्रयम्  ६
तत्तदाकृतिकं श्रेष्ठं कर्मार्चायाश्चतुर्भुजम्
कृष्णापरशुसंयुक्तं वरदाभयहस्तकम्  ७
त्रिनेत्रं जटाधरं रूपं कुर्याल्लक्षणसंयुतम्
अर्चाहीनाः स्युर्लोहानां शिलायां चित्रहीनके  ८
करयेत्कर्मबिम्बं तु लोहपूर्णं सलक्षणम्
प्रोक्षणं चाथ कर्तव्यं पुरुषेणैव मन्त्रतः  ९
आर्द्रार्चनं वानार्द्रं वा करयेल्लोहकर्मणि
सर्वोपचारसंयुक्तां मूर्तिं चैव समर्चयेत्  १०
केवलं द्वारपूजा स्यात्परिवारादिकं विना
बल्यन्तं नाचरेद्धीमान्नैवेद्यान्तं समाचरेत्  ११
पूजायां सन्ध्यापूर्वे तु स्नानं कृत्वा यथाविधि
प्रविशेदालयं पश्चात्पुष्पहस्तो विचक्षणः  १२
प्रदक्षिणं ततः कृत्वा पूर्वोक्तविधिना सह
संमार्जनोपलेपं च विधानाद्धूपदीपकैः  १३
सर्वतः समलङ्कृत्य अस्त्रमन्त्रं समुच्चरन्
द्वारस्य बाह्यतश्चाग्रे मण्डलं हस्तमात्रकम्  १४
कृत्वा तन्मध्यमे स्थाप्य भूमिं भानुं गणाधिपम्
तत्तद्बीजेन संपूज्य गन्धपुष्पादिना बुधः  १५
घटं च वर्धनीं चैव शरावं शङ्खमेव च
पाद्यमाचमनं चार्घ्यपात्रं चैव तथैव च  १६
क्षालयेदस्त्रमन्त्रेण हृदयेन निरीक्षयेत्
गन्धपुष्पमथार्घ्यं च तण्डुलं चोपदंशकम्  १७
प्रोक्षयेद्धृदयेनैव दधिक्षीरघृतादिकम्
द्वारपूजां ततः कुर्याद्गणेशं श्रीसरस्वतीम्  १८
द्वारस्य दक्षिणे पार्श्वे गङ्गादेवीं च पूजयेत्
वामतो यमुनां पूज्य नन्दिकालौ तथैव च  १९
प्रविश्याभ्यन्तरे धीमान्यवनीमपनीय च

पूर्वसन्ध्यार्चितं पुष्पमपनीयास्त्रमुच्चरन् २०
वस्त्राण्याभरणान्यन्यान्यपनीय विचक्षणः
पुष्पं शिरसि निक्षिप्य अर्चयेदासनत्रयम् २१
धर्मं ज्ञानं च वैरग्यमैश्वर्यं चैव विन्यसेत्
अधर्मादींश्च शक्रादिमहादिक्षु क्रमान्न्यसेत् २२
विष्णुं तन्मध्यमे स्थाप्य ततः पद्मासनं यजेत्
सद्येनावाहनं कुर्याद्वामदेवेन स्थापनम् २३
अघोरेण निरोद्धव्यं सान्निध्यं पुरुषेण तु
अर्घ्यं शिरसि दातव्यं हृदयं मन्त्रमुच्चरन् २४
पाद्यमाचमनं चार्घ्यं हृदयेन प्रदापयेत्
अभिषेकं ततः कुर्याद्ब्रह्मभिः पञ्चभिः क्रमात् २५
प्रोक्षणं चाथ कर्तव्यं रुद्रसूक्तं समुच्चरन्
सर्वद्रव्योपचारैश्च स्नापयेत्स्नपनोक्तवत् २६
वस्त्रैराभरणैश्चैव उपवीतं तथैव च
हृदयेन प्रदातव्यं यथासङ्ख्यक्रमेण तु २७
पाद्यं सद्येन दातव्यं वामेनाचमनं ददेत्
अर्घ्यं दद्यादघोरेण हृदा माल्यं च चन्दनम् २८
धूपं वै वक्त्रमन्त्रेण दीपं वै नेत्रमन्त्रतः
गौरीमुत्तरतः पूज्य नन्दीशं पूर्वतो यजेत् २९
दक्षिणे गजराजानं स्कन्दं संपूज्य वारुणे
आग्नेय्यादीशकोणान्तमस्त्रराजानमर्चयेत् ३०
दत्वा हृदा च नैवेद्यमुपदंशसमन्वितम्
दध्याज्यगुलखण्डं च सुपक्वफलसंयुतम् ३१
हृदा चाचमनं दद्याद्देवस्य त्वा निवेद्यकम्
निर्माल्यं तु विसृज्याथ चण्डेशाय निवेदयेत् ३२
प्रतिमायां न कर्तव्यं तथा चान्योपचारकम्
हृदा चाचमनं दद्यान्निर्माल्यं तु विसर्जयेत् ३३
कौतुकानां निवेद्यं तु शुद्रैर्भोज्यं च उच्यते
अभोज्यं सूर्यभक्तानां सूर्यस्य च निवेदनम् ३४

अन्येषामपि सर्वेषां भोक्तव्यं भास्करस्य तु
विघ्नेशस्य तु नैवेद्यं भोक्तव्यं च बुभुक्षुभिः ३५
भोजनात्स्त्रीविवृधिः स्याज्ज्येष्ठादीनां निवेदनम्
आरोग्यं वर्धते भुक्तं दुर्गादेव्या निवेदनम् ३६
धनमायुश्च वर्धन्ते श्रीदेव्यास्तु निवेदनम्
मोट्या निवेदितं भुक्तं पुत्रपौत्रविवर्धनम् ३७
अभुक्तं ब्राह्मणानां तु मातॄणां तु निवेदनम्
सदारोग्यविवृद्धिः स्यात्क्षेत्रपालनिवेदनम् ३८
नैवेद्यं तु कुमारस्य भोजनाज्जयमाप्नुयात्
तदा प्रवर्तते ज्ञानं वागीश्वरीनिवेदनम् ३९
भोजनं सर्वजन्तूनामुमादेव्या निवेदनम्
विष्णोर्निवेदनं भोज्यं पर्यष्टिपरिचारकैः ४०
धातुर्निवेदनं तद्वद्ब्राह्मणानां सुभोजनम्
अभोज्यं ब्राह्मणानां तु सदा शास्तुर्निवेदनम् ४१
नैवेद्यं लोकपालानामारोग्यं कुरुते सदा
लिङ्गे निवेदितं यत्तन्निर्माल्यमिति कीर्तितम् ४२
शिवे निवेदितं द्रव्यं निर्माल्यं तदभोजनम्
अप्स्वग्नौ वा गवां भूमौ गजानां निक्षिपेत्क्रमात् ४३
क्षुत्कृशो वा शरीरोऽपि निर्माल्यं न तु दापयेत्
निर्माल्यलङ्घनं कृत्वा प्राजापत्यं समाचरेत् ४४
प्रमादाद्भोजनं कुर्यादतिकृच्छ्रं समाचरेत्
स्नानं संस्पर्शने कार्यं क्षालनं पाणिपादयोः ४५
प्रतिमानां प्रदातव्यं ताम्बूलं हृदयेन तु
नमस्कारं च कुर्वीत क्षमस्वेति वदेद्बुधः ४६
एवं यः कुरुते मर्त्यो भुक्तिमुक्तिमवाप्नुयात्
सकलार्चा समाख्याता शृणु पाशुपतस्य च ४७

इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे सकलाराधनपटलः पञ्चाशत्तमः

एकपञ्चाशत्तमः पटलः
पाशुपतयागविधिः

अतः परं प्रवक्ष्यामि यागं पाशुपतस्य तु
आयुरारोग्यफलदं सर्वशत्रुविनाशनम् १
विचित्रे मण्डपे रम्ये वितानपरिशोभिते
दिग्ध्वजैः पुष्पमालाभिर्धूपदीपसमाकुलम् २
तस्य मध्ये न्यसेत्पीठं नवरत्नानि विन्यसेत्
माणिक्य मध्यमे न्यस्त्वा पूर्वादीनि प्रदक्षिणम् ३
इन्द्रनीलं च वैडूर्यं नीलं स्फटिकमौक्तिकम्
प्रवालं पद्मरागं च पुष्परागं नवाक्षरैः ४
पीठे संयोजयेद्देवं सुस्निग्धं कारयेत्ततः
नेत्रद्वययुते ऋक्षे दृष्टिमोक्षणमारभेत् ५
पूर्वाभिमुखमास्थाप्य प्रतिमां स्थण्डिलोपरि
अभितः कलशानष्टौ गन्धतोयसमन्वितान् ६
सकूर्चान्सापिधानांश्च लोकपालाधिदैवतान्
पूजयित्वा स्वनाम्ना तु प्रतिमां पूजयेद्बुदा ७
रुक्मसूचिप्रहाराभ्यां पक्ष्मरेखां समालिखेत्
कृष्णमण्डलमालिख्य ततो वै दृष्टिमण्डलम् ८
तर्जन्या दक्षिणे नेत्रे प्रोतहैमनखेन तु
अनामिका वामनेत्रे मध्यमा या च मध्यमे ९
मध्वाज्याभ्यां च सन्तर्प्य हेमदूर्वाङ्कुरेण तु
मधुवाता ऋतायेति मधुपात्रं प्रदर्शयेत् १०
घृतं वै घृतसूक्तेन गां गौर्धेनुं प्रदर्शयेत्
ब्राह्मणान्दर्शयेद्धीमान्ब्रह्मजज्ञानमन्त्रतः ११
प्रच्छन्नपटमावर्ज्य जनसङ्घान्प्रदर्शयेत्
पुण्याहं वाचयित्वा तु कुशाक्षतसमन्वितम् १२
पञ्चगव्येन संस्नाप्य पवमानमुदीरयन्
यत इन्द्रेति मन्त्रेण गन्धतोयेन सेचयेत् १३
गव्याधिवासनार्थे तु एकरात्रं विशेषतः

शुद्धिं कृत्वा विधानेन कुर्याद्ग्रामप्रदक्षिणम् १४
जलतीरे समानीय पूर्ववच्छुद्धिमाचरेत्
वस्त्रयुग्मेन संवेष्ट्य कुशकूर्चेन वेष्टयेत् १५
अधिवास्य जले मध्ये चतुष्पाद्युपरि न्यसेत्
आलयस्याग्रतः कुर्यान्मण्डपं चतुरश्रकम् १६
द्वादशं दशहस्तं वा नवहस्ताष्टहस्तकम्
षोडशस्तम्भसंयुक्तं द्वादशस्तम्भमेव वा १७
पादान्तं वा कपोतान्तं भक्तिमानमथोच्छ्रयम्
मण्डपस्य तु मध्ये तु कुर्याद्वेदिं द्विहस्तकाम् १८
रत्निमात्रसमुत्सेधं तालमात्रामथापि वा
चतुरश्रं धनुर्वृत्तं पद्मकुण्डं चतुर्दिशि १९
पूर्वकुण्डस्य पूर्वे तु कुण्डं प्राधानिकं कुरु
सर्वेषां हस्तविस्तीर्णं गाम्भीर्यं तत्समं भवेत् २०
त्रिमेखलासमायुक्तं द्वित्रिभिश्चतुरङ्गुलैः
पञ्चहोमं त्रिहोमं वा एकहोममथापि वा २१
मण्डपस्योत्तरे पार्श्वे स्नानश्वभ्रं प्रकल्पयेत्
तालत्रयं तु विस्तारं मेखलाभ्यामलङ्कृतम् २२
एकैकं चतुरङ्गुल्यं विस्तारोत्सेधतत्समम्
उत्तरे जलमार्गं स्यान्मध्यमे योगपीठकम् २३
मण्डपे मध्यमे धीमान्वितानध्वजतोरणैः
स्थण्डिलं कारयेद्वेद्यामष्टद्रोणैश्च शालिभिः २४
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि
जलादुत्तीर्य देवेशं शुद्धिं कृत्वा विशेषतः २५
शयनं कल्पयेद्वेद्यामण्डजाद्यैरनुक्रमात्
तत्रैव शाययेन्मूर्तिं प्राक्शिरश्चोर्ध्ववक्त्रकम् २६
पूजयित्वा हृदा मन्त्री रक्तवस्त्रेण वेष्टयेत्
अभितः कलशानष्टावाढकद्वयपूरितान् २७
सकूर्चान्सापिधानांश्च सवस्त्रान्हेमसंयुतान्
अस्त्रकुम्भं न्यसेदेवं हैमशूलं सवस्त्रकम् २८

गन्धादिना समभ्यर्च्य नैवेद्यं तु निवेदयेत्
ध्यात्वा पाशुपतं रूपं त्रिणेत्रं च चतुर्भुजम् २९
अभयं दक्षिणं हस्तं वरदं वामहस्तकम्
त्रिशूलं दक्षिणे हस्ते अक्षमालां च वामके ३०
रौद्रदृष्टिं महारूपं शिखाकोटिसमुज्ज्वलम्
षान्तं यान्तसमायुक्तं मन्वक्षरसमन्वितम् ३१
बिन्दुनादसमायुक्तं फट्कारेण समन्वितम्
कुम्भमध्ये न्यसेद्बीजं शूलमुद्रां प्रदर्शयेत् ३२
अस्त्रबीजं समुच्चार्य मुकुलीं पद्ममुद्रिकाम्
तद्रूपं समनुस्मृत्य पूजयित्वा यथाविधि ३३
पलाशाश्वत्थवह्निं च ततोदुम्बरखादिरम्
शतमर्धं तदर्धं वा होमयेद्देशिकोत्तमः ३४
समिदाज्यचरून् लाजान्यवसर्षपमाषकान्
होमद्रव्याणि सप्तैवं जुहुयात्क्रमशः पुमान् ३५
शिवाग्निं जनयेत्पूर्वं पञ्चसंस्कारसंयुतम्
शिवाग्नौ जुहुयात्सर्वं शतमस्त्रेण मन्त्रवित् ३६
सद्यं वाममघोरं च पुरुषं च चतुर्दिशि
हृदादिनेत्रपर्यन्तं हुत्वा द्रव्याणि षट्क्रमात् ३७
ब्राह्मैः पाशुपतैर्मन्त्रैर्हुत्वा स्पृष्ट्वा विशेषतः
उपाहुतिं ततः कुर्याद्धृदयाद्यैरनुक्रमात् ३८
जयादिरभ्याधानं च राष्ट्रभृच्च हुनेत्क्रमात्
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ३९
मूर्तिपान्पूजयेत्तत्र पर्यष्टिपरिचारकान्
शयनाद्देवमुत्थाप्य रात्रिबन्धं विसर्जयेत् ४०
पुण्याहं वाचयेत्तत्र स्वस्तिसूक्तसमन्वितम्
आसनं कल्पयेत्तत्र स्नानश्वभ्रे विशेषतः ४१
सर्वातोद्यसमायुक्तं नृत्तगेयसमन्वितम्
धूपदीपसमायुक्तं पिञ्छचामरसंयुतम् ४२
आलयं तु परिभ्राम्य स्नानवेद्युपरि न्यसेत्

कलाङ्गानि ततो न्यस्त्वा कुर्याद्धृतशिरोऽर्पणम्  ४३
आचार्यो मूर्तिपैः सार्धं रुद्रकुम्भानि चोद्धरेत्
ततो मुहूर्तमन्वीक्ष्य चास्त्रबीजं न्यसेद्धृदि  ४४
षष्ठवर्गाद्द्वितीयं तु प्रथमस्वरसंयुतम्
चतुर्थाद्यं द्वितीयाद्यं पञ्चमाद्यं तु षोडश  ४५
कुम्भाद्बीजं समादाय प्रतिमाया हृदि न्यसेत्
दिशाकुम्भोदकैः स्नाप्य पश्चात्स्नपनमाचरेत्  ४६
अर्चनोक्तं समभ्यर्च्य नैवेद्यं पायसं ददेत्
ताम्बूलं दापयेत्पश्चान्मुखवाससमन्वितम्  ४७
प्रोक्तं पाशुपतं यागं सर्वशत्रुविनाशनम्  ४८
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे पाशुपतयागपटलः एकपञ्चाशत्तमः

## द्विपञ्चाशत्तमः पटलः

### क्षत्रियस्थापनम्

प्रतिष्ठाया विधिं वक्ष्ये नृपस्य महीष्या सह
कामदं शुभदं लोके सर्वदेवप्रियावहम्  १
उत्तरायणकाले तु प्रतिष्ठां सम्यगाचरेत्
तपस्तपस्यमासोर्वा मधुमाधवयोरपि  २
शुक्रमासे नभस्ये च शुक्लपक्षे समाचरेत्
पूर्वोक्तेषु च मासेषु श्रेष्ठो वासन्तिको ऋतुः  ३
द्वितीयायां तृतीयायां पञ्चम्यां वाथ षष्ठिके
सप्तम्यां वा दशम्यां वा एकादश्यां तिथौ कुरु  ४
प्रतिमा तु प्रकर्तव्या यजमानोच्छ्या पुनः
अधिकं कारयेद्विद्वान्पुत्रपौत्रविनाशनम्  ५
कण्ठान्तं वापि बाह्वन्तं चिबुकान्तमिदं कुरु
अष्टतालप्रमाणेन नृपं वै परिकल्पयेत्  ६
अर्धतालविहीनः स्यान्महत्याः स्वरसोदयः
सर्वलक्षणसंयुक्तं सर्वाभरणभूषितम्  ७
राजानं कारयेद्धीमान्धनुर्बाणसमायुतम्

खड्गखेटकसंयुक्तं हृदयेऽञ्जलिसंयुतम् ८
स्थानकं वा स्थितं वाथ शयनं यानकं तु वा
देव्यास्तु वामहस्ते तु शुकं वा चोत्पलं तु वा ९
सिंहासनस्थितं वाथ पद्मपीठोपरि स्थितम्
ब्रह्मस्थाने सभास्थाने गृहमध्ये महादिशि १०
प्रासादं कारयेत्प्राज्ञो हर्म्यं वा मण्डपं तु वा
कूटं वा गोपुरं वाथ त्रिहस्तं पञ्चहस्तकम् ११
सप्तहस्तं नवहस्तमेकादशाकरं तु वा
कूटशालासमायुक्तं प्राकारपरिखान्वितम् १२
अङ्कुराण्यर्पयेद्विद्वान्निर्दिष्टदिनपूर्वके
नवाहे वाथ सप्ताहे पूर्वोक्तविधिना कुरु १३
तण्डुलैरभितो भूष्य तिलदर्भैः परिस्तरेत्
तन्मध्ये विन्यसेत्क्षेत्रं देवीमत्रैव विन्यसेत् १४
सचिवादीन्सह स्थाप्य अक्षिमोक्षणमारभेत्
अभितः कलशानष्टौ कर्पूरोदकपूरितान् १५
स्थापयित्वा यथान्यायं लोकपालाधिदैवतान्
गन्धपुष्पादिना पूज्य पक्ष्मरेखां समालिखेत् १६
कृष्णमण्डलमालिख्य हेमसूच्या समन्त्रतः
ज्योतिर्मण्डलमालिख्य नेत्रमन्त्रमुदाहरन् १७
सुवर्णदूर्वया विद्वान्मध्वाज्याभ्यां तु तर्पयेत्
सौवर्णमण्डलं दृश्य राजतं मण्डलं पुरः १८
पशुमादर्शयेत्पश्चाद्ब्राह्मणान्दर्शयेत्ततः
सद्योजातं समुच्चार्य अक्षतान्शिरसि न्यसेत् १९
वामदेवेन मन्त्रेण क्षीरस्नानं समाचरेत्
दधिक्राव्णो दधिस्नानं घृतमिक्षेति मन्त्रतः २०
ईशानेनैव मन्त्रेण गोमूत्रेणाभिषेचयेत्
अघोरमन्त्रमुच्चार्य शुद्धतोयेन सेचयेत् २१
वस्त्राभरणमाल्यं च स्वनामाद्येन पूजयेत्
ग्रामप्रदक्षिणं कुर्यात्सर्वालङ्कारशोभितम् २२

गजाश्वरथयूथैश्च नरयूथैः सहानल
स्वस्तिवाचकमुच्चार्य शनैः कुर्यात्प्रदक्षिणम् २३
पुण्याहं वाचयेत्तत्र पवमानेन प्रोक्षयेत्
प्रासादस्याग्रतः कुर्यान्मण्डपं नातिदूरतः २४
द्वादशं दशहस्तं वा नवहस्ताष्टहस्तकम्
वितानोपरिसच्छन्नं ध्वजयूथैः समाकुलम् २५
रत्नदामैः स्वर्णदामैर्मुक्तादामैर्विभूषितम्
तन्मध्ये वेदिकां कुर्याद्रत्निमात्रसमुच्छ्रयाम् २६
कुण्डानि कारयेद्धीमान् चतुर्दिक्षु च चक्रवत्
आग्नेयादिषु कोणेषु योन्याकाराणि कारयेत् २७
स्थण्डिलं कारयेद्विद्वानष्टद्रोणेन शलिना
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि २८
लाजपुष्पकुशैश्चैव क्रमेणैव परिस्तरेत्
स्वनाम्ना चैव मन्त्रेण शाययेज्जगदीश्वरम् २९
गन्धाद्यैरर्चयित्वा तु रक्तवस्त्रेण वेष्टयेत्
महिषीं वामपार्श्वे तु शाययेदूर्ध्ववक्त्रकाम् ३०
उर्वशीं मेनकां रम्भां तिलोत्तमामभितो न्यसेत्
जितिर्वैरजितिर्वापि नृपबेरं सुकारयेत् ३१
सहशक्तिसमायुक्तं वजिति जीव तु वा
नृपाणां मरणकाले स्त्रियश्च मरणं विना ३२
राजकुम्भं शिरःस्थाने स्थाप्य देवीघटं तथा
लोकपालाधिदैवत्यानभितोऽष्टघटान्न्यसेत् ३३
सकूर्चान् सापिधानांश्च सवस्त्रान् पल्लवैर्युतान्
सहिरण्यान्वारिपूर्णान्विन्यसेत्तु स्वनामतः ३४
स्वनामाद्यं समुद्धृत्य षष्ठस्वरसमायुतम्
औकारस्वरसंयुक्तं बिन्दुनादसमन्वितम् ३५
इदं बीजं समुद्धृत्य घटमध्ये तु विन्यसेत्
एवमेवं समुद्धृत्य शक्तिकुम्भे तु विन्यसेत् ३६
धनुः शरं च खड्गं च खेटकं क्षुरिका ततः

कृत्वा सौवर्णकं छत्रं नृपकुम्भे तु विन्यसेत्  ३७
शुद्धसौवर्णकं पद्मं देवीकुम्भे तु विन्यसेत्
पूजयित्वा यथान्यायं नैवेद्यान्तं विशेषतः  ३८
रुद्रसूक्तं पुरुषसूक्तं विष्णुसूक्तं तथैव च
पवमानं हिरण्यं च चतुर्होता तथैव च  ३९
सप्तहोता दशहोता आ वो राजा तथैव च
अरुणं वह्निहोतारं शतरुद्रं क्रमेण च  ४०
ब्रह्मसाम ज्येष्ठसाम देवं ब्राह्म समुच्चरन्
चतुर्दिक्ष्वध्ययनं कुर्याद्बीजमुख्यास्त्रसंयुतम्  ४१
पलाशखादिराश्वत्थवटं पूर्वादितः क्रमात्
शमीबिल्वमशोकं च मयूरं च विदिक्षु वै  ४२
समिदाज्यं चरुं चैव लाजं वै तिलसर्षपान्
त्रिमधुमधुरैर्द्रव्यैर्द्रव्यान्ते होमकर्मणि  ४३
अग्निसंस्कारकं सर्वं हृदयादिं समाचरेत्
हृदयेन समिद्धोममीशानेन घृतं हुनेत्  ४४
चरुं हुत्वास्त्रमन्त्रेण लाजं वै घोरमन्त्रतः
तिलं पाशुपतास्त्रेण सर्षपं चास्त्रमन्त्रतः  ४५
मधुवातेति मन्त्रेण मधु चैव हुनेद्बुधः
प्रत्येकं तु शतं हुत्वा रात्रौ जागरणं बुधः  ४६
प्रभाते मूर्तिपैः सार्धं स्नानत्रयमथाचरेत्
आचार्यं पूजयेत्तत्र मूर्तिपानथ पूजयेत्  ४७
भगणं पूजयेदन्ते अध्ययनं तदन्तके
शयनान्नृपमुत्थाप्य महिषीं चाप्सरोगणान्  ४८
ततः स्विष्टाहुतिं कुर्यात्पूर्णाहुतिमथाचरेत्
स्नानवेद्युपरि न्यस्त्वा नृपं शक्तिसमन्वितम्  ४९
न्यासं कुर्यान्नृपं शक्तिं हृदयादि विचक्षणः
हृदये हृदयं न्यस्य शिरः शिरसि विन्यसेत्  ५०
शिखायां तु शिखां न्यस्त्वा कवचं स्तनमध्यतः
अस्त्रं हस्तप्रदेशे तु नेत्रं नेत्रे तु विन्यसेत्  ५१

एवं न्यस्त्वा विशेषेण देव्याश्च परिवारकैः
सर्वातोद्यसमायुक्तं नृत्तगेयसमाकुलम् ५२
नृपकुम्भात्समुत्थाप्य तद्बीजं हृदि विन्यसेत्
देवीबीजं तथा न्यस्त्वा एवमेव क्रमेण तु ५३
स्नानासने समारोप्य स्नानकुम्भोदकं न्यसेत्
स्वर्णादिलोहकैश्चैव चित्राभासं तथैव च ५४
दर्पणे चाभिषेकं तु तन्मन्त्रं हृदि विन्यसेत्
तत्तन्मन्त्रं समुच्चार्य प्रतिमां चाभिषेचयेत् ५५
वस्त्रमाभरणं माल्यं हृदयेन तु दापयेत्
गन्धादिं धूपदीपांश्च दद्याद्धृदयमन्त्रतः ५६
स्थापयेन्मूलहर्म्ये तु प्राङ्मुखोदङ्मुखक्रमात्
ततो देवीं समुद्धृत्य नृपपार्श्वे विनिक्षिपेत् ५७
नैवेद्यं पायसं दद्यात्ताम्बूलं तु निवेदयेत्
उत्सवं च ततः कुर्यात्सर्वातोद्यसमन्वितम् ५८
एवमेव क्रमेणैव शिवभक्तांश्च स्थापयेत्
स्थापयेत्तु विशेषेण तत्तन्मन्त्रं समुच्चरन् ५९
सकलार्चामहं वक्ष्ये लोकशान्त्यैककारणम्
स्नानत्रयं पुरा कृत्वा आचम्य विधिवत्ततः ६०
प्रदक्षिणत्रयं कृत्वा आलयं तु प्रवेशयेत्
अङ्गन्यासं करन्यासं पूर्वोक्तविधिना सह ६१
अस्त्रमन्त्रं समुच्चार्य कवाटोद्घाटनं कुरु
प्रविश्य गर्भगेहे तु यवनीमपनीय च ६२
स्थानशुद्धिं ततः कुर्यात्पात्रशुद्धिं च कारयेत्
द्रव्यशुद्धिं ततः कृत्वा बिम्बशुद्धिं समाचरेत् ६३
अस्त्रमन्त्रं समुच्चार्य प्रोक्षयेत्सकुशेन तु
वस्त्रं दद्याद्धृदा मन्त्री गन्धं वामेन योजयेत् ६४
पुष्पं कवचमन्त्रेण पुष्पं दद्यात्सुगन्धिकम्
धूपं दद्याद्धृदा मन्त्री दीपं तु दशबीजतः ६५
द्वारस्य दक्षिणे भागे गङ्गां यमुनामुत्तरे

श्रीदेवीमूर्ध्वदेशे तु द्वारस्याधः क्षितीश्वरीम् ६६
तत्प्रासादस्य परितो लोकपालान्समर्चयेत्
नैवेद्यं दापयेद्राज्ञो देवस्य त्वेति मन्त्रतः ६७
हृदा चाचमनं दद्यान्नैवेद्यं तु विसर्जयेत्
ताम्बूलं दापयेद्विद्वान्फलत्रयसमन्वितम् ६८
शिवगायत्रिमन्त्रेण नित्याग्निं च समाचरेत्
एककालं द्विकालं वा त्रिकालं चार्चयेत्क्रमात् ६९
यस्मिन्राष्ट्रे कृतं ह्येवं सर्वशान्तिकरं परम्
लोकपालाः प्रियाः सर्वे सर्वे देवगणाः प्रियाः ७०
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे क्षत्रियस्थापनपटलः द्विपञ्चाशत्तमः

## त्रिपञ्चाशत्तमः पटलः
## महर्षिस्थापनविधिः

अतः परं प्रवक्ष्यामि ऋषीणां स्थापनं परम्
आयुरारोग्यजयदं पुत्रपौत्रविवर्धनम् १
वसिष्ठं काश्यपं कालमगस्त्यं कौशिकं तथा
अङ्गिराः पराशरश्च आर्या वै मुनिसत्तमाः २
सनकश्च सनन्दश्च सनत्कुमारः पुलस्त्यकः च
भारद्वाजः कुमारश्च वाल्मीको भृङ्गिनारदौ ३
रोमशश्च तथान्येषां स्थापनं शृणु चानल
प्रासादबाह्यके स्थाप्याः तत्तत्स्थानेऽथवापरे ४
प्रासादस्याग्रतः कुर्यान्मण्डपं चतुरश्रकम्
षोडशस्तम्भंसंयुक्तं चतुर्द्वारविभूषितम् ५
विचित्रे मण्डपे रम्ये वितानोपरिशोभिते
दिग्ध्वजैः पुष्पमालाभिर्धूपदीपैः समाकुले ६
तन्मध्ये विन्यसेद्देवं विधिवद्विन्यसेद्बुधः
अष्टदिक्षु च कुण्डानि चतुरश्राणि विन्यसेत् ७
दिशासु चतुरश्राणि वृत्तानि विदिशासु वा
मृण्मये चित्रके चैव भित्तिचित्रपटे तथा ८

रत्नन्यासः प्रकर्तव्यः कर्तव्यः शैलजादिषु
सौवर्णं राजतं ताम्रमारकूटं च कांस्यकम् ९
प्रतिमां कारयेद्धीमानृषितालैर्विशेषतः
पीठबन्धं न्यसेत्पश्चाद्रत्नन्यासं तु कारयेत् १०
माणिक्यं मध्यमे स्थाप्य पूर्वादीनि प्रदक्षिणम्
इन्द्रनीलं च वैडूर्यं नीलं स्फटिकमौक्तिकम् ११
प्रवालं पद्मरागं च पुष्परागं नवाक्षरैः
पीठे संयोजयेद्विद्वान्सुदृढं कारयेत्ततः १२
नेत्रद्वययुते ऋक्षे दृष्टिमोक्षणमारभेत्
पूर्वाभिमुखमास्थाय ऋषीन्संस्थापयेद्बुधः १३
स्थाण्डिलोपरि विन्यस्य कलशांश्च विदिक्षु च
गन्धतोयेन संपूर्णान्वस्त्ररत्नसमन्वितान् १४
सकूर्चान्सापिधानांश्च सवस्त्रान्पल्लवैर्युतान्
पूजयेन्मुनिमन्त्रेण स्वनामाद्येन वा पुनः १५
हेमसूचीप्रहाराभ्यां पक्ष्मरेखां समालिखेत्
कृष्णमण्डलमालिख्य ततो वै दृष्टिमण्डलम् १६
तर्जन्या दक्षिणे नेत्रे प्रोतहेमनखेन च
वामे त्वनामिकया च नेत्रद्वययुतं लिखेत् १७
मध्वाज्यैस्तर्पयेद्धीमान्हेमदूर्वाङ्कुरेण तु
मधुवाता ऋतायेति मधुपात्रं प्रदर्शयेत् १८
घृतं मिमिक्षे मन्त्रेण घृतसूक्तेन वा पुनः
गौर्धेनुभव्यामन्त्रेण सवत्सां गां प्रदर्शयेत् १९
ब्राह्मणान्दर्शयेद्धीमान्ब्रह्मजज्ञानमन्त्रतः
प्रच्छन्नपटमावर्ज्य जनसङ्घान्प्रदर्शयेत् २०
पुण्याहं वाचयित्वा तु पञ्चगव्याभिषेचनम्
पञ्चगव्येन संप्रोक्ष्य पवमानमुदीरयन् २१
एतद्द्रव्येन संप्रोक्ष्य गन्धतोयेन सेचयेत्
शुद्धिं कृत्वा विशेषेण कुर्याद्ग्रामप्रदक्षिणम् २२
जलतीरे समास्थाप्य पूर्ववच्छुद्धिमाचरेत्

वस्त्रयुग्मेन संवेष्ट्य कुशपुष्पैस्तु वेष्टयेत्  २३
अधिवास्य जले मध्ये चतुष्पाद्युपरि न्यसेत्
आलयस्याग्रतः कुर्यान्मण्डपं चतुरश्रकम्  २४
द्वादशं दशहस्तं वा नवहस्ताष्टहस्तकम्
पूर्वोक्तविधिना कल्प्य मण्डपं कारयेद्बुधः  २५
नवहोमं पञ्चहोमं त्रीणि चैकमथापि वा
मण्डपस्योत्तरे पार्श्वे स्नानश्वभ्रं प्रकल्पयेत्  २६
तालत्रयं तु विस्तारं मेखलाभ्यामलङ्कृतम्
एकैकं चतुरङ्गुल्यं विस्तारोत्सेधतत्समम्  २७
उत्तरे जलमार्गं स्यान्मध्यमे योगपीठिका
मण्डपं मण्डयेद्धीमान्वितानध्वजशोभितम्  २८
स्थण्डिलं कारयेद्वेद्यामष्टद्रोणेन शालिना
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि  २९
जलादुत्तीर्य च मुनीञ्छुद्धिं कृत्वा विशेषतः
शयनं कल्पयेद्धीमानृषिमन्त्रमनुस्मरन्  ३०
अण्डजाद्यैरनुक्रम्य शयने शाययेन्मुनीन्
मुनीन्संपूजयेद्धीमान्पुष्पादिभिर्विशेषतः  ३१
पूजयित्वा हृदा मन्त्री रक्तवस्त्रेण वेष्टयेत्
अभितः कलशानष्टौ सकूर्चान् +++++  ३२
ऋषीकुम्भं न्यसेद्दिक्षु विदिक्षु विन्यसेद्बुधः
गन्धादिभिः समभ्यर्च्य नैवेद्यं तु निवेदयेत्  ३३
ध्यात्वा सर्वान्मुनींश्चैव मुन्येकं वा यथाक्रमम्
अगस्त्यं प्रथमं न्यस्त्वा अन्यांस्तु तदनन्तरम्  ३४
अभयं दक्षिणं हस्तं वरदं वामहस्तकम्
कुम्भमध्ये न्यसेद्बीजं बीजमुद्रां प्रदर्शयेत्  ३५
होमद्रव्याणि सप्तैव जुहुयात्क्रमशः पुनः
अग्निष्टोमादितत्सर्वं जुहुयात्तु यथाक्रमम्  ३६
ऋषिमन्त्रं जपित्वा तु द्रव्यान्ते व्याहृतिं हुनेत्
स्वनामाद्यक्षरैर्युक्तं मायानलसमन्वितम्  ३७

बिन्दुनादसमायुक्तं मुनिमन्त्रं समुद्धरेत्
समिदाज्यचरून् लाजान्सर्षपांश्च यवांस्तिलान् ३८
प्रत्येकं तु शतं हुत्वा इषे त्वोर्जेति मन्त्रतः
ऋृषिमन्त्रं जपित्वा तु स्पृष्ट्वा स्पृष्ट्वा तु होमयेत् ३९
जयादिरभ्याधानं च राष्ट्रभृच्च हुनेत्क्रमात्
आचार्यो मूर्तिपैः सार्धं निद्राकुम्भमथोद्धरेत् ४०
ततो मुहूर्तमन्वीक्ष्य ऋृषिमन्त्रं समुच्चरन्
शक्तिं तु प्रथमं कुर्याद्बिन्दुनादसमन्वितम् ४१
अगस्त्यमन्त्रमुच्चार्य तन्नाम ऋृषि योजयेत्
एतद्बीजं समुच्चार्य ऋृषीन् संस्थापयेद्गुरुः ४२
महाभोजनसंयुक्तं तदन्ते स्नपनं कुरु
ब्राह्मणान्भोजयेत्तत्र पर्यष्टिपरिचारकान् ४३
ताम्बूलं दापयेत्तत्र मुखवाससमन्वितम्
ऋृषीणां स्थापनं प्रोक्तं कालनिर्देशनं शृणु ४४
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे महर्षिस्थापनविधिपटलः त्रिपञ्चाशत्तमः

## चतुष्पञ्चाशत्तमः पटलः
### दुर्गास्थापनविधिः

वक्ष्येदुर्गाप्रतिष्ठां तु राजवेश्मगृहादिषु
युगे कृते त्वष्टभुजं श्वेतवर्णं प्रकीर्तितम् १
त्रेतायां षड्भुजं कुर्याद्रक्तवर्णं प्रकीर्तितम्
चतुर्भुजं द्वापरे च कृष्णवर्णमुदाहृतम् २
चतुर्भुजं कलियुगे श्यामवर्णं प्रकीर्तितम्
द्विभुजं कल्पयेद्धीमान्द्विजादीनां गृहार्चने ३
चक्रखड्गशरं चैव अभयं सव्यपार्श्वके
शङ्खं वै खेटकं चैव शार्ङ्गं वरदमेव च ४
शूलं वै कल्पयेद्धीमान्तथैवाष्टभुजे क्रमात्
वक्ष्यते षड्भुजस्यैव खड्गं वै शरसंयुतम् ५
अभयं सव्यके कुर्याच्छङ्खं शार्ङ्गं तथैव च

वरदं कल्पयेत्तत्र एवं ध्यायेद्विचक्षणः  ६
+++++++++दिनशास्त्रेषु वित्तमः
शङ्खचक्राभयवरं चतुर्भुजे प्रकीर्तितम्  ७
अभयं वरदं चैव द्विभुजं परिकल्पयेत्
चतुर्भुजं राजधान्यां यजेद्वै द्विभुजं गृहे  ८
द्विभुजं चतुर्भुजं चैव शान्तिपुष्टिश्रियं ददेत्
वनेषु पर्वते चैव स्थाप्यमष्टभुजं भवेत्  ९
षड्भुजे राजकाम
चतुर्भुजं चाधुनोच्यते  १०
राजवेश्मगृहे सर्वब्राह्मणादिगृहे गृहे
प्रतिमां कारयेद्धीमान्श्रीकाम्यं तु जयार्थकम्  ११
नित्यं वाप्यायुषो वृद्ध्यै दुर्गादेवीं प्रपूजयेत्
एवं चतुर्भुजं वक्ष्ये श्रावयेच्छास्त्रवित्तमः  १२
राजवेश्मगृहे वापि प्रासादे वा पृथग्यजेत्
कर्षणादिप्रतिष्ठान्तं कल्पयेत्स्थापकोत्तमः  १३
पञ्चवर्गतृतीयं तु पञ्चमस्वरभूषितम्
बिन्दुनादसमायुक्तं दुर्गादेव्या हृदि न्यसेत्  १४
पञ्चदुर्गेति मन्त्रेण उत्तरादि यथा क्रमम्
उमा दुर्गा च लक्ष्मी च सावित्री च सरस्वती  १५
स्वनामाद्येन मन्त्रेण पूजयेत्तु यथाक्रमम्
दुर्गादेवीप्रतिष्ठा च अर्चनं वक्ष्यते मया  १६
सर्वशान्तिकरं श्रेष्ठं सर्वसिद्धिकराय च
सर्वदोषनिवृत्यर्थं ग्रामवृद्धिकरं भवेत्  १७
राजा विजयमाप्नोति सर्वशत्रुविनाशनम्
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे दुर्गास्थापनपटलः चतुष्पञ्चाशत्तमः

## पञ्चपञ्चाशत्तमः पटलः
## स्नानविधिः

अतः परं प्रवक्ष्यामि स्नानमार्गविधिं परम्

मृत्पिराडं गोमयं पुष्पं तिलमामलकं कुशम् १
दन्तकाष्ठं गृहित्वा तु नदीं गच्छेत्समाहितः
नद्यां वाप्यां तटाके वा कूपे वापि चतुर्विधम् २
कूपाद्दशगुणं वापि वापीस्नानं विधीयते
वाप्याः शतगुणं ज्ञेयं तटाकं तु यथाक्रमम् ३
तटाकात्सहस्रगुणं नद्याः स्नानं तदुत्तमम्
कोटिकोटिगुणं प्रोक्तं समुद्रसङ्गमं भवेत् ४
पञ्चस्नानानि विप्राणां विहितानि विशुद्धये
स्नानं वारुणमाग्नेयं दिव्यं वायव्यमानसे ५
वारुणं वारिणा स्नानमाग्नेयं भस्मना भवेत्
वृष्ट्या सातपया दिव्यं वायव्यं राजसा गवाम् ६
मन्त्रस्नानमिति प्रोक्तं पञ्चधा स्नानमुत्तमम्
अधुना वारुणं स्नानं शृणु तत्वेन चानल ७
नद्यादीनि च यत्सिद्धं सम्भवस्नानमाचरेत्
शुचौ देशे समासीनः प्राङ्मुखोदङ्मुखक्रमात् ८
प्लक्षोदुम्बरनिम्बाश्च अपामार्गं करञ्जकम्
आम्रं वै सर्वसिद्धिः स्याद्विशेषात्सर्वकामदम् ९
पाषाणं चेष्टकाचूर्णं मरीचेन परिच्छदम्
उत्तरे दशने वामे दक्षिणे तदनन्तरम् १०
अधरे दक्षिणे वामे दन्तशुद्धिः प्रकीर्तिता
निर्मलं दशनं यावत्तावद्वै दन्तधावनम् ११
ततस्तालुविशोध्यं तु तैलं बिम्बेति शोधयेत्
पादप्रक्षालनं कृत्वा आचम्य विधिना बुधः १२
जलतीरे विधातव्यं क्षालयित्वा तु देशिकः
शिरोऽवकुराठनं कृत्वा मौनेन तु विसर्जयेत् १३
नालिकेरफलमात्रं मृदं तत्र निवेशयेत्
हृदयेन तु मन्त्रेण कृत्वा भागत्रयं बुधः १४
दक्षिणोत्तरपूर्वं च पुरुषाघोरवामतः
पुरुषेण मृदं ग्राह्य सर्वाङ्गमपि लेपयेत् १५

वामदेवमृदं ग्राह्य तीर्थं तत्रैव निक्षिपेत्
गोमयं चाङ्गलेपं तु अङ्गं चैव तु मर्दयेत्  १६
आमलकं शिरो लिप्यं पुष्पं हस्तेन संग्रहेत्
शिवमन्त्रं न्यसेत्तीर्थे तस्मिन्स्नानं समाचरेत्  १७
अघमर्षं ततः कृत्वा ब्रह्माङ्गं तु जपेद्गुरुः
जलस्नानं पुरा कृत्वा मन्त्रस्नानं ततः कुरु  १८
नाराचास्त्रप्रयोगेण प्रक्षिपेज्जलमध्यमे
एवं स्नात्वा तु तन्मध्ये उपस्पृश्य हृदा पुनः  १९
पुनर्वै गोमयेनैव सर्वाङ्गं संस्पृशेद्बुधः
शिरो वैशानमन्त्रेण मुखं तत्पुरुषेण तु  २०
अघोरेण च हृल्लिप्य गुह्यं वामेन लेपयेत्
पादयोः सद्यमन्त्रेण लेपयित्वा तु मन्त्रवित्  २१
पवित्रैर्व्योममन्त्रेण धारयित्वा तु मार्जयेत्
प्रासादेन तु मन्त्रेण मार्जयेत्सप्तपञ्चसु  २२
कलशमुद्रेण मन्त्रज्ञः प्रासादेनाभिषेचयेत्
पञ्चविंशतिधा चाग्निपञ्चविंशति तर्पणम्  २३
नाभिमात्रजले स्थित्वाभिमुखः सूर्यसंनिधौ
तर्पयित्वा तु तन्मध्ये सपवित्रशिवाङ्गकैः  २४
विद्येश्वरशिवाङ्गं च रुद्रैकादश एव च
अष्टमूर्त्यधिपैश्चैव द्वादशादित्य एव च  २५
तीर्थमासाद्य मन्त्रेण हृदिना शिवमन्त्रतः
सर्वाङ्गं लेपयित्वा तु मार्जयित्वा पवित्रकैः  २६
स्थापयेज्जलमध्ये तु मर्षणं तु त्रिभिस्त्रिभिः  २७
हिरण्यशृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचितः  १
यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः  २
यन्मे मनसा वाचा कर्मणा वा दुष्कृतं कृतम्  ३
तन्न इन्द्रो वरुणो बृहस्पतिः सविता च पुनन्तु पुनः पुनः  ४
अथाञ्जलिना उपस्पृश्य  २८
सुमित्रा न आप ओषधयः सन्तु  १

दुर्मित्रास्तस्मै भूयासुर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मः २
एतन्मन्त्रं जपयित्वा त्वघमर्षणमाचरेत्
पञ्चब्रह्मशिवाङ्गैश्च त्रिपदैरघमर्षणम् २९
अन्तर्जले विधानेन सर्वाङ्गेनैव दर्शयेत्
दर्शयेच्च शरीरार्धं मुखमग्रे तु वा पुनः ३०
अर्धाङ्गस्य सहस्रं वै निमग्ने कोटिरुच्यते
ध्यानयुक्तोऽभिनिष्क्रम्य क्रमेण च ततः परम् ३१
ततः सूर्य इति प्रातः मध्याह्ने आप उच्यते
सायेऽग्निरिति जप्त्वा तु सन्ध्योपासनमारभेत् ३२
मित्रः सत्ये इमं मेति सन्ध्यात्रयमुपासते
स्थित्वोपास्यत मध्याह्ने उपन्यासीति पश्चिमम् ३३
एकाहं तु यथाशक्त्या प्राणायामं ततो जपेत्
देवानृषीन्पितृंश्चैव वामाघोरकसद्यकैः ३४
तर्पयित्वा यथान्यायं यथा पूर्वोक्तलक्षणम्
अप्रशस्तं निशि स्नानं रवेश्चान्यत्र दर्शनात् ३५
वृत्रस्य रुधिरं नित्यं स्रवन्ति निशि निम्नगाः
तस्मात्स्नानं च पानं च न कुर्वीत कदाचन ३६
न रात्रौ परिगृहीण्याद्देवार्थं चात्मनार्थकम्
स्वर्णमग्निसमक्षं वा प्राणायामेन वा जलम् ३७
तस्माद्दिवैव गृह्णीयाद्देवार्थं चात्मनाथ वै
एवं समाचरेन्नित्यं शिवमन्त्रं समुच्चरन् ३८
फट्कारेण तु मन्त्रेण शिवतीर्थं समाददेत्
प्रोतवस्त्रं तु संगृह्य ग्राह्यवस्त्रं विसर्जयेत् ३९
शिवधाम नयेत्पश्चात्प्रदक्षिणं तु कारयेत्
प्रणम्य दण्डवद्भूमौ शिवं परमकारणम् ४०
यत्र यत्र गृहद्वारे कवाटद्वयमिष्यते
तत्र तत्र कवाटे तु सप्तदेवान्समर्चयेत् ४१
भूवङ्गं च पतङ्गं च ऊर्ध्वाधः परिकल्पयेत्
विमलं च सुबाहुं च कवाटस्थाधिदेवताः ४२

श्रियं सरस्वतीं चैव ऊर्ध्वे तु परिकल्पयेत्
तत्स्कन्धपट्टिकामध्ये विघ्नेशं पूजयेत्ततः ४३
स्वनामाद्येन मन्त्रेण गन्धपुष्पादिनार्चयेत्
अस्त्रमेन्त्रेण मतिमान्तन्मुद्रां च प्रदर्शयेत् ४४
कवाटोद्घाटनं कृत्वा प्रविशेन्मण्डपं बुधः
ततश्च शोधनीं बध्वा हुंकारेण तु शोधयेत् ४५
जलस्नानमिदं प्रोक्तं भस्मस्नानमथ शृणु ४६
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे स्नानविधिपटलः पञ्चपञ्चाशत्तमः

## षट्पञ्चाशत्तमः पटलः
## भस्मस्नानविधिः

अतः परं प्रवक्ष्यामि भस्मस्नानविधिं परम्
नन्दा भद्रा च सुरभिः सुशीला सुमती स्मृताः १
एवं पञ्च सुविख्याता देवतार्थेन निर्मिताः
देवब्राह्मनृपाणां च पञ्चगव्यं विशुद्धये २
नन्दा क्षीरोद्भवं श्रेष्ठं भद्रायां दधिरुच्यते
सुरभेर्घृतमेतद्धि सुशीला मूत्रमुच्यते ३
सुमती कपिला वर्णा गोमयं तद्विधीयते
कपिलागोमयं श्रेष्ठं सितागोमयमेव वा ४
हस्ते संगृह्य हृदिना शुष्कं वै शिरसा पुनः
शिखामन्त्रेण दह्येत सद्योजातेन ग्राहयेत् ५
मृत्कुम्भे वामतः स्थाप्य कवचेन तु रक्षयेत्
दक्षिणेन करेणैव वामहस्ते तु विन्यसेत् ६
सद्यमन्त्रेण चैशान्यामभिमन्त्र्य सुसत्कृतम्
भस्माधारे हृन्मन्त्रेण शङ्खे वा ताम्रपात्रके ७
श्रेष्ठं सौवर्णपात्रं स्याद्राजतं मध्यमं भवेत्
कन्यसं ताम्रकं पात्रमलाभे मृण्मयं भवेत् ८
अलाबुपात्रमधमं पैत्तलं वाथ मध्यमम्
पञ्चब्रह्मषडङ्गैश्च व्योमव्यापिं जपेत्सकृत् ९

शिर उद्धूलमीशेन मुखं तत्पुरुषेण तु
ग्रीवाकण्ठेऽप्यघोरेण हृदि बाहुप्रकोष्ठयोः १०
जठरे नाभिकोर्परे पृष्ठेऽप्युरसि विन्यसेत्
बहुरूपेण मन्त्रेण धूलयेत्तु विशेषतः ११
वामदेवेन मन्त्रेण गुह्यं चैव च धूलयेत्
ऊरू च जानुनी चैव जङ्घयोः स्फिग्द्वयोरपि १२
पादयोरुभयोश्चैव चाङ्गुष्ठे सद्यमन्त्रतः
देशिकादीनां सर्वेषां त्रिपुण्ड्रं तु विधीयते १३
मूर्ध्नि ग्रीवाललाटे तु कर्णे बाहुप्रकोष्ठके
कोर्परे हृदये चैव नभौ पार्श्वद्वयोरपि १४
त्रिपुण्ड्रं षोडशस्थाने कारयेद्वै शिवाश्रमी
भस्मस्नानं हि शुद्धं हि अर्चनायोग्यमेव हि १५
नृपाणां चैव वैश्यानां त्रिपुण्ड्रं कारयेद्बुधः
तुर्याङ्गुलं द्विजानां तु शुद्राणां तु त्रियङ्गुलम् १६
मूर्ध्नि ललाटे कण्ठे च कर्णे हृदयनाभिके
हस्तयोरुभयोः षड्भिः पादयोरुभयोरपि १७
एषु स्थानं परे न्यस्त्वा शूद्राणां तु विधीयते
त्रिपुण्ड्रं भस्मस्नानं च त्रिपुण्ड्रं वा समाचरेत् १८
सर्वपापविशुद्धिः स्याच्छिवेन सह मोदते
त्रिपुण्ड्रस्थानमेवोक्तं त्रिपुण्ड्रदैवतं शृणु १९
शिरःस्थाने स्वयं ब्रह्मा ललाटे स्कन्ददेवता
कण्ठे विनायकप्रीतिरश्विन्योः श्रोत्रयोरपि २०
हृदये तु ममप्रीतिर्बाह्वोर्विष्णुप्रियं भवेत्
नाभौ वसुन्धरा चैव पृष्ठे च पितरस्तथा २१
नवाङ्गुलं तु विस्तारं देशिकानां विधीयते
सप्ताङ्गुलं तु विस्तारं ब्राह्मणानां प्रशस्यते २२
पञ्चाङ्गुलं तु विस्तारं क्षत्रियाणां त्रिपुण्ड्रकम्
चतुरङ्गुलं तु वैश्यानां त्रिपुण्ड्रं सर्वकामिकम् २३
त्रियङ्गुलं तु शूद्राणां स्त्रीणामेकाङ्गुलं भवेत्

तत्तज्जातीयस्त्रीणां तु तत्तदेव विधीयते २४
पञ्चब्रह्मषडङ्गैश्च भस्म चैवाभिमन्त्रयेत्
भस्म सव्येन गृह्णीयाद्वामहस्ते तु विन्यसेत् २५
शिवीकृतेन तोयेन तद्भस्मना तु योजयेत्
उभयोर्हस्तयोर्बध्वा भस्म पीड्य सकृत्सकृत् २६
मूर्धादिपादपर्यन्तं भस्मोद्धूल्य यथाक्रमम्
स्नाने तु शिवमन्त्रेण स्नानमाग्नेयमुत्तमम् २७
तस्माद्वारुणमुत्सृज्य स्नानमाग्नेयमाचरेत्
भस्मस्नानमिदं प्रोक्तं सर्वसंपत्करं नृणाम् २८
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे भस्मस्नानविधिपटलः षट्पञ्चाशत्तमः

## सप्तपञ्चाशत्तमः पटलः
### अष्टबन्धनविधिः

अतः परं प्रवक्ष्यामि अष्टबन्धविधिक्रमम्
आयुरारोग्यदं चैव पुत्रपौत्रविवर्धनम् १
सर्वारिष्टविनाशार्थं सर्वशान्तिकरं परम्
लिङ्गपीठान्तरे योज्यमष्टबन्धं प्रकीर्तितम् २
लिङ्गपीठान्तरे तोयं स्रवन्तं राष्ट्रनाशनम्
सर्वसस्यविनाशं तु सर्वरोगविवर्धनम् ३
तद्दोषशमनार्थं तु अष्टबन्धं प्रकारयेत्
गुललाक्षामधूच्छिष्टं परागा कीर्तिका समाः ४
एतेषां तु समं ज्ञेयं शुद्धसर्जरसं तथा
तदर्धं चेष्टकाचूर्णं घनचूर्णमिति स्मृतम् ५
पलेन पाचयित्वा तु क्रमेण इति योजयेत्
लाक्षा सर्जरसं सिक्था कुरुविन्दं सगुग्गुलुम् ६
नारङ्गुलतैलेन अष्टबन्धं प्रकीर्तितम्
एवं क्रमेण संपृच्य ताम्रपात्रे तु योजयेत् ७
एतेषां बन्धनं कृत्वा पक्वं चैवाष्टबन्धनम्
पक्वबन्धमिदं ज्ञेयमपक्वमधुनोच्यते ८

त्रिफलां शङ्खचूर्णं च दध्याज्यगुलसंयुतम्
कदलीफलसंयुक्तमपक्वं चाष्टबन्धनम् ६
एवं चैवामृतं कुर्यात्सर्वसिद्धिकरं परम्
अष्टबन्धे कृते काले सर्वद्रव्याणि लेपयेत् १०
नववस्त्रेण संवेष्ट्य पीठलिङ्गावृतेन तु
चतुर्दिक्षु च कुण्डेषु होमं कुर्याद्विचक्षणः ११
चतुरध्ययनं कुर्युश्चतुरो वेदपारगाः
श्रीसूक्तं पुरुषसूक्तं रुद्रहोतारमेव च १२
शान्तिद्वयं पवमानं ज्येष्ठसाम रथंतरम्
बृहतन्नीलरुद्रं च वेदवेदेषु पारगान् १३
पुण्याहं वाचयित्वा तु शान्तिहोमं तु कारयेत्
स्नपनं तत्र कुर्वीत ब्राह्मणान्भोजयेत्तदा १४
पञ्चवर्णहविर्दद्यात्पञ्चवक्त्रे विशेषतः
अष्टबन्धकृते काले बालस्थानं प्रकल्पयेत् १५
लिङ्गे तु चलिते भिन्ने पीठे तु चलितेऽथवा
प्रासादे चलिते भिन्ने बालस्थानं तु कारयेत् १६
ग्रामारम्भस्य काले तु बालस्थानं तु कारयेत् १७
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे अष्टबन्धनविधिपटलः सप्तपञ्चाशत्तमः

## अनुबन्धः
## अष्टबन्धनप्रायश्चित्तविधिः

अथ वक्ष्ये विशेषेण अष्टबन्धविधिक्रमम्
सर्वशान्तिकरं पुण्यं सर्वकामफलप्रदम् १
सर्वैश्वर्यकरं पुंसां सर्वकार्यार्थसाधनम्
विष्णुभागे तु निर्माल्यं नृपस्यायुर्विनाशनम् २
ब्रह्मभागे तु निर्माल्यं ब्रह्मवर्गविनाशनम्
शिलाभागे तु निर्माल्यं गर्भनाशकरं भवेत् ३
नन्द्यावर्तशिलाभागे दुर्भिक्षं जायते नृणाम्
हर्म्यं चैव प्रवेशं तु विट्शूद्रसर्वनाशनम् ४

यत्काले बन्धने जीर्णे तत्काले तु दृढं कुरु
दिनवारमुहूर्तं तु वर्जयेत्तु विचक्षणः ५
कार्पासतूलनवनीतसुशर्कराणां लाक्षामधूच्छिष्टसुकुन्दुरुष्कम्
काषायपाषाणगुलं समानं लिङ्गस्य पीठे विवरेऽष्टबन्धम् ६
लाक्षा शर्करपाषाणं सुसिक्थं कुरुविन्दकम्
गुग्गुलुं गैरिकं चैव गुलतैलमिहोच्यते ७
स्वयंभूर्दैविकं चैव आर्षकं गाणपं तथा
अपक्वं दैविकं चार्षं पक्वं चैव तु गाणपम् ८
स्वायम्भुवे विशेषेण पक्वापक्वं विशिष्यते
अष्टबन्धमिति प्रोक्तं त्रिपञ्चबन्धनं तथा ९
प्रमादाद्बन्धने हीने तत्कालोक्त्या समाचरेत्
अथवा बन्धनेऽश्लिष्टे पूजानैवेद्यहीनकम् १०
लाक्षा शर्करपाषाणं शङ्खं च कदलीफलम्
मधूच्छिष्टसमायुक्तं बन्धयेत्पञ्चबन्धनम् ११
लाक्षासुसिक्थं पाषाणं बन्धयेत्तु गुरूत्तमः
त्रिबन्धमिति विख्यातं पक्वापक्वं तु बन्धयेत् १२
श्वेतगुग्गुलुशर्करचूर्णयोर्माहिषन्नवनीतकमिश्रितम्
लूखले मुसलद्वयकुट्टनात्पाकयुक्तिवशाद्दृढबन्धनम् १३
प्रायश्चित्तं विशेषेण बन्धनान्ते समाचरेत्
प्रथमं मृद्गृहीतं च द्वितीयमङ्कुरार्पणम् १४
आवाहनं तृतीयं स्याद्रक्षाबन्धं तुरीयकम्
पञ्चमं मन्त्रविन्यासं षष्ठं कुम्भप्रपूजनम् १५
सप्तमं चाग्निकार्यं च अष्टमं जीर्णशोधनम्
नवमं रत्नविन्यासं पक्वापक्वमतः परम् १६
एकादशं बन्धनं स्यात्ततः पूर्णाहुतिः स्मृतः
मन्त्रन्यासं ततः कुर्यात्ततो कुम्भाभिषेचनम् १७
स्नपनं शान्तिहोमं च ततो मन्त्रजपं ततः
महाहविर्निवेद्याथ उपचारमतः परम् १८
आचार्यदक्षिणां दद्याद्ब्राह्मणान्भोजयेत्ततः

विंशन्महाक्रिया ज्ञेया अष्टबन्धनकर्मणि १९
मण्डलं मासमेकं वा पक्षं वापि निरन्तरम्
स्नपनं कारयेच्छम्भोः शान्तिहोमपुरःसरम् २०
ततो सायाह्नसमये विघ्नेशं पूजयेत्ततः
देवं विज्ञाप्य विधिवन्मृदं संग्राह्य बुद्धिमान् २१
ततोऽङ्कुरार्पणं कुर्याद्बालस्थापनमाचरेत्
शिवाग्रे स्थण्डिलं कुर्यात्तिललाजसमन्वितम् २२
कुम्भमाढकमानेन कलशप्रस्थमुच्यते
स्थण्डिलं शालिभिः कुर्यात्तिललाजसमन्वितम् २३
पद्ममष्टदलं लिख्य मध्ये कुम्भं न्यसेत्ततः
वर्धन्या तु समायुक्तं विघ्नेश्वरघटान्वितम् २४
ससूत्रान्सापिधानांश्च पञ्चरत्नसमन्वितान्
साङ्गं सावरणैर्युक्तं शिवमावाहयेत्ततः २५
शान्तिहोमं ततः कुर्याद्यथा शास्त्रप्रचोदितम्
तदग्रे मण्डपं कुर्याच्चतुर्द्वारसमन्वितम् २६
वितानतोरणाद्यैश्च समलङ्कृत्य यत्नतः
नवपञ्चैककुण्डं तु वेदिका परितः क्रमात् २७
ईशदेशे प्रधानं तु वृत्तकुण्डं सलक्षणम्
कारयित्वा विधानेन शिल्पशास्त्रोक्तवत्क्रमात् २८
वेद्यूर्ध्वे स्थण्डिलं कुर्यादष्टद्रोणैश्च शालिभिः
तण्डुलैस्तिललाजैश्च पद्ममष्टदलं लिखेत् २९
तन्तुना वेष्टयेत्कुम्भं यवमानान्तरान्तरे
गन्धोदकैश्च संपूर्य गन्धद्वारेति मन्त्रतः ३०
सकूर्चवस्त्रमाल्याद्यैः प्रतिमाचक्रमीरितम्
पञ्चनिष्कप्रमाणेन तदर्धार्धसमन्वितम् ३१
पञ्चरत्नसमायुक्तं यथाविभवविस्तरैः
यथा मण्डपपूजोक्तविधानैरर्चयेत्क्रमात् ३२
आधारादिशक्त्यन्तकं कुम्भस्यावाह्य मध्यमे
साङ्गैः सावरणैः सार्धं पूजयित्वा विधानतः ३३

अग्नेराराधनं कुर्यादाग्निकार्योक्तमार्गतः
तदग्रे शिवनामाख्यं मराडलं परिपूजयेत्  ३४
आचार्यो मूर्तिपैः सार्धमग्निकार्यं समाचरेत्
देशिकेन्द्रस्य पुत्रो वा पौत्रो वा तस्य बान्धवाः  ३५
अष्टौ वा चतुरो वापि होतारस्ते भवन्ति हि
ततः संशोधनं कुर्यादाचार्यो मूर्तिपैः सह  ३६
तज्जीर्णं तु परित्यज्य नवरत्नं विनिक्षिपेत्
अपक्वं दैविकं प्रोक्तं पक्वं चैव तु मानुषम्  ३७
स्वायंभुवे विशेषेण पक्वापक्वं तु बन्धयेत्
यथोक्तं बन्धनं कुर्यान्मध्यरात्रौ विशेषतः  ३८
विद्येश्वराष्टकं चैव द्रव्याणामधिदेवताः
दिवाकाले न बध्नीयात्कृतं चैव तु मानुषे  ३९
नानावाद्यसमायुक्तं वेदध्वनिसमन्वितम्
नृत्तगीतसमायुक्तं विनोदालोकनैः सह  ४०
रात्रिशेषं व्यापोह्याथ प्रभाते विमले शुभे
आचार्यो मूर्तिपैः सार्धं स्नात्वा नियतमानसः  ४१
मूर्तिपैः सह आचार्यो वस्त्राद्यैः समलङ्कृतः
द्रव्याभावे तु रुद्राक्षं धारयेत्तु विशेषतः  ४२
पूर्वोक्तैरर्चयेद्धीमान्पूर्णाहुतिमथाचरेत्
तत्काले गृहशान्त्यर्थं वस्त्रहेमाम्बरादिकम्  ४३
श्रोत्रियाय च शान्ताय ब्राह्मणाय ददेद्गुरुः
यात्रादानं विशेषेण ह्याचार्याय प्रदापयेत्  ४४
आचार्यो मूर्तिपैः सार्धं कुम्भानुद्धृत्य पूर्ववत्
धामप्रदक्षिणवशात्स्वस्तिवाचकसंयुतैः  ४५
शिवाग्रे स्थरिडलं कृत्वा कुम्भं संस्थाप्य पूर्ववत्
बालस्थापनकुम्भं च पूर्वं चैवाभिषेचयेत्  ४६
यागाधिवासनं कुम्भं गन्धोदपरिपूरितम्
तत्तन्मन्त्रं समादाय विन्यसेल्लिङ्गमूर्धनि  ४७
तत्तोयैरभिषिच्याथ बहुरूपं समुच्चरन्

पदमन्त्रैर्विशेषेण व्योमव्यापिमनुस्मरन् ४८
विद्येश्वरघटान् सर्वान् तत्तत्स्थानेऽभिषेचयेत्
मन्त्रान्नं तु निवेद्याथ नीराजनमथाचरेत् ४९
द्वारपूजां ततः कुर्यात्पूर्वोक्तविधिना गुरुः
गव्यैः पञ्चामृताद्यैश्च रत्नोदैर्गन्धतोयकैः ५०
क्षीरैश्च नालिकेरैश्च पुष्पपत्रोदकेन च
बन्धनोष्णकशान्त्यर्थं यथेष्टमभिषेचयेत् ५१
वस्त्रपूतैः शुचिर्भूतैर्वासितैश्च सुशीतलैः
अभिषिच्य विधानेन यथाविभवविस्तरैः ५२
मन्त्रान्नं तु निवेद्याथ अर्घ्यं दत्वा विधानवित्
हिमतोयैर्गन्धपङ्कैरालिप्य लिङ्गपीठके ५३
चन्द्रचन्दनकस्तूरीकुङ्कुमैर्मृगनाभिना
वस्त्रैश्च गन्धमाल्यैश्च अलङ्कृत्य विशेषतः ५४
महाहविर्निवेद्याथ वक्त्रान्नं तु निवेदयेत्
धूपदीपौ ततो दत्वा षोडशैरुपचारकैः ५५
तद्दिनं तु समारभ्य सङ्कल्पदिवसावधि
प्रत्यहं स्नपनं कुर्यात्सहस्रं वा तदर्धकम् ५६
अष्टोत्तरशतं वापि कारयेत्तु दिनं प्रति
शान्तिहोमं ततः कृत्वा पञ्चास्त्रमनुना सह ५७
महाहविर्निवेद्याथ धूपदीपादिभिस्तथा
श्रीसूक्तं पवमानं तु ऋगाद्यध्ययनैरपि ५८
शिवाख्यकवचं जप्त्वा पञ्चाक्षरमहामनुम्
मृत्युञ्जयं महामन्त्रं श्रीमत्पञ्चाक्षरं मनुम् ५९
अन्यांश्च सर्वमन्त्रांश्च शान्त्यर्थं जपमाचरेत्
भोजयित्वाथ विप्रादीन्यथाविभवविस्तरैः ६०
आचार्यदक्षिणां दद्याद्वस्त्रहेमाम्बरादिभिः
उत्तमस्य चतुःषष्टिनिष्का देशिकदक्षिणा ६१
तदर्धं मध्यमा प्रोक्ता तदर्धं कन्यसा स्मृता
अथवान्यप्रकारेण दक्षिणा तु प्रकीर्तिता ६२

षष्ठिनिष्कं समारभ्य पञ्चनिष्कक्षायेण तु
काञ्चनस्य गुरोः पञ्चनिष्कान्ता दक्षिणा मता ६३
दशभागैकभागा तु मूर्तिधारकदक्षिणा
तदर्धं मन्त्रजप्तृणां वैदिकानां तु तत्समा ६४
दैवज्ञः तत्समां विद्याद्दक्षिणाकॢप्तिरुच्यते
दक्षिणा वस्त्रसंयुक्ता परिचारकदक्षिणा ६५
दीनान्धकृपणानां च अन्नदानं प्रदापयेत्
वस्त्राद्यैः स्थानिकादीनां सुसन्तोष्य विशेषतः ६६
वेदविद्भ्यश्च विप्रेभ्यो दक्षिणां तु प्रदापयेत्
एवं यः कुरुते मर्त्यः स पुण्यां गातिमाप्नुयात् ६७
आरोग्यमायुः कीर्तिं च पुत्रपौत्राभिवर्धनम्
चिरकालं वसेद्धीमानन्ते कैवल्यमाप्नुयात् ६८

इति दीप्तशास्त्रे अष्टबन्धनप्रायश्चित्तविधिपटलः

## अष्टपञ्चाशत्तमः पटलः

### पवित्रारोहणविधिः

अतः परं प्रवक्ष्यामि पवित्रविधिरुच्यते
पञ्चविंशतियुत्सूत्रमाचार्यस्य विधीयते १
भक्तानां परिचाराणां नवसूत्रं प्रकल्पयेत्
हृदयेन तु मन्त्रेण ग्रन्थिकर्म समाचरेत् २
कर्तव्यं लम्बसूत्रं तु यथाशोभं तथा विधम्
तिलगर्भोऽथवा कुर्यात्प्रकृत्या शोभमेव च ३
कृष्णागरुं च कर्पूरं कस्तूरी नवनीतकम्
घनं कोष्ठमुशीरं च चन्दनं च फलत्रयम् ४
एलालवङ्गतक्कोलजाती च शतपत्रकम्
गन्धद्रव्याणीमानीह यथालाभं परिग्रहेत् ५
गैरिकं कुंकुमं चैव दरदं रोचनं तथा
रक्तचन्दनकाश्मीरं हरिद्रा च मनःशिला ६
रक्तद्रव्याणि चोक्तानि रञ्जयेद्देशिकोत्तमः

अधिवासं प्रकुर्वीत ग्रन्थिसूत्रैश्च सूत्रयेत् ७
प्रासादस्याग्रतः कुर्यान्मण्डपं चतुरश्रकम्
द्वादशं दशहस्तं वा नवहस्ताष्टहस्तकम् ८
स्तम्भषोडशसंयुक्तं द्वादशस्तमभमेव वा
चतुर्द्वारसमायुक्तं वितानध्वजशोभितम् ९
चतुस्तोरणसंयुक्तं दर्भमालासमायुतम्
अष्टमङ्गलसंयुक्तं दिग्ध्वजैश्च प्रलम्बितम् १०
पालिकाङ्कुरसंयुक्तं पूर्णकुम्भैरलङ्कृतम्
मण्डपस्य तु तन्मध्ये वेदीं कुर्यात्त्रिहस्तकाम् ११
चतुर्दिक्षु चतुष्कुण्डं वृत्तं वा चतुरश्रकम्
ऐन्द्रे चैवैककुण्डं वा कुर्यादेवं विभावसः १२
गोमयालेपनं कृत्वा शालिपिष्टैर्विचित्रयेत्
प्रोक्षयेदस्त्रमन्त्रेण मण्डपं कुशवारिणा १३
स्थण्डिलं तत्र कर्तव्यमष्टद्रोणेन शालिना
तण्डुलैः समलङ्कृत्य तिलदर्भैः सपुष्पकैः १४
गन्धादिना समभ्यर्च्य पात्रं वेद्युपरि न्यसेत्
सौवर्णं राजतं ताम्रं कांस्यं पात्रकमुच्यते १५
अथवा मृण्मयं पात्रं कालभिन्नादिवर्जितम्
तन्मध्ये विन्यसेत्सूत्रं नववस्त्रेण वेष्टितम् १६
कृष्णाजिनादिनाच्छाद्य मन्त्रसंहितयालभेत्
गन्धादिभिः समभ्यर्च्य प्रोक्षयेत्पुरुषेण तु १७
लिङ्गपीठं तु संस्पृश्य शिवमष्टोत्तरं जपेत्
जप्त्वान्ते चैव नादाख्यं पञ्चाशत्संख्यया जपेत् १८
तद्वन्महेश्वरं जप्त्वा चाङ्गब्रह्मसमन्वितम्
दिक्षु मन्त्रजपं कुर्याद्विदिक्ष्वध्ययनं तथा १९
सूत्रस्य परितः स्थाप्य कलशान्वारिपूरितान्
गन्धतोयेन संपूर्णान्सकूर्चान्सापिधानकान् २०
वस्त्रान्हिरण्यसंयुक्तान्वसुदेवसमन्वितान्
गन्धादिभिः समभ्यर्च्य हविस्तेषां निवेदयेत् २१

पक्षयोरुभयोश्चैव सप्तम्यां चाधिवासयेत्
अष्टम्यां ग्तु विशेषेण पवित्रमधिरोपयेत्  २२
त्रयोदश्यां चाधिवासं चतुर्दश्यां च रोपयेत्
नित्यकर्मसमाप्तौ तु नैमित्तिकमथाचरेत्  २३
स्नपनं पूर्वरात्रौ तु कृत्वा पुष्पपवित्रकम्
तदन्ते कौतुकं चैव बन्धयेद्धृदिना बुधः  २४
अष्टोत्तरं चतुष्षष्टिः पञ्चाशत्पञ्चविंशतिः
षोडशं नवकं वाथ स्नपनं कारयेत्ततः  २५
दधिमधुघृतक्षीरैः स्नापयेद्व्योममन्त्रतः
गन्धपुष्पादिना पूज्य दद्यात्पञ्चामृतं हृदा  २६
पुनराचमनं दद्यात्ताम्बूलं च निवेदयेत्
नवनीतं च कर्पूरं चन्दनं लघुकोष्ठकम्  २७
तक्कोलं कुंकुमं जातित्वगेलाबहुमूलकम्
एतानि गृह्य गन्धानि सूक्ष्ममालोड्य वै पृथक्  २८
पात्रे संगृह्य तद्गन्धमर्घ्यपुष्पं च पञ्चकम्
यजेद्द्वारपालान्सर्वान्गन्धपुष्पादिभिः क्रमात्  २९
लिङ्गान्तिकं ततो गत्वा कौतुकं वा प्रवेशयेत्
पूजापर्युषितं सर्वमपनीय हृदा बुधः  ३०
दन्तकष्टं हृदा दद्याद्भस्ममृद्भिः समन्वितम्
गन्धादिना समभ्यर्च्य गन्धसूत्रं प्ररोपयेत्  ३१
गन्धतोयेन हृदिना लिङ्गमालेपयेत्क्रमात्
गन्धपुष्पाक्षतैर्वस्त्रैर्धूपदीपैश्च पूजयेत्  ३२
शुद्धान्नं पायसान्नं वा नैवेद्यं दापयेत्ततः
पुनराचमनं दद्यात्ताम्बूलं चैव दापयेत्  ३३
ततो होमं प्रकुर्वीत शास्त्रदृष्टेन कर्मणा
देशिकः सर्वशास्त्रज्ञः सशिष्यः समलङ्कृतः  ३४
हृदयेनैव मन्त्रेण पवित्रं धारयेत्क्रमात्
रुद्रमन्त्रमनुस्मृत्य आदित्याय प्रदापयेत्  ३५
प्राकाराभ्यन्तरे देवान्परिवारान्विशेषतः

गन्धपुष्पादिभिः पूज्य पवित्रं च प्रदापयेत् ३६
सूत्रेण वेष्टयेद्धीमान्प्राकारं च सगोपुरम्
पादप्रक्षालनं कृत्वा आचम्य विधिना पुनः ३७
कुण्डान्तिकं ततो गत्वा होमकर्म समाचरेत्
ईशानश्चेश्वरो ब्रह्मा विष्णुः सदाशिवस्तथा ३८
एते वै पञ्चहोमेषु अधिदेवाः प्रकीर्तिताः
पलाशखादिराश्वत्थप्लक्षोदुम्बरमेव च ३९
अग्न्याधानादिकं सर्वं पूर्वोक्तविधिना कुरु
समिदाज्यचरुं लाजान्सर्षपांश्च यवांस्तिलान् ४०
सक्तुक्षीरदधि चैव लघुकर्पूरमेव च
कन्दमूलफलान्यपि विधिदृष्टेन होमयेत् ४१
शतमर्धं तदर्धं वा प्रत्येकं जुहुयात्क्रमात्
अयं त इध्ममन्त्रेण इध्मं हुत्वा विशेषतः ४२
त्र्यम्बकेन घृतं हुत्वा देवस्य त्वा चरुं हुनेत्
लाजादिसक्तुपर्यन्तं पञ्चब्रह्मेण होमयेत् ४३
क्षीरादिमूलपर्यन्तं शिवाङ्गैरेव हूयते
गणानां त्वेति मन्त्रेण फलं हुत्वा विचक्षणः ४४
द्रव्यान्ते व्याहृतिं हुत्वा हुनेत्पूर्णाहुतिं हृदा
एवं जागरणं रात्रौ एतद्गन्धाधिरोहणम् ४५
प्रभाते स्नानं कुर्वीत आचार्यो मूर्तिपैः सह
सकलीकरणं कृत्वा ब्रह्माङ्गैश्च ततो हुनेत् ४६
शङ्खभेरीनिनादैश्च नृत्तगेयसमाकुलम्
तन्त्री मधुरवाद्यैश्च रुद्रस्य गणिकादिभिः ४७
मन्त्रगेयसमायुक्तं स्तोत्रध्वनिसमायुतम्
वेद्याः पवित्रमादाय शिरसा धार्य देशिकः ४८
मूर्तिपान्मूर्तिकुम्भानि शिरसा धार्यते शनैः
एवं बहुविधैर्घोषैः प्रासादं तु प्रदक्षिणम् ४९
लिङ्गान्तिकं ततो गत्वा उत्तराभिमुखः स्थितः
निक्षिप्य तत्पवित्रं तु शिरसा ब्रह्मचारिणः ५०

उपसंहृत्य निर्माल्यं चण्डेशाय प्रदापयेत्
एवं चण्डमनुस्मृत्य दद्याद्गन्धपवित्रकम् ५१
न शून्यमस्तकं यद्वत्तद्वत्कुर्याद्विचक्षणः
पञ्चब्रह्मशिवाङ्गैश्च शिवास्त्रैः पाशुपतास्त्रकैः ५२
स्नापयेन्मूर्तिकुम्भाद्भिः व्योमव्यापि समुच्चरन्
गन्धोदकं पुरा दद्याच्छुद्धिसूक्तं समुच्चरन् ५३
पाद्यमाचमनं चार्घ्यं गन्धपुष्पं च धूपकम्
दीपं नैवेद्यताम्बूलं भक्ष्यभोज्यं च दापयेत् ५४
सुमुहूर्ते सुलग्ने तु नक्षत्रकरणान्विते
आरोपयेद्धृदा मन्त्री पवित्रं घोषसंयुतम् ५५
लम्बसूत्रं ददेत्पश्चादापीठान्तं प्रलम्बयेत्
विद्यातत्त्वमनुस्मृत्य प्रासादं समनुस्मरन् ५६
शक्तिकूर्चं न्यसेत्पीठे ह्यात्मतत्त्वमनुस्मरन्
हृदयं त्रिभिरुच्चार्य आभूमौ तु प्रलम्बयेत् ५७
मुकुलीं पद्ममुद्रां च पञ्चवक्त्रां प्रदर्शयेत्
महेशं सदाशिवं च विद्याख्यं चैव दर्शयेत् ५८
पञ्चब्रह्मशिवस्याङ्गं शिवास्त्रं पाशुपतास्त्रकम्
विन्यसेल्लिङ्गमध्ये तु बीजमुख्यं तु मूलके ५९
शिवास्त्रेणैव मन्त्रेण दिग्बन्धं कुरु देशिक
वस्त्रेण पीठिकां वेष्ट्य शिवबीजमनुस्मरन् ६०
पश्चादावरणान्पूज्य गन्धपुष्पार्घ्यधूपकैः
नैवेद्यं भक्ष्यभोज्यं च शिवाय विनिवेदयेत् ६१
दद्यादाचमनीयं तु निर्माल्यं हि विसर्जयेत्
ताम्बूलं दापयेत्तत्र शिवस्य परिवारकान् ६२
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः
कटकैः कुण्डलैश्चैव हारगोभूमिकाञ्चनैः ६३
मूर्तिपान्पूजयेत्तत्र दैवज्ञं पूजयेत्ततः
आचार्यो यजमानश्च पूर्वेद्युश्चाप्युपोषितौ ६४
प्रातरारोपयेत्सम्यग्भुञ्जीत यजमानकैः

पूर्णाहुतिं ततो दद्यात्स्विष्टान्तं हि समाचरेत् ६५
सर्ववर्णिकमन्नाद्यं तस्मिन्नहनि कारयेत्
एवं पवित्रमारोप्य षण्मासं च नयेत्क्रमात् ६६
चतुर्मासं त्रिमासं वा उत्तमं त्रयमेव वा
द्विमासमेकमासं वा पक्षं वा मध्यमं स्मृतम् ६७
पञ्चाहं त्रियहं वाथ एकाहमधमं स्मृतम्
यावत्पवित्रमावर्त्य तावत्कालं व्रतं चरेत् ६८
क्षारं लवणमावर्ज्य नखरोमान्न छेदयेत्
ग्रामान्तरं न गन्तव्यं गन्तव्यं निशि न स्वपेत् ६९
आत्मार्थेऽप्येवमेवं स्यादेकहोमं तु कारयेत्
मृण्मयलिङ्गपूजा चेद्यत्र लिङ्गं तु कारयेत् ७०
वेणुरज्जुसमायुक्तं यत्र लिङ्गैकहस्तकम्
छत्राकारं शिरः कुर्याल्लिङ्गं वै स्थापयेत्क्रमात् ७१
अथवा चन्दनलिङ्गं तालमात्रेण कारयेत्
उत्सेधस्य तु तालं स्याद्यन्त्रपीठोपरिस्थितम् ७२
याज्ञिकैः पीठं संस्कृत्य त्रिगुणेन समन्वितम्
दुकूलपट्टदेवाङ्गैश्चित्रवस्त्रैश्च वेष्टयेत् ७३
शेषं पूर्वोक्तवत्कुर्यात्पूजको गुरुणा सह
सन्ध्यापूजनकाले तु सूत्रमादाय बुद्धिमान् ७४
पवित्रं पञ्चगव्येन प्रोक्षयेन्पञ्चमन्त्रकैः
निर्माल्योद्वासनं पश्चात्पूज्य स्नानादिना बुधः ७५
पुष्पपूजान्तकाले तु पवित्रं रोपयेत्पुनः
एवं दिने दिने वह्ने प्रतिसंधिषु योजयेत् ७६
पाशुपतेन मन्त्रेण पवित्रमधिरोपयेत्
स्नपनं कारयेदन्ते जुहुयादस्त्रमन्त्रतः ७७
चण्डेशाय प्रदातव्यं तत्पवित्रं हृदा तदा
अर्चनोक्तं समभ्यर्च्य महाहविर्निवेदयेत् ७८
समुद्रगां नदीं गत्वा पवित्रं तु विसर्जयेत्
ब्राह्मणान्भोजयेदन्ते व्रतिनश्चैव भोजयेत् ७९

एवं यः कुरुते मर्त्यः पवित्रं विधिपूर्वकम्
संवत्सरकृतं पापं विनश्यत्यपसङ्गकम् ८०
कुलैकविंशत्युत्तीर्य रुद्रलोके महीयते
आचार्ये मनसा तुष्टे सर्वकर्मफलं भवेत् ८१
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे पवित्रारोहणपटलः अष्टापञ्चाशत्तमः

## एकोनषष्टितमः पटलः
### जीर्णोद्धारविधिः

जीर्णोद्धारविधिं वक्ष्ये सर्वसंपत्करं नृणाम्
प्रासादलिङ्गपीठानां जीर्णकाले समुद्धरेत् १
ग्रामे वा नगरे वापि अरण्ये पर्वतेऽपि वा
शिवलिङ्गं विना यत्र तत्र जुष्टं न कारयेत् २
तस्मात्सर्वप्रयत्नेन शिवधामसमन्वितम्
कालक्षेपणजीर्णे हि भिन्ने स्फुटितपातने ३
पुराकृतं परित्यज्य लिङ्गपीठनिकेतनम्
सौधं च प्रतिमालिङ्गं पुनरावर्त्य मनोरमम् ४
लिङ्गपीठं परित्यज्य महार्णवे नियोजयेत्
शिवशक्तिं ततो ग्राह्य बाललिङ्गे नियोजयेत् ५
प्रासादलिङ्गमूले तु पीठलिङ्गस्य वामके
अस्त्रेणोत्पाटनं कृत्वा चण्डयागं समाचरेत् ६
वृषयागं ततः कृत्वा वृषमन्त्रेण देशिकः
सौधं भूमौ परित्यज्य दारुजं चाग्निना दहेत् ७
लोहजं तेन कार्यं स्यात्सुदृढं लक्षणान्वितम्
संप्रोक्ष्य विधिना कार्यं महोत्सवमनन्तरे ८
स्वयम्भूर्दैविकं लिङ्गमासुरं चार्षकं तु वा
रूपमानविहीनं स्याद्वर्णच्छन्नसमायुतम् ९
शिल्पिकर्माप्रयुक्तेऽत्र न कुर्यात्तत्र सर्जनम्
घटादानं प्रकर्तव्यं कर्मान्ते चाभिषेचनम् १०
पीठबन्धं प्रकर्तव्यं तस्करोद्धरणे सति

प्रासादोद्धारकाले तु न कुर्याद्बालमन्दिरम् ११
मानहीनं च यल्लिङ्गं हीनोन्मानं च यद्भवेत्
जीर्णोद्धारं न कर्तव्यं कर्तव्यं चोर्ध्वहीनकम् १२
भिन्ने च स्फुटिते दग्धे लिङ्गदोषो न जायते
शान्तिं कृत्वा विशेषेण अद्भुतोक्तं समाचरेत् १३
मानयुक्तस्य लिङ्गस्य विशेषमधुनोच्यते
यस्य लिङ्गस्य मानं तु यवमात्रक्षयं भवेत् १४
भिन्ने च स्फुटिते दुष्टे लिङ्गे वा पीठिकेऽपि वा
लिङ्गे लिङ्गं परित्यज्य पीठे पीठं परित्यजेत् १५
जीर्णोद्धारस्य काले तु धात्वन्तरमिहोच्यते
मृण्मयादिष्टका श्रेष्ठा चेष्टकायास्तु दारुजम् १६
दारुजाच्छैलजं श्रेष्ठं शैलजाल्लोहजं शुभम्
लिङ्गमूलं न वेदिः स्यान् ++++न्न धामकम् १७
प्रासादारम्भकाले तु जीर्णोद्धारं समाचरेत्
लिङ्गमानेन कर्तव्यं कर्तव्यं वस्तुनः परम् १८
गर्भहीनं न कर्तव्यं कर्तव्यं नाहहीनकम्
द्वारहीनं न कर्तव्यं कर्तव्यं नाहहीनकम् १९
भूमिसालिन्दहीनं स्यात्कर्तव्यं पूर्ववर्णकम्
जातिच्छन्दविकल्पाभापूर्वोक्तविधिना सह २०
आयव्ययसमायुक्तं यजमानेच्छया सह
यथेष्टं कारयेद्धीमान्शेषं शास्त्रोक्तमाचरेत् २१
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे जीर्णोद्धारविधिः पटलः एकोनषष्टितमः

षष्टितमह् पटलः
आसनविधिः

आसनस्य विधिं वक्ष्ये शृणुष्व च हविर्भुज
आवाहनक्रियादौ तु शिवस्यासनकल्पितम् १
विदित्वा भगवद्भेदं ततो लिङ्गविकल्पनम्
पिण्डिकाभेदमालोक्य मन्त्रभेदं विदुर्बुधाः २

अखण्डं खण्डतुण्डे हि त्रिविधं भेदमुच्यते
पातालादिपरान्तं स्यात्तदखण्डं प्रशस्यते ३
वसुधादिपरान्तं स्यादेतत्खण्डमिति स्मृतम्
शक्त्यादिशिवपर्यन्तं तुण्डमेवं प्रकीर्तितम् ४
अखण्डं निष्कले कल्प्यं खण्डतुण्डे तु बिम्बके
क्षणिके चललिङ्गे वा तुण्डमेव प्रकल्पयेत् ५
भेदमेवं समाख्यातं पदभागं प्रचक्ष्महे
भानुसूत्रसमायुक्तं पूर्वाग्रं तु प्रपातयेत् ६
तद्वत्सूत्रसमायुक्तं दक्षिणोत्तरमानयेत्
चतुर्विंशत्सूत्रसङ्ख्या एकविंशच्छतं पदम् ७
तन्मध्यैकपदं कूर्मं शक्तिबीजाङ्कुरान्वितम्
मध्यादैशे शिरो ज्ञेयं पूर्वोत्तरद्विहस्तयोः ८
याम्यपश्चिमयोः पादं षट्पदाधारमुच्यते
तत्तन्मध्यगतं नालं यावत्पद्मनिवेशितम् ९
पादानि पादशिलाधो मध्ये कूर्मशिला भवेत्
मध्यात्कूर्मपदान्तस्थं भ्रामयेद्वृत्तवत्पुनः १०
दिशश्च विदिशश्चैवानन्ताद्या नागसंस्थिताः
शिवेन शतरुद्रास्तु पदेष्वेतेषु संस्थिताः ११
एकविंशच्छतपदाः शक्त्याद्या नागसंस्थिताः
कर्णे कर्णे तु सन्त्यज्य कर्णपार्श्वे पदस्थिताः १२
ऋृषीन्पदानि सन्त्यक्त्वा दिशासु परितो न्यसेत्
एकोननवतिसङ्ख्या च सिंहस्य पदसंस्थिताः १३
अभ्यन्तरगतौ पादौ बाह्ये हस्तौ पदद्वयोः
मध्ये नाभितटस्थाश्च विदिशाभिमुखाः स्थिताः १४
मध्यमे त्रिपदान्तं स्याद्वृत्तपद्मं समालिखेत्
कर्णिकामध्यमे त्रीणि तद्बाह्ये भागकेसरम् १५
दलाष्टकसमायुक्तं वामादि परिकल्पयेत्
कूर्ममेकपदोत्सेधमनन्तं त्रिपदं पुनः १६
पदमेकं तु योगं स्यात्तद्द्वयं सिंहतुङ्गकम्

ईलिका चार्धमाख्याता तदर्धं युगपट्टिका १७
तस्योर्ध्वे पद्मसंयुक्तं पदमेकं समुच्छ्रयम्
कर्णिका शिवमाख्यातं विमलस्य पदोच्छ्रयम् १८
प्रतिष्ठाकाले कर्तव्यः कालाग्निः कूर्मदेवता
सप्तपातालभागे तु अनन्तोत्सेधमुच्यते १९
नवखण्डपृथिवी च योगस्यैव पदे स्थिता
धर्माद्यनैश्वर्यान्तं यद्भूतगणसंभवम् २०
सिंहासनपदे स्थाप्य भावयेद्भावकल्पिताः
ब्रह्माद्यैतानि लोकानि पद्मभागेषु विन्यसेत् २१
विद्येश्वराणां लोकानि केसरेषु प्रकल्पयेत्
रुद्राण्येतानि लोकानि कर्णिकाग्रे तु विन्यसेत् २२
विमलस्य पदे विद्धि शिवलोकमसंशयम्
शिवरूपस्वभावोऽयं लिङ्गरूपमनादिवत् २३
शक्तिबीजाङ्कुरं नालमाधारादिक्रमान्न्यसेत्
अनन्तो वासुकिस्तक्षः कार्कोटः शङ्ख एव च २४
गुलिकश्चैव पद्मश्च महापद्मोऽष्टदेवताः
इन्द्रादीशानपर्यन्तं कूर्मस्योपरि संस्थिताः २५
पुच्छैरावेष्ट्य तन्नालं फणैर्लग्नैः सपृष्ठकैः
हेममुक्तं तथा धूम्रं स्फटिकं चन्द्रभं दिशि २६
कृष्णधूम्रं तथा भृङ्गं कालाञ्जननिभं क्रमात्
उरः शिरश्च कण्ठं च कर्णौ नास्यक्षसंयुतम् २७
नाभेरूर्ध्वं कला ह्येवं फणमध्ये तु संस्थिताः
ध्यात्वा पातालभागे तु फणैरावेष्टितं भुवि २८
अर्चयित्वा विधानेनानन्तासनमिहोच्यते
प्राणापानं च व्यानं च उदानं च समानकम् २९
नागः कूर्मोऽथ कृकरो देवदत्तस्तथैव च
धनञ्जयस्तथा ह्येते दशाक्षरपरिप्लुताः ३०
प्रणवेन तु संकल्प्य अधश्चोर्ध्वं च द्वावपि
सिंहासनं तथा योगं पातालाकाशयोस्तथा ३१

नागमूर्ध्नोपरिच्छाद्य सिंहस्य छदनं त्वथ
अर्चयित्वा विधानेन गन्धपुष्पादिधूपकैः  ३२
धर्मं ज्ञानं च वैराग्यमैश्वर्यं च चतुष्टयम्
चतुष्कोणे महासिंहमासनं पादनिर्मितम्  ३३
शङ्खस्फटिकपीतं च रक्तं कृत्वा यथाक्रमम्
अधर्माज्ञानावैराग्यमनैश्वर्यं चतुष्टयम्  ३४
अधर्मं कृष्णवर्णं च गात्रवद्युगवर्णकान्
अग्रे तुर्यश्रकं कुर्यादन्ये चैवायताश्रकम्  ३५
सिंहासनमिदं प्रोक्तं पद्मासनमथ शृणु
सद्येन प्रथमं मूलं वामदेवेन नालकम्  ३६
अघोरदलसंकीर्णं पुरुषं गुह्यकेसरम्
ईशेन सुषिरं कान्तं पद्मं शिवमयं तथा  ३७
मूलं श्वेतमयं ज्ञेयं नालं पीतनिभं पुनः
दलं शङ्खनिभाकारं केसरं रक्तवर्णकम्  ३८
कर्णिका पीतवर्णाभा पद्मस्यैव निभं शुभम्
नाले चैव सुसंसृष्टं पद्ममेवं विचिन्तयेत्  ३९
पूर्णचन्द्रसमाकारं विमलं मृदुभावकम्
आसनाकारमाख्यातं देवतारूपमुच्यते  ४०
यदाधारस्य पादोऽस्ति आधारशक्तिरुच्यते
शक्त्या वै धार्यते यस्मात्तस्माच्छक्तिरुदाहृता  ४१
बीजवद्वर्धते यस्मात्तस्माद्बीजं प्रकीर्तितम्
अङ्कुराङ्कुरितं कर्म यावदङ्कुरनिर्णयम्  ४२
अनन्तस्य नागदेवाश्च योगस्य दश वायवः
धर्मादीनि च चत्वारि अधर्माणि चतुर्युगम्  ४३
चतुर्युगसमायुक्तं तस्मात्सिंहासनं तथा
दलेष्वेतेषु वामाद्याः कर्णिकायां मनोन्मनी  ४४
केसरेष्वक्षरा प्रोक्ता एताः पद्मस्य देवताः
अम्बी चैव गणांबी च गौरी प्रज्ञादितः क्रमात्  ४५
विमलस्य चतुर्दिक्षु आदौ ++  ++++

अनन्तासनरूपं तु शङ्खपुष्पसमप्रभम् ४६
तस्यैवोपरि योगः स्याद्योगस्योपरि सिंहकम्
चित्रकोज्ज्वलवद्योगं चतुरश्रसमन्वितम् ४७
समं वा चतुरश्रं वा खड्गाकारं सिंहासनम्
पद्मपत्रासमाकारं विमलं तु तदूर्ध्वतः ४८
स्थापनार्चनकाले तु अनन्तादि यथाक्रमम्
अनन्तेन योगसाम्मिश्रं योगं योगेन कीर्तितम् ४९
सिंहेन गात्रसंयुक्तं तस्मात्सिंहासनं स्मृतम्
पद्मं पद्मसमाकारं विमलं विमलं स्मृतम् ५०
तत्तत्स्थानं समाख्यातं पादभागं प्रचक्ष्महे
अनन्तं सृष्टिबन्धं स्यात्सिंहाख्यं स्थितिसंभवम् ५१
सिंहासनं पदार्थं स्यात्परमेण परं पदम्
विमलं विमलं ज्ञानमेतदीश्वरविग्रहम् ५२
नागरे नागरं पीठं द्राविडे द्राविडं भवेत्
वेसरे वेसरं पीठं सर्वसंपत्करं नृणाम् ५३
नागरे वेसरं पीठं वृद्धिवर्धनमारभेत्
समखण्डे महालिङ्गे पद्मपीठमुदाहृतम् ५४
शिवाधिके महालिङ्गे सिंहयुक्तं तु पद्मकम्
पङ्कजं वर्धमाने तु योगादीनि यथाक्रमम् ५५
एतत्त्रैराशिकं कुर्याद्भेदमेकेन तत्र वै
त्रिकोणं चार्धचन्द्रं च पद्मं चैव शिवाधिके ५६
धर्मार्थकाममोक्षार्थं क्रमात्पीठं त्रिधा पुनः
पूर्णचन्द्रसभद्रा च वेदी चैव तु नागरे ५७
श्रेयो लक्ष्मीं च पीठं च स्थण्डिलं चैव द्राविडे
दैविके वेदिभद्रं स्यात्स्वयंभूते तु वेदिका ५८
यापि यक्ष्मा शशाङ्के च आर्षे च यज्ञसंज्ञके
मानुषे मिश्रकं पीठं कामं तत्र बहूनि वै ५९
धारालिङ्गस्य पीठं हि वेदिभद्रं न संशयः
गोकर्णकुम्भपीठं स्यात्स्वस्तिबन्धमतः परम् ६०

पीठभेदं विदित्वा तु धामभेदं विदुर्बुधाः
धामभेदं विदित्वा तु मन्त्रभेदं विदुर्बुधाः ६१
मन्त्रभेदं विदित्वा तु मन्त्रेणार्चयते शिवम्
अर्चयेद्देवदेवेशं सर्वप्राणिहितावहम् ६२
स्थापनेनार्चयेत्कार्यं तेन मन्त्रेण साधयेत्
स्थापयित्वा विधानेन देवदेवं महेश्वरम् ६३
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे आसनविधिपटलः षष्टितमः

## एकषष्टितमः पटलः
## महास्नपनविधिः

अतः परं प्रवक्ष्यामि महास्नपनमुत्तमम्
अपमृत्युप्रशमनमायुरारोग्यवर्धनम् १
दुःखत्रयनिवृत्त्यर्थं सर्वशत्रुविनाशनम्
अयने विषुवे चैव ग्रहणे चोत्सवान्तके २
यागान्ते चाश्वमेधान्ते षडशीतिमुखेषु च
राजाभिषेककाले तु प्रारब्धे राजधानिके ३
अवग्रहे प्रतिष्ठान्ते ज्वरमार्युद्धवे भवेत्
एषु स्नपनं कर्तव्यं द्रव्यदेवसमन्वितम् ४
प्रासादपुरतः कुर्यात्पृष्ठतो वाथ दक्षिणे
उत्तरे वाथ कर्तव्यं स्नानमण्डपमुत्तमम् ५
मानाङ्गुलप्रमाणेन द्वाविंशद्धस्तसंयुतम्
चतुर्दिक्षु चतुर्द्वारं तोरणैरुपशोभितम् ६
द्वारकुम्भसमायुक्तं दर्भमालाविभूषितम्
वितानोपरि संछन्नमष्टदिग्ध्वजलम्बितम् ७
अष्टपर्वतसंयुक्तमष्टमङ्गलसंयुतम्
गोमयालेपनं कृत्वा पिष्टैः सूत्रं प्रताडयेत् ८
पञ्चाधिकं चत्वारिंशत्सूत्रं तालान्तरं न्यसेत्
उदगग्रं ततः कृत्वा परितः पादमाहरेत् ९
स्तम्भांस्तु विन्यसेत्तत्र द्वादशं चान्तरेण तु

षट्वञ्चाधिकसङ्ख्या तु मध्ये तु द्विशतं पदम् १०
वीथीमृजुं त्यजेद्धीमानभितो गोमयेन तु
चतुर्दिक्षु न्यसेद्धीमान्विंशत्यूर्ध्वं शतं पदम् ११
प्रत्येकं तु शतं कोणे शेषाणि परिलोपयेत्
मध्यमे व्यूहके लुप्या द्विपदं चतुरन्तरे १२
एवं कृते पदाः सम्यक्प्रत्येकं षोडशं भवेत्
षोडशानां पदानां तु मध्ये लुप्य चतुष्पदम् १३
ऊर्ध्वव्यूहेन लुप्यं तु परितोऽष्टौ तु लोपयेत्
तन्मध्ये वेदिकां कुर्याद्धस्तमात्रसमुच्छ्रयाम् १४
तद्व्यूहमानविस्तारमभितोऽष्टोपवेदिका
तालमात्रसमुत्सेधं दर्पणोदरसंनिभम् १५
एवं व्यूहक्रमः प्रोक्तः व्यूहाधिपानथ शृणु
मध्यमं तु शिवव्यूहं पदानां चैव षोडश १६
पूर्वादीशानपर्यन्तमनन्ताद्यष्टमूर्तयः
तद्बाह्ये लोकपालाश्च स्वे स्वे स्थाने विशेषतः १७
परितः कल्पयेत्कुण्डं स्थण्डिलैर्वार्द्रवालुकैः
त्रिमेखलं प्रकर्तव्यमेकमेखलमेव वा १८
इन्द्राग्निव्यूहयोर्मध्ये याम्याग्निव्यूहयोरपि
याम्यनैर्ऋतयोर्मध्ये निर्ऋतिवरुणयोरपि १९
वरुणवायुमध्ये तु मध्ये वै वायुसोमयोः
ईशानसोमयोर्मध्ये ईशानशक्रयोरपि २०
हस्तमात्रप्रमाणेन कुण्डानि परिकल्पयेत्
सौवर्णमुत्तमं कुम्भं राजतं मध्यमं भवेत् २१
ताम्रकुम्भं तु हीनं स्यान्मृण्मयं चाधमं भवेत्
द्रोणतोयेन संपूर्णं कुम्भस्यार्धं तु वर्धनी २२
आढकेन तु संपूर्णं कलशं ग्राह्य देशिकः
द्वारं तु नन्दिदैवत्यं कण्ठं कालाधिदैवतम् २३
पार्श्वे पशुपतिश्चैव पृष्ठे भूमिः प्रतिष्ठिता
कलशानि शरावाणि सप्तदशघटं तथा २४

वर्धनीनवसंयुक्तं वस्त्रेण परिवेष्टयेत्
आचार्यः शिल्पिसंयुक्तो नाङ्गहीनशिवद्विजः  २५
शिवाचारसमायुक्तो ज्ञानवान्शिष्यवत्सलः
सर्वमन्त्रविधानज्ञः शुक्लयज्ञोपवीतवान्  २६
हारकेयूरसंयुक्तः सोष्णीषः सोत्तरीयकः
हेमकुण्डलसंयुक्तो हेमयज्ञोपवीतवान्  २७
कपिलागोमयं ग्राह्य सर्वत्र परिलेपयेत्
धूपदीपैरलङ्कृत्य द्वारकुम्भाङ्कुरैरपि  २८
शालिभिः स्थण्डिलं कुर्यात्सर्वव्यूहेष्वनुक्रमात्
तत्तत्पदस्य मध्ये तु चतुरश्रं सुशोभनम्  २९
त्रिप्रस्थमुत्तमं ज्ञेयं द्विप्रस्थं मध्यमं भवेत्
प्रस्थं कन्यसमित्युक्तं तदर्धं तण्डुलं तिलम्  ३०
स्थण्डिलस्योत्तरे पार्श्वे कलशान्साधयेत्क्रमात्
पञ्चपञ्चैव कलशानुपर्युपरि विन्यसेत्  ३१
इमा आपः शिवायेति प्रोक्षयेद्धृदयेन तु
अष्टदिक्षु जलावर्तं स्थापयेदुत्पलोदकैः  ३२
शीताहारिं च तक्कोलं लवङ्गं तिम्पुपत्रकम्
आलोड्य निक्षिपेदम्बु हृन्मन्त्रं तु समुच्चरन्  ३३
मध्यमे वेदिकामध्ये षोडशानां पदेष्वथ
मध्ये चतुष्पदं पद्मं चतुष्पत्रं सकर्णिकम्  ३४
दर्भैः परिस्तरेत्पश्चाल्लाजापुष्पसमन्वितम्
गन्धादिभिः समभ्यर्च्य वक्त्रमन्त्रं समुच्चरन्  ३५
आपूर्य शिवतोयेन शिवकुम्भं च वर्धनीम्
कर्णिकोपरि संस्थाप्य वामभागे तु वर्धनीम्  ३६
सर्वातोद्यसमायुक्तं नृत्तगेयसमाकुलम्
ईशानेन तु मन्त्रेण स्थापयेत्स्थापकोत्तमः  ३७
माणिक्यं मुक्तावैडूर्यं वज्रं माहेन्द्रनीलकम्
हृदयमन्त्रमुच्चार्य कुम्भमध्ये विनिक्षिपेत्  ३८
त्रिणेत्रं चतुर्भुजं देवं चन्द्रार्धकृतशेखरम्

कृष्णापरशुहस्तं च वरदाभयहस्तकम् ३९
क्षौमवस्त्रधरं देवं कुम्भमध्ये तु भावयेत्
ईशानेन तु मन्त्रेण न्यस्त्वा कूर्चं विनिक्षिपेत् ४०
पिधाय तच्छरावेण पुरुषमन्त्रमुच्चरन्
क्षुरिकामन्त्रमुच्चार्य वस्त्रेण परिवेष्टयेत् ४१
बीजमुख्येन गन्धादि धूपादि दशबीजकैः
मुकुलीपद्ममुद्रां च शूलमुद्रां प्रदर्शयेत् ४२
वर्धन्यां विन्यसेद्धेममम्बिकायेति मन्त्रतः
गौरीबीजं न्यसेन्मध्ये गौरीं तत्रैव विन्यसेत् ४३
सुस्तनां चारुवदनां सुकेशां शोभनाम्बराम्
गन्धादिना समभ्यर्च्य बीजमुद्रां प्रदर्शयेत् ४४
एलालवङ्गसंयुक्तं पाद्यमग्निदले न्यसेत्
चन्दनोशीरकर्पूरयुक्तमाचमनीयकम् ४५
नैर्ऋते तु दले न्यस्त्वा आपः क्षीरकुशाक्षतम्
तिलसिद्धार्थयवांश्च वायव्येऽर्घ्यं सुविन्यसेत् ४६
गोमूत्रं गोमयं क्षीरं दधिसर्पिः कुशोदकम्
कुम्भं पूर्णमथो ग्राह्य स्थापयेदीशकोणके ४७
क्षीरं दधि कुशाम्भश्च तिलं वै सर्षपं तथा
मृद्भस्मबिल्वपत्राम्बुनालिकेरफलोदकम् ४८
घृतमुष्णोदकं चैव परितो द्वादश न्यसेत्
वज्राम्बु हैमतोयं च नवनीतं शङ्खमेव च ४९
पद्मं लाजं च रजनी शकृच्चूर्णं रजः स्थिताः
सितार्कं च शमी बिल्वं वैडूर्यं चन्दनं तथा ५०
आर्द्रामोचरसं जाति पनसोशीर एव च
तिलं सक्तुं तथा श्यामं नीवारं श्वेतसर्षपम् ५१
गोधूममिन्द्रनीलं च माषं यवं प्रियङ्गवः
सिन्धुवेणुं च तुलसी पुन्नागोत्पलपाटली ५२
अगरुतक्कोलकच्छोलं स्फटिकं नागपुष्पकम्
कर्पूरं कुङ्कुमं चेष्टिह्रीबेरं च गुलं मुरम् ५३

तकरं हिरएयं चैव नन्द्यावर्तं तु गोक्षुरम्
लोध्रं मुक्ता च धात्री च विष्णुक्रान्ती च धूर्धुरम् ५४
स्थलारविन्दं श्वेतार्कमञ्जनं च मनःशिला
व्याघ्रनखी शताबेरी बला चातिबला तथा ५५
महानीलं शिरीषं च जीवनी पञ्चकर्णिका
स्वप्नपर्णी रुद्रपर्णी पूर्वादूर्वहरीतकी ५६
मल्लिका देवदारुं च लवङ्गं काश्मर्यं तथा
इन्दुकान्तं मयूरं च करवीरं पद्मकान्तकम् ५७
महाद्रोणं च द्रोणं च लक्ष्मीस्थलारविन्दकम्
तेजोवती रुद्रभयं कालनीलमलं तथा ५८
प्रवालं चाभ्रघोरं च गन्धचूर्णं तिलं तथा
सल्लकी चतुरङ्गुल्यं जपा चम्पकमाधवी ५९
इक्षुद्वयं च रजनीं स्थापयेत्स्थापकोत्तमः
रत्नाद्युष्णोदकान्तं च शिवव्यूहे तु विन्यसेत् ६०
वज्रादिबिल्वपर्यन्तमनन्तव्यूहके न्यसेत्
वैडूर्यादि गोधूमान्तं सूक्ष्मव्यूहे तु विन्यसेत् ६१
इन्द्रनीलं समारभ्य कच्छोलान्तं तथैव च
शिवोत्तमस्य व्यूहे तु विन्यसेद्देशिकोत्तमः ६२
स्फटिकादिलोध्रपर्यन्तं एकाक्षीव्यूहके न्यसेत्
मौक्तिकादिसहान्तं तु एकरुद्रेति विन्यसेत् ६३
महानीलं समारभ्य काष्मार्यान्तं तथैव च
त्रिमूर्तिव्यूहके चैव विन्यसेद्देशिकोत्तमः ६४
इन्दुकान्तं समारभ्य आमलक्यन्तमेव च
श्रीकएठव्यूहदेशे तु विन्यसेद्देशिकोत्तमः ६५
प्रवालादिरजन्यन्तं शिखरिडव्यूहके न्यसेत्
वामविद्येशकुम्भाद्यमष्टलोहसमायुतम् ६६
वर्धन्यष्टौ समास्थाप्य स्वस्वमन्त्रं समुच्चरन्
राजतं ताम्रकं सीसं द्रावकं भ्रामकं तथा ६७
सिद्धकांस्यारकूटं च वर्धनीषु च विन्यसेत्

शिवकुम्भे शिवः प्रोक्तः वर्धन्यां च मनोन्मनी ६८
पूर्वादीशान्तके व्यूहे अष्टविद्येश्वराः स्मृताः
शक्तयश्चैव वामादि विन्यसेत्कुम्भवामके ६९
शेषास्तु द्वादशादित्या ज्ञातव्यास्तु विशेषतः
सकूर्चान्सापिधानांश्च सवस्त्रानधिदैवतान् ७०
पूजयेत्तु विशेषेण गन्धपुष्पादिभिः क्रमात्
विंशत्यूर्ध्वशतानां तु प्रधानं चैव मध्यमे ७१
इन्द्रव्यूहस्य तन्मध्ये षोडशस्य तु मध्यमे
कदलीपनसं चैव आम्रं चात्वारिके न्यसेत् ७२
अभितो द्वादशे कोष्ठे ब्रह्मकूर्चं क्रमान्न्यसेत्
पूर्वे तु द्वादशे मध्ये हरिबेरद्वयं न्यसेत् ७३
अग्नौ तु द्वादशे मध्ये कपित्थौ द्वौ तु विन्यसेत्
याम्यके षोडशे मध्ये चत्वारि कलशन्न्यसेत् ७४
चतुरश्चतुरं न्यस्त्वा कलशानां तु विन्यसेत्
अश्वत्थोदुम्बरप्लक्षवटं च क्रमशो न्यसेत् ७५
नैर्ऋतौ द्वादशे मध्ये द्वौ कुम्भौ बदरीफलम्
वारुणे द्वादशे मध्ये द्वौ तु बिल्वफले न्यसेत् ७६
वायव्ये द्वादशे मध्ये न्यस्त्वा नारङ्गकं फलम्
सौम्ये तु षोडशे मध्ये भुवं तुष्य चतुर्ष्वपि ७७
ईशाने द्वादशे मध्ये द्वौ चामलकं विन्यसेत्
शिवाद्भिः पूरयेच्छेषान्कलशान्देशिकोत्तमः ७८
अग्निव्यूहे गते चैव षोडशस्य तु मध्यमे
चत्वारि कलशान्न्यस्त्वा दूर्वाश्चैव रसत्रयम् ७९
अभितो द्वादशे कोष्ठे रजनीचूर्णकं न्यसेत्
इन्द्रे च द्वादशे मध्ये दूर्वादीनि विनिक्षिपेत् ८०
अग्नेः तु नवके मध्ये तिलोदं कलशे न्यसेत्
याम्ये तु द्वादशे मध्ये तिलं यवं च विन्यसेत् ८१
नैर्ऋते नवमे मध्ये गैरिकं तत्र विन्यसेत्
वारुणे द्वादशे मध्ये द्वौ कुम्भौ भस्मसंज्ञितौ ८२

वायव्ये नवके मध्ये निर्यासं परिकल्पयेत्
सौम्ये तु द्वादशे मध्ये द्वौ कुम्भौ सर्षपद्वयम्  ८३
ईशाने नवके मध्ये सितायुक्तघटान्न्यसेत्
शिवाम्भसा तु संपूर्य शेषांश्च कलशान्क्रमात्  ८४
विंशत्यूर्ध्वे शते याम्ये व्यूहे षोडशमध्यमे
चत्वारि कलशान्न्यस्त्वा कल्हारोत्पलकं तथा  ८५
किञ्जल्केन्दीवरं सर्वमाग्नेयादिक्रमान्न्यसेत्
अभितो द्वादशे कोष्ठे पञ्चगव्यं क्रमान्न्यसेत्  ८६
तत्पूर्वे षोडशे मध्ये पञ्चमूर्तिक्रमान्न्यसेत्
आग्नेयां द्वादशे मध्ये द्वौ कुम्भौ गोक्षीरद्वयम्  ८७
याम्ये तु द्वादशे मध्ये द्विकोष्ठे बृहतीद्वयम्
नैर्ऋते द्वादशे मध्ये द्वौ कुम्भौ चन्दनद्वयम्  ८८
वारुणे षोडशे कोष्ठे चत्वारि कलशान्न्यसेत्
मदयन्ती शताबेरी विष्णुक्रान्ति सहा तथा  ८९
वायव्ये द्वादशे मध्ये द्वौ कुम्भौ पार्थिकद्वयम्
सौम्ये तु द्वादशे मध्ये कुम्भेऽशोकद्वयं न्यसेत्  ९०
ईशाने द्वादशे मध्ये पुलस्त्यौ द्वौ तु विन्यसेत्
शेषांश्च कलशान्सर्वान्शिवतोयेन पूरयेत्  ९१
नैर्ऋते शतके मध्ये षोडशस्य तु मध्यमे
चम्पकापाटलीजातीमल्लिकाकुसुमान्न्यसेत्  ९२
अभितो द्वादशे कोष्ठे कषायं परिकल्पयेत्
पूर्वे तु द्वादशे मध्ये हरीतकीविभीतकौ  ९३
आग्नेयां नवमे मध्ये नवनीतं तु विन्यसेत्
याम्ये द्वादशके मध्ये सल्लकी चतुरङ्गुलौ  ९४
नैर्ऋते नवके मध्ये गन्धपत्रं सुविन्यसेत्
वारुणे द्वादशे मध्ये द्वौ पात्रद्वयं विन्यसेत्  ९५
वायौ तु नवके मध्ये एकपत्रारविन्दकम्
सोमे तु द्वादशे मध्ये विन्यसेत्तु बलाद्वयम्  ९६
ईशाने नवके मध्ये न्यस्तव्यं पिप्पलीद्वयम्

शिवाद्भिः पूरयेच्छेषान्कलशान्देशिकोत्तमः ९७
विंशत्यूर्ध्वे शते कोष्ठे वरुणव्यूहके बुधः
तन्मध्ये षोडशे मध्ये चत्वारि कलशान्न्यसेत् ९८
फलत्रयं च कर्पूरमाग्नेयादिषु विन्यसेत्
तद्बाह्ये द्वादशे कोष्ठे मधुं सर्वत्र विन्यसेत् ९९
तदूर्ध्वे द्वादशे मध्ये श्वेतार्कं कुरवो न्यसेत्
पावके द्वादशे मध्ये लघुकोष्ठं तु विन्यसेत् १००
दक्षिणे षोडशे मध्ये राजावर्ताभ्रकद्वयम्
नैर्ऋते द्वादशे मध्ये द्वौ कोष्ठौ लोध्रकद्वयम् १०१
पश्चिमे द्वादशे मध्ये न्यसेत्पद्मद्वयं क्रमात्
वायव्ये द्वादशे मध्ये भृङ्गराजद्वयं न्यसेत् १०२
सोमे तु षोडशे मध्ये चत्वारि कलशान्न्यसेत्
आग्नेयादीशपर्यन्तं जतु वै माषकत्रयम् १०३
ईशानद्वादशे मध्ये लक्ष्मीं च गिरिकर्णिकाम्
शेषांस्तु कलशान्सर्वान्पूरयेच्छिवतोयकैः १०४
वायौ शतपदे धीमान्षोडशस्य तु मध्यमे
चत्वारिकलशान्न्यस्त्वा अष्टमृद्भिः समायुतान् १०५
अभितो द्वादशे कोष्ठे न्यसेदिक्षुरसं क्रमात्
तत्पूर्वे द्वादशे मध्ये न्यस्त्वापामार्गमूलकौ १०६
पावके नवके मध्ये मातुलुङ्गद्वयं न्यसेत्
दक्षिणे द्वादशे मध्ये न्यसेद्वै वेणुकद्वयम् १०७
नैर्ऋते नवके मध्ये लवङ्गं तु विचक्षणः
वारुणे द्वादशे मध्ये तुलसीं च तपस्विनीम् १०८
वायव्ये नवके मध्ये कुङ्कुमं च प्रकल्पयेत्
उत्तरे द्वादशे मध्ये धातकीकरवीरकौ १०९
ईशाने नवके मध्ये चन्दनं परिकल्पयेत्
शिवाद्भिः पूरयेच्छेषान्कलशान्देशिकोत्तमः ११०
विंशत्यूर्ध्वे शते कोष्ठे सौम्यव्यूहे तु विन्यसेत्
मध्यमे षोडशे मध्ये चत्वारि कलशान्न्यसेत् १११

श्वेतशालिमहाशालिगराडशालिरक्तशालिकाः
अभितो द्वादशे मध्ये दधि सर्वत्र विन्यसेत् ११२
पूर्वे तु षोडशे मध्ये जम्बू वै कर्णिकारकम्
श्रेष्ठान्तकं च भूर्जत्वक्पावकादिषु विन्यसेत् ११३
पावके द्वादशे मध्ये काररडकद्वयं न्यसेत्
दक्षिणे द्वादशे मध्ये करवीरद्वयं न्यसेत् ११४
नैर्ऋते द्वादशे मध्ये नन्द्यावर्तद्वयं न्यसेत्
वारुणे षोडशे मध्ये चत्वारि कलशान्यसेत् ११५
महातिलं च सिद्धार्थं कार्पासं च कपित्थकम्
वायव्ये द्वादशे मध्ये मातुलुङ्गद्वयं न्यसेत् ११६
सौम्ये तु द्वादशे मध्ये पुन्नागद्वयकं न्यसेत्
ईशाने द्वादशे मध्ये जपाकं चटकं न्यसेत् ११७
शेषांस्तु कलशान्सर्वान्शिवतोयेन पूरयेत्
ईशे शते पदे मध्ये षोडशस्य तु मध्यमे ११८
व्याघ्रनखी तमाली च द्रोणपुष्पं चतुर्दली
अभितो द्वादशे कोष्ठे स्थाप्य गोघृतमुत्तमम् ११९
तत्पूर्वे द्वादशे मध्ये मार्जनं परिमार्जनम्
आग्नेयां नवके मध्ये मेघं विन्यस्य देशिकः १२०
याम्ये च द्वादशे मध्ये कुमुदौ द्वौ तु विन्यसेत्
नैर्ऋतौ नवके मध्ये वस्त्रतोयं सुविन्यसेत् १२१
वरुणे द्वादशे मध्ये मुरमञ्जी च विन्यसेत्
वायव्ये नवके मध्ये देवदारुं च विन्यसेत् १२२
सौम्ये तु द्वादशे मध्ये जीरकौ द्वौ तु विन्यसेत्
ईशाने नवके मध्ये धात्रीचूर्णं तु विन्यसेत् १२३
शेषांश्च कलशान्सर्वान्शिवाद्भिः परिपूरयेत्
सकूर्चान्सापिधानांश्च सवस्त्रान्साधिदैवतान् १२४
व्यूहानामधिपा ये च त एव कलशाधिपाः
गन्धैः पुष्पैश्च धूपैश्च दीपैरर्घ्यैश्च पूजयेत् १२५
पद्ममुद्रां बीजमुद्रां सुरभीं च प्रदर्शयेत्

पुरयाहं वाचयेत्तत्र पवमानसमन्वितम् १२६
कुरडे वा स्थरिडले वापि होमं कुर्याद्यथाविधि
पलाशोदुम्बराश्वत्थखादिरबिल्वमेव च १२७
प्लक्षन्यग्रोधमायूरं पूर्वादिसमिधः क्रमात्
समिदाज्यचरुं लाजांस्तिलं च यव एव च १२८
प्रत्येकं शतमर्धं वा जुहुयात्क्रमशः पुनः
त्रियम्बकेन समिधो घृतं हुत्वा हृदा बुधः १२९
देवस्य त्वा चरुं हुत्वा शिखया लाजमेव च
यज्ञेन यज्ञं तिलस्योक्तं कवचेन यवं हुनेत् १३०
मिन्दाहुतिं च कूष्मारडं महाव्याहृतिमेव च
ब्रह्माङ्गं च ततो हुत्वा स्विष्टान्तं होममाचरेत् १३१
द्वारपूजां ततः कृत्वा प्रविश्याभ्यन्तरं तथा
लिङ्गपीठस्थलानां च शुद्धिं कृत्वा विशेषतः १३२
निर्माल्यं तु विसृज्याथ कल्पयेदासनं क्रमात्
आवाहयेत्ततो देवं पूर्वोक्तविधिना सह १३३
सर्वातोद्यसमायुक्तं नृत्तगेयसमन्वितम्
ब्रह्मघोषसमायुक्तं शिवकुम्भं समुद्धरेत् १३४
शिवकुम्भाच्छिवबीजं लिङ्गमूर्ध्नि तु विन्यसेत्
वर्धन्यां वर्धनीबीजं पिरिडकायां तु विन्यसेत् १३५
पाद्यं पादे हृदा दत्वा वक्त्रेणाचमनं ददेत्
संस्नाप्य पञ्चगव्यादि महाव्योम्नेति मन्त्रतः १३६
ब्रह्माङ्गैर्दशबीजैश्च रुद्रसूक्तैर्विशेषतः
स्नाप्य पूर्वोक्तमार्गेण द्वारं प्रति विशेत्पदे १३७
शिवकुम्भं पुरोद्धृत्य वर्धनीं च ततः परम्
विद्येशकुम्भशक्तीश्च तेषामावरणादि च १३८
उद्धृत्य स्नापयेदीशं पूज्य व्यूहान्तरे बुधः
इन्द्रव्यूहं समारभ्य ईशव्यूहान्तमेव च १३९
अनन्तावरणमारभ्य परितश्चोद्धरेत्क्रमात्
उद्धृत्य प्रणवेनैव दशावरणमूर्तिपः १४०

यजेदावाहनान्ते तु गन्धपुष्पैः सधूपकैः
कलशं वामहस्ते तु न्यस्तव्यं दक्षिणेन तु १४१
पिधाय कुम्भवक्त्राणि गोशृङ्गाग्रप्रमाणतः
अभिषेकं च कर्तव्यं लिङ्गमूर्धनि देशिकः १४२
प्राप्तायां सन्ध्यावेलायां स्नानकाले त्वहर्निशम्
सन्ध्याकर्माणि सर्वाणि बल्यन्तं हि समाचरेत् १४३
सन्ध्यान्ते स्नापयेत्पश्चाच्छेषाणि कलशानि वै
अर्चनोक्तं समभ्यर्च्य सर्वस्यान्ते विशेषतः १४४
पायसं कृसरं गौल्यं मौद्गं शुद्धान्नमेव च
शुद्धान्नं पूर्ववक्त्रे तु मौद्गं वै दक्षिणे मुखे १४५
पायसं पश्चिमे वक्त्रे कृसरं चोत्तरे ददेत्
ऊर्ध्ववक्त्रे गुलान्नं तु हृदयेन विनिक्षिपेत् १४६
पुनराचमनं दद्यात्ताम्बूलं हृदयेन तु
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् १४७
सुभिक्षं गोबहुत्वं च राजराष्ट्रविवर्धनम्
महास्नपनमाख्यातं पञ्चाशत्स्नपनं शृणु १४८

इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे महास्नपनविधिपटलः एकषष्टितमः

## द्विषष्टितमः पटलः
## पञ्चाशत्स्नपनविधिः

अतः परं प्रवक्ष्यामि पञ्चाशत्स्नपनं परम्
भुक्तिमुक्तिप्रदं चैव सर्वव्याधिनिवारणम् १
उत्सवान्ते प्रतिष्ठान्ते ग्रहणे चन्द्रसूर्ययोः
सङ्क्रान्तौ विषुवे चैव षडशीतिमुखेषु च २
अमायां तु तथाष्टम्यामार्द्रायां चैव कारयेत्
निर्दिष्टदिनपूर्वे तु सप्ताहे वाथ पञ्चमे ३
अङ्कुराण्यर्पयेद्धीमान्पूर्वोक्तविधिना सह
मण्डपे वा प्रपायां वा स्नपनं सम्यगाचरेत् ४
मण्डपे मध्यमे धीमान्वितानध्वजमालया

दर्भमालासमायुक्तं मुक्तादामैरलङ्कृतम् ५
गोमयालेपनं कृत्वा सूत्रपातनमाचरेत्
प्रागग्रं दशसूत्रं स्यादुदगग्रं तथैव च ६
मध्ये नवपदं पद्ममष्टपत्रं सकर्णिकम्
लेपयेत्षोडशं बाह्ये पदं गोमयवारिणा ७
शक्रादिसोमपर्यन्तं द्वारं द्वे द्वे पदे न्यसेत्
उभयोरपि पार्श्वाभ्यां द्वे द्वे तु पदे आहरेत् ८
प्रत्येकमष्टमं कोणं कल्पयेत्कल्पवित्तमः
एवं कृत्वा विधानेन ततः स्थण्डिलमारभेत् ९
शालिभिर्व्रीहिभिश्चाथ प्रत्येकं प्रस्थसंमितम्
द्रोणं तु शिवकुम्भं स्याद्द्रोणार्धं वर्धनी भवेत् १०
तदर्धं तण्डुलैर्भूष्य तिलदर्भसमन्वितम्
अक्षराणि लिखेत्पश्चात्पद्माद्यावरणे बुधः ११
कर्णिकायां न्यसेत्कूटं बिन्दुनादसमन्वितम्
यकारं पूर्ववक्त्रे तु रकारं दक्षिणे लिखेत् १२
लकारं पश्चिमे वक्त्रे वकारं चोत्तरे लिखेत्
तवदेशे शकारं स्यात्षकारं नैर्ऋतगोचरे १३
सकारं वायुदेशे तु हकारं चेशगोचरे
कर्णिकायां न्यसेत्पत्रे स्वर्णवर्णान्यनुक्रमात् १४
तद्बाह्यावरणे कोष्ठे स्वरं पूर्वादितः क्रमात्
तद्बाह्यावरणे धीमान्पूर्वादीनि प्रदक्षिणम् १५
ककारादिभकारान्तं न्यस्त्वा कूटे मकारकम्
स्थण्डिलस्योत्तरे देशे कलशान्सादयेत्क्रमात् १६
सौवर्णं राजतं वापि ताम्रं वा मृण्मयं तु वा
सूत्रेण वेष्टयेत्सर्वान्गवाक्षसदृशान्तरम् १७
प्रक्षाल्य चास्त्रमन्त्रेण पूजयेद्धृदयेन तु
गन्धतोयेन सम्पूर्णं पञ्चरत्नसमायुतम् १८
कूटमध्ये न्यसेत्कुम्भमीशानेन तु मन्त्रतः
सकूर्चं सापिधानं च सवस्त्रं बीजसंयुतम् १९

आवाहयेत्ततो देवं त्रिणेत्रं च चतुर्भुजम्
कृष्णापरशुसंयुक्तं वरदाभयहस्तकम् २०
दिव्याम्बरधरं देवं दिव्यस्रग्गन्धभूषितम्
वर्धनीं विन्यसेद्वामे गौरीगायत्रिमन्त्रतः २१
सकूर्चां सापिधानां च सवस्त्रां वारिपूरिताम्
दिव्याम्बरधरां देवीं दिव्यगन्धानुलेपनाम् २२
सुस्तनां चारुवदनां किंचित्प्रहसिताननाम्
गन्धपुष्पादिना पूज्य स्वस्वबीजमनुस्मरन् २३
मुकुलीं पद्ममुद्रां च बीजमुद्रां च दर्शयेत्
यकारे विन्यसेत्पाद्यं दूर्वोशीरं च चन्दनम् २४
एवं फलत्रयैर्युक्तं रेफं चाचमनीयकम्
आपः क्षीरकुशाग्राणि अक्षतैर्यवतण्डुलैः २५
तिलं सिद्धार्थसंयुक्तमर्घ्यं न्यस्त्वा लकारके
आढकार्धं तु गोमूत्रं कुडुपं गोमयेन च २६
प्रस्थं तु क्षीरसम्पूर्णं तदर्धं चोच्यते दधि
आज्यं कुडुपमित्याहुः समाहृत्य विशेषतः २७
वकारे विन्यसेद्धीमान्शकारे तु कुशोदकम्
षकारे विन्यसेत्क्षीरं सकारे चोच्यते दधि २८
हकारे विन्यसेदाज्यमुष्णोदं चोपकल्पयेत्
पाद्याद्याज्यान्तपर्यन्तमष्टविद्येश्वरान्न्यसेत् २९
अकारे मधु विन्यस्य आकरे सितसर्षपम्
जातीफलमिकारे स्यादीकारे तु गुलोदकम् ३०
पुष्पोदकमुकारे तु ऊकारे कदलीफलम्
ऋकारे विन्यसेद्भस्म ॠकारे लाजमेव च ३१
एलोदकं ऌकारे तु ॡकारे चाम्रमुच्यते
एकारे लघु विन्यस्य ऐकारे चन्दनोदकम् ३२
ओकारे लाजचूर्णं तु औकारे तिलमेव च
नालिकेरं तु अंकारे अःकारे दाडिमी फलम् ३३
वसवश्चाष्टमूर्तीश्च अकारादिषु विन्यसेत्

ककारे चम्पकं न्यस्त्वा खकारे पद्ममेव च ३४
गकारे धातकीं न्यस्त्वा घकारे द्रोणपुष्पकम्
पुन्नागं स्यान्ङकारे तु नारङ्गं च चकारके ३५
छकारे विन्यसेल्लक्ष्मीं विष्णुक्रान्तिं जकारके
झकारे विन्यसेद्दुग्धं कर्पूरं च ञकारके ३६
इक्षुसारं टकारे तु ठकारे चोत्पलोदकम्
व्याघ्रनखं डकारे तु कपित्थं च ढकारके ३७
णकारे मल्लिकां न्यस्त्वा रोचनं स्यात्तकारके
थकारे स्थलारविन्दं स्यात्सितं चैव दकारके ३८
यावकं स्याद्धकारे तु जम्बु न्यस्त्वा नकारके
अपामार्गं पकारे तु फकारे तुलसी भवेत् ३९
बकारे रजनीचूर्णं मार्जनं स्याद्भकारके
लोकपालाश्च मरुतो भूधरांश्चाष्टदेवतान् ४०
गन्धपुष्पादिना पूज्य स्वस्वनाम्ना विशेषतः
शान्तमुद्रानमस्कारं दर्शयेद्देशिकोत्तमः ४१
यथा वै स्थापितं मार्गं तथा चोद्धारणं कुरु
द्वारपूजां ततः कृत्वा प्रविश्याभ्यन्तरं ततः ४२
निर्माल्यं लोपयेद्विद्वान्लिङ्गपीठस्थलं क्रमात्
शुद्धिं कृत्वा विशेषेण पवमानमुदीरयन् ४३
आसनं कल्पयेद्धीमान्पूर्वोक्तविधिना सह
आवहनादिकं सर्वं पूर्वोक्तविधिना कुरु ४४
सर्वातोद्यसमायुक्तं नृत्तगेयसमन्वितम्
ब्रह्मघोषसमायुक्तमभिषेकं समाचरेत् ४५
शिवबीजं समादाय तद्बीजं लिङ्गमूर्धनि
न्यस्त्वाद्यं च यथान्यायं पिण्डिकायां तु वर्धनीम् ४६
न्यस्त्वा यथाक्रमेणैव पाद्यं दद्याद्धृदा बुधः
वक्त्रेष्वाचमनं दद्याच्छिरस्यर्घ्यं निवेदयेत् ४७
पञ्चगव्यादिभिर्धीमानभिषेकं समाचरेत्
महाव्योमेति मन्त्रेण ब्रह्माङ्गैश्च विशेषतः ४८

पवमानेन सूक्तेन अभिषेकं समाचरेत्
कुम्भरक्षाधिपान्सर्वान्लिङ्गस्य परितो न्यसेत् ४९
आवाह्योद्वासयेत्कुम्भानाव्रतान्तेऽभिषेचयेत्
अर्चनोक्तं समभ्यर्च्य नैवेद्यान्तं विशेषतः ५०
शुद्धान्नं कृसरं गौल्यं मुद्गान्नं पायसं ददेत्
पुनराचमनं दद्यान्निर्माल्यं तु विसर्जयेत् ५१
ताम्बूलं दापयेद्धीमान्हृदयेनैव मन्त्रतः
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ५२
उक्तानुक्तं च यत्किंचित्तत्सर्वं हृदयेन तु
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे पञ्चाशत्स्नपनविधिपटलः द्विषष्टितमः

## त्रिषष्टितमः पटलः
## पञ्चभूमिलक्षणविधिः

अतः परं प्रवक्ष्यामि पञ्चभूमेस्तु लक्षणम्
पञ्चसङ्ख्याप्रमाणेन प्रासादं कारयेद्बुधः १
रुद्रहस्तं समारभ्य यावदेकोनविंशतिः
पञ्चधा तारमुच्यते प्रासादानां विशेषतः २
विस्तारद्विगुणोत्सेधमाद्ययोस्तु द्वयोस्ततः
पादोनद्विगुणोत्सेधमन्येषु त्रितयेषु च ३
गर्भगेहं नवांशं स्यात्त्र्यंशं स्याद्भित्तिविस्तरम्
आलिन्दं स्यात्तथांशेन खण्डहर्म्यं तथांशकम् ४
अंशेन कूटविस्तारं हारांशं लम्बनासिका
शालायामं द्विभागं स्यादेकांशे सिंहपञ्जरम् ५
महाशाला त्रियंशेन कारयेल्लक्षणान्वितम्
चतुर्दण्डं त्रिदण्डं वा शालानिर्गममुच्यते ६
तदर्धं पक्षशाला स्यात्तत्समं कूटनिर्गमम्
ऊर्ध्वभूमिर्नवांशः स्यादेकांशे सौष्ठिकं भवेत् ७
हारान्तरं स्यादंशेन पञ्जरैरुपशोभितम्
अध्यर्धहस्तिपृष्ठेन द्व्यंशैः शालायतं भवेत् ८

अष्टांशं तु विहीनं स्यात्सौष्ठिकानां तलं प्रति
तदंशं हारयुक्तं च तद्वत्कोष्ठं च पञ्जरम् ९
तस्योर्ध्वे भूमिः सप्तांशमेकांशं कूटविस्तृतम्
हारं तस्य तदंशेन हारमध्ये तु पञ्जरम् १०
हस्तिपृष्ठं तदंशेन कोष्ठायामं तथांशकम्
तस्योर्ध्वभूमिः पञ्चांशं सकलं तत्षडंशकम् ११
एकांशं कूटविस्तारमेकांशेन तु पञ्जरम्
शालायामं द्वियंशाभ्यां लक्षणोक्तं प्रकल्पयेत् १२
विमानोत्सेधं विभजेच्चत्वारिंशत्तुरीयकैः
अर्धाधिकद्विभागेन मसूरं तु प्रकल्पयेत् १३
द्विगुणं पाददैर्घ्यं स्यात्तस्यार्धं चोर्ध्वमञ्चकम्
अर्धाधिकं चतुर्थाङ्गैः तस्योर्ध्वे चाङ्घ्रिकायतम् १४
प्रस्तरस्य द्विभागेन द्विगुणं चोर्ध्वपादकम्
तस्यार्धं चोर्ध्वमञ्चं स्यादूर्ध्वपादं त्रियर्धकम् १५
अध्यर्धं मञ्चस्योत्सेधं वेदिका भागमेव च
द्विभागेन गलं कुर्याद्द्वादशार्धाधिकं शिखा १६
शेषं स्तूपिरिति ख्यातमेतत्पञ्चतलं मतम्
चतुरश्रमधिष्ठानं चतुरश्रं शिखा भवेत् १७
समं त्रिपादमर्धं वा मण्डपं प्रस्तरान्वितम्
पार्श्वयोः पृष्ठतश्चैव तोरणानि प्रकल्पयेत् १८
सौष्ठिभिः षोडशैर्युक्तं चतुर्विंशतिशालकम्
षोडशैर्हस्तिपृष्ठैश्च चत्वारिंशच्च पञ्जरम् १९
अशीतिशतनासीभिरावृतं स्यात्कपोतकम्
चतुर्भिर्महानासीभिर्भूषितं शिखरं भवेत् २०
कूटे कूटे चतुर्नास्यः शालामध्ये तु नासिका
एभिस्तु लक्षणैः प्रोक्तमिन्द्रकान्तमिति स्मृतम् २१
त्रयोदशकरं तारं द्विगुणं तस्य तुङ्गकम्
रुद्रभागेन विभजेदेकांशं कूटविस्तरम् २२
हारान्तरद्विभागाभ्यां तन्मध्ये हस्तिपृष्ठकम्

एकांशं पञ्जरायामं शालायामद्विधं क्रमात्  २३
निर्यूहं कूटशालायां दण्डं वाध्यर्धदण्डकम्
शालायामार्धदण्डेन निर्गतिः परिपठ्यते  २४
तस्योर्ध्वे भूमिसप्तांशमेकांशं कूटविस्तृतम्
हारान्तरं स्यादध्यर्धं पञ्जैरुपशोभितम्  २५
शालायामं द्विभागं स्यात्पञ्चांशं चोर्ध्वभूमिकम्
एकांशं कूटविस्तारं हारं चैकांशमेव च  २६
शालामेकेन भागेन कुर्याल्लक्षणसंयुतम्
तदूर्ध्वे भूमिस्त्र्यंशः स्यात्सकलं पञ्चभागिकम्  २७
सौष्ठिः स्यादेकभागेन हारं चैकेन कल्पयेत्
शालां चैकेन भागेन कल्पयेत्कल्पवित्तमः  २८
शालामध्ये तु गेहं स्याद्गेहमध्ये तु मूर्तयः
नानाधिष्ठानसंयुक्तं नानापादैरलङ्कृतम्  २९
चतुरश्रमधिष्ठानं शालाकूटं तु निर्गमम्
कूटे कूटे चतुर्नास्यः शालामध्ये च नासिका  ३०
तस्मादर्धं त्रिपादं वा मुखमण्डपमिष्यते
विमानोत्सेधं विभजेत् षट्त्रिंशतिविभागया  ३१
द्विभागाभ्यामधिष्ठानं चतुर्भिः पाददैर्घ्यकम्
प्रस्तरोच्चं द्विभागाभ्यामूर्ध्वपादं तुरीयकम्  ३२
पादहीनद्विभागाभ्यां प्रस्तरोच्चं प्रकल्पयेत्
पादाधिकत्रयेनैव ऊर्ध्वपादं प्रकल्पयेत्  ३३
पादहीनद्विभागाभ्यां मञ्चोत्सेधं प्रकल्पयेत्
लक्षणेन त्रिभागेन चोर्ध्वपादं प्रकल्पयेत्  ३४
तस्योर्ध्वे मञ्चमध्यर्धं त्रिभागं चोर्ध्वपादकम्
सपादभागं मञ्चोर्ध्वमेकभागेन वेदिका  ३५
पादहीनद्विभागेन गलं कुर्याद्विचक्षणः
पादत्रयेण शिखरं शेषं स्थूप्याश्च मानकम्  ३६
शालाभिः षोडशैर्युक्तं सौष्ठिकं च तथैव च
द्वात्रिंशत्पञ्जरैर्युक्तं द्विशतैरनुनासिभिः  ३७

सपादहीनं शिखरं शिखरे चाष्टनासिकाः
एभिस्तु लक्षणैर्युक्तं मेरुच्छन्दमिति स्मृतम्  ३८
तिथिहस्तप्रविस्तारं पादोनद्विगुणोच्छ्रयम्
विभजेत्तिथिभागेन नालगेहं नवांशकम्  ३९
त्र्यंशं तद्भित्तिविस्तारमालिन्दं चैकभागया
द्व्यंशं तद्भित्तिविस्तारं द्विभागं सौष्ठितारकम्  ४०
हारान्तरं द्विभागं स्याद्धारपञ्जरशोभितम्
गजतुण्डं तथांशेन लम्बनासी तथा भवेत्  ४१
शालातारं त्रिभागं स्यादादिभूमिर्द्विरेव तु
शाला च गजतुण्डं च कूटनिर्ह्यूहमेव च  ४२
मानसूत्राद्बहिस्तस्मात्त्रिदण्डं च द्विदण्डकम्
ऊर्ध्वभूमिर्नवांशं स्यात्सौष्ठिविस्तारमेकशः  ४३
हारान्तरं स्यादंशेन एकांशेन च पञ्जरम्
शालायामं द्विभागं स्यात् सप्तांशं चोर्ध्वभूमिकम्  ४४
सौष्ठिरेकांशमेवं स्यादध्यर्धं हारकं भवेत्
शालायामं द्विभागं स्यात्कल्पयेत्सविशेषतः  ४५
तदूर्ध्वभूमिपञ्चांशं कूटशालादिभिर्युतम्
तस्मात्त्रिभागमर्धं वा मुखमण्डपमुत्तमम्  ४६
हारान्तरे विशेषेण हस्तिवक्त्रं प्रकल्पयेत्
विमानोत्सेधं विभजेच्चत्वारिंशच्छताष्टकम्  ४७
मसूरकं स्यात्त्र्यंशेन षडंशैः पादतुङ्गकम्
त्र्यंशेन प्रस्तरं कुर्यात्पञ्चार्धेनोर्ध्वपादकम्  ४८
पादहीनत्रिभागेन तस्योर्ध्वे प्रस्तरं कुरु
तस्योर्ध्वे पञ्चभागेन पादायामं प्रकल्पयेत्  ४९
अर्धाधिकद्विभागेन कल्पयेत्प्रस्तरं पुनः
सार्धचत्वारिभागेन ऊर्ध्वपादं प्रकल्पयेत्  ५०
पादाधिकद्विभागेन तस्योर्ध्वे मञ्चमुच्यते
पादाधिकचतुर्थेन तस्योर्ध्वे चाङ्घ्रिकां कुरु  ५१
कुर्यान्मञ्चं द्विभागाभ्यां भागेनैकेन वेदिका

अध्यर्धं स्याद्गलोत्सेधं शिखरं पादाधिकत्रयम्  ५२
शेषं स्थूपिरिति ख्यातं सर्वशास्त्रेषु संमतम्
नानामसूरकैर्युक्तं नानास्तम्भसमन्वितम्  ५३
शालाभिः षोडशैर्युक्तं तद्वत्सौष्ठिभिरन्वितम्
द्वात्रिंशत्पञ्जरैर्युक्तं गजपृष्ठाष्टसंयुतम्  ५४
शतैः षण्णवतीभिश्च नासिकाभिरलङ्कृतम्
सुवृत्तं शिखरं तस्मिन्महानासी चतुर्युतम्  ५५
नानाविद्याधरैर्युक्तं नानास्तम्भसमन्वितम्
एभिस्तु लक्षणैर्युक्तं रुद्रकान्तविमानकम्  ५६
सप्तदशकरं तारं पादोनद्विगुणोच्छ्रयम्
गर्भगेहं नवांशं स्यात्तद्गेहं वृत्तमाचरेत्  ५७
त्रिभागैर्भित्तिविस्तारं भागेनालिन्दमेव च
खण्डहर्म्यं तथांशेन परितः कल्पयेत्ततः  ५८
एकांशं कूटविस्तारं शालायामं त्रयं भवेत्
शुकनासिहर्म्यमङ्गं हारान्तरद्वयं भवेत्  ५९
उभायोरपि पार्श्वाभ्यां हारपञ्जरशोभितम्
आदिसौष्ठिकविस्तारमष्टाष्टांशं विहीनकम्  ६०
उपर्युपरि कूटानामंशं हारसमन्वितम्
एकांशं कूटविस्तारं हारायामं तथांशकम्  ६१
शालायामं द्विभागाभ्यामध्यर्धं हस्तितुण्डकम्
मुन्यंशं चोर्ध्वभूमिः स्यात्कूटकोष्ठैर्विभूषितम्  ६२
बाणांशं स्यात्तदूर्ध्वे तु सौष्ठिकोष्ठसमन्वितम्
प्रासादार्धत्रिभागं वा मुखमण्डपमिष्यते  ६३
नानाधिष्ठानसंयुक्तं नानावातायनान्वितम्
नानापादसमायुक्तं नानाकुम्भलतान्वितम्  ६४
विमानोत्सेधं विभजेत्त्रयस्त्रिंशतिभागया
द्विभागाभ्यामधिष्ठानं चतुरङ्घ्रिकमायतम्  ६५
मञ्चमाश्विनिभागं स्यात्त्रिभागं चोर्ध्वपादिकम्
पादहीनद्विभागेन तदूर्ध्वे प्रस्तरं कुरु  ६६

ऊर्ध्वपादं त्रिभागं स्यादध्यर्धं चोर्ध्वमञ्चकम्
अर्धाधिकद्विभागेन कल्पयेदूर्ध्वभागिकम् ६७
सपदांशेन मञ्चं स्याद्भागं वै वेदिका भवेत्
अध्यर्धं कण्ठमित्युक्तं शिखरमर्धाधिकत्रयम् ६८
शेषं स्थूपिरिति ख्यातं सर्वदेवेषु योग्यकम्
शालाभिः षोडशैर्युक्तं षोडशैः सौष्ठिकैर्युतम् ६९
षट्त्रिंशत्पञ्जरैर्युक्तं शुकनास्यष्टभिर्युतम्
द्विशतैरनुनासीभिरन्वितं तोरणैर्युतम् ७०
शिखरं वृत्तमेवं स्यान्महानासीचतुर्युतम्
एभिस्तु लक्षणैर्युक्तं विजयं धाममुच्यते ७१
एकोनविंशतिर्हस्तं प्रासादस्य तु विस्तरम्
पादोनद्विगुणं तुङ्गं भागं स्यात्तिथिसङ्ख्यया ७२
पञ्चविंशति तन्मध्ये गर्भगेहमिति स्मृतम्
त्रिभागैर्भित्तिविस्तारमलिन्दं चन्द्रभागया ७३
उपभित्तिस्तथांशेन कूटविस्तारमेकशः
हारान्तरं स्याद्द्व्यंशेन द्व्यंशं शालायतं भवेत् ७४
हारा स्यादेकभागेन मध्यशाला त्रयं भवेत्
हारान्तरं तथांशेन द्वाभ्यां शालायतं भवेत् ७५
द्व्यंशेन हारा कर्तव्या कूटमेकेन कारयेत्
यथायुक्त्या प्रकर्तव्यं चोर्ध्वभूमेस्तु निर्गतिम् ७६
ऊर्ध्वभूमिस्तु रुद्रांशं कूटमेकेन कारयेत्
हारान्तरं स्यादंशेन हस्तिपृष्ठं तथांशकम् ७७
अंशेन हारा कर्तव्या शलायामद्वयं भवेत्
हारान्तरं स्यादंशेन सौष्ठिमेकेन कारयेत् ७८
ग्रहांशं स्यात्तदूर्ध्वे तु एकांशं कूटविस्तरम्
हारान्तरं स्यादंशेन शालायामं द्विभागिकम् ७९
लम्बनासी तथांशेन शालायामं द्विभागिकम्
हारान्तरं स्याद्व्यंशेन कूटविस्तारमेकशः ८०
ऋष्यंशं स्यात्तदूर्ध्वे तु कूटमेकेन कारयेत्

हारान्तरं स्यादंशेन हारमध्ये तु नासिका ८१
शालायामं तथांशेन द्विभागं हारान्तरं विदुः
एकेन कूटविस्तारं लक्षणेन समन्वितम् ८२
तस्याग्रे मण्डपं कुर्यात्त्रिपादं वार्धमेव वा
विमानोत्सेधं विभजेच्चत्वारिंशत्सहाष्टकैः ८३
मसूरकं त्रिभागैस्तु षडंशं पादतुङ्गकम्
त्रियंशकैस्तु प्रस्तरं कुर्यात्पञ्चोर्ध्वभागिकम् ८४
पादहीनत्रिभागेन तस्योर्ध्वे प्रस्तरं भवेत्
तस्योर्ध्वे पञ्चभागेन पादायामं प्रकल्पयेत् ८५
अर्धाधिकद्विभागेन कल्पयेत्प्रस्तरं पुनः
शालाचतुर्थभागेन चोर्ध्वभागं प्रकल्पयेत् ८६
पादाधिकद्विभागेन तस्योर्ध्वे मञ्चमुच्यते
पादाधिकचतुर्थेन तस्योर्ध्वे चाङ्घ्रिका भवेत् ८७
कुर्यान्मञ्चं द्विभागेन भागेनैकेन वेदिका
अध्यर्धं स्याद्गलोत्सेधं शिखरं पादाधिकत्रयम् ८८
शेषं स्थूपिरिति ख्यातं कल्पयेत्कल्पवित्तमः
सौष्ठिकैः षोडशैर्युक्तं शालाद्वात्रिंशदेव हि ८९
चत्वारिंशच्चतुर्भिश्च पञ्जरैः समलङ्कृतम्
गजपृष्ठं तु चत्वारि लम्बनास्यश्च षोडश ९०
द्विशतैश्चत्वारिंशद्भिरनुनासीभिरन्वितम्
एभिस्तु लक्षणैर्युक्तं मेरुप्रासादमुत्तमम् ९१
पञ्चभूमिरिति प्रोक्तं षड्भूमिरथ वक्ष्यते ९२
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे पञ्चभूमिलक्षणविधिपटलः त्रिषष्टितमः

## चतुष्षष्टितमः पटलः
## प्रासादप्रोक्षणविधिः

अतः परं प्रवक्ष्यामि शृणु वह्ने विशेषतः
प्रासादप्रोक्षणं कृत्वा सर्वशान्तिकरं परम् १
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने

सुमुहूर्ते सुलग्ने च प्रोक्षणं तु समाचरेत् २
उपानात्स्तूपिपर्यन्तं सुधाकर्म समाचरेत्
प्रासादस्य चतुर्दिक्षु सप्तहस्तेन मण्डपान् ३
कारयेत्तु पृथग्वह्ने दर्पणोदरसंनिभान्
ध्वजदामवितानैश्च दर्भमालातरङ्गकैः ४
स्नानत्रयं ततः कृत्वा आचार्यो मूर्तिपैः सह
स्थानशुद्धिं ततः कृत्वा प्रोक्षयेत्पुरुषेण तु ५
दर्भमालाभिरावेष्ट्य प्रासादं तन्तुना सह
स्थूप्यग्राद्धोमपर्यन्तं वस्त्रेणावेष्टयेत्ततः ६
प्रासादाभ्यान्तरे धीमान्वास्तुहोमं समाचरेत्
पर्यग्निकरणं कृत्वा पुनः पुण्याहमाचरेत् ७
स्थण्डिलं कारयेद्वेद्यामष्टद्रोणैः पृथक्पृथक्
तण्डुलैः शोभितं कृत्वा तिलदर्भैः परिस्तरेत् ८
कलशान् लक्षणोपेतान्गन्धवारिप्रपूरितान्
सकूर्चान्सापिधानांश्च ससूत्रान्वस्त्रसंयुतान् ९
स्थापयित्वार्चयेद्धीमान् वेदिकोपरि मध्यमे
मध्ये कुमारकुम्भस्य तस्य बीजमुदाहरन् १०
अग्निवर्गादिमं बीजं पञ्चमस्वरसंयुतम्
बिन्दुनादसमायुक्तं कौमारं बीजमुत्तमम् ११
षण्मुखं च सुरेशानं सेनापतिं सुराग्रकम्
गजेन्द्रं हरिरूपं च सुब्रह्मण्यं गुहं क्रमात् १२
पूर्वादिकलशे न्यस्त्वा पूजयेत्तु स्वनामतः
दक्षिणे वेदिकामध्ये दक्षिणामूर्तिकुम्भकम् १३
यवर्गस्याष्टमं बीजं प्रलयाग्निसमन्वितम्
औकारस्वरसंयुक्तं बिन्दुनादसमन्वितम् १४
अभितः कलशानष्टौ विद्येश्वरसमन्वितान्
स्थापयित्वा स्वनाम्ना तु पूजयेत्तु विधानतः १५
पश्चिमे वेदिकामध्ये स्थाप्य विष्णुमयं घटम्
सकूर्चं सापिधानं च सवस्त्रं बीजसंयुतम् १६

सप्तवर्गाञ्चतुर्थं तु तृतीयस्वरसंयुतम्
बिन्दुनादसमायुक्तं विष्णुबीजमनुस्मरन्  १७
अभितः कलशानष्टौ स्थापयेद्वारिपूरितान्
सङ्कर्षणं च प्रद्युम्नमनिरुद्धाच्युतौ तथा  १८
प्रभविष्णुं महाविष्णुं पुरुषं सत्यकं न्यसेत्
पूजयित्वा यथान्यायं स्वस्वबीजेन देशिकः  १९
उत्तरे वेदिकामध्ये न्यसेद् ब्रह्ममयं घटम्
षष्ठवर्गतृतीयं तु मायानलसमन्वितम्  २०
बिन्दुनादसमायुक्तं ब्रह्मबीजमुदाहृतम्
अभितः कलशानष्टौ विन्यसेद्वारिपूरितान्  २१
प्रजापतिं च धातारं विधातारं पितामहम्
हिरण्यगर्भं यमं धौतं स्रष्टारं क्रमशो न्यसेत्  २२
पूजयित्वा स्वनाम्ना तु गन्धपुष्पादिना बुधः
शिवाग्रे स्थण्डिलं कृत्वा पूर्वोक्तविधिना सह  २३
विद्यातत्त्वमयं कुम्भं बीजेन सह विन्यसेत्
यवर्गस्याष्टमं बीजं षष्ठस्वरसमन्वितम्  २४
औकारस्वरसंयुक्तं बिन्दुनादसमन्वितम्
अभितः कलशानष्टौ स्थापयेत्तु विचक्षणः  २५
विश्वरूपो विशालाक्षो विबुधो विह्वलस्तथा
चण्डरुद्रो महावेगो भूधरो मेघवाहनः  २६
एतद्विमानपालांश्च पूर्वादिकलशे न्यसेत्
पूजयित्वा स्वनाम्न तु गन्धपुष्पादिभिः क्रमात्  २७
तस्याग्रे स्थण्डिलं कृत्वा निर्दोषैः सिकतैः तथा
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्  २८
पलाशखादिराश्वत्थप्लक्षन्यग्रोधमेव च
शतमर्धं तदर्धं वा प्रत्येकं जुहुयात्क्रमात्  २९
पूर्वादिषु चतुर्दिक्षु जुहुयात्खादिरादिभिः
पलाशं स्थण्डिले हुत्वा हृदयेन तु मन्त्रतः  ३०
अयं कुमारेति मन्त्रेण पूर्वायां दिशि होमयेत्

होमयेद्दक्षिणे कुण्डे कद्रुद्रायेति मन्त्रतः ३१
प्लक्षं वै वारुणे हुत्वा इदं विष्णिवति मन्त्रतः
होमयेदुत्तरे कुण्डे ब्रह्मजज्ञानमन्त्रतः ३२
तत्तद्ब्रह्माङ्गकैर्हुत्वा घृतं गव्यं सुरेण तु
चरुं हुत्वा तु शिरसा लाजं तु शिखया हुनेत् ३३
तण्डुलैस्तिलसंमिश्रैर्होमयेद्बहुरूपिणा
एवं जागरणं रात्रौ प्रभाते स्थापनं कुरु ३४
आचार्यो मूर्तिपैः सार्धं स्नानत्रयमथाचरेत्
पूर्वं संपूजयेल्लिङ्गं मूर्तिकुम्भांश्च पूजयेत् ३५
जयादिरभ्याधानं च स्विष्टान्तं होममाचरेत्
विद्यातत्वमयं कुम्भं शिरसा धारयेद्गुरुः ३६
धामप्रदक्षिणं कुर्याद्घोषणैः स्वस्तिवाचकैः
ततः प्रासादमारुह्य स्थूपिकायां सुविन्यसेत् ३७
सुमुहूर्ते सुलग्ने तु नक्षत्रकरणान्विते
कुम्भाद्बीजं समादाय स्थूपिकायां न्यसेत्क्रमात् ३८
कुम्भोदकेन संस्नाप्य स्थूपिं व्योमेति मन्त्रतः
पूर्वाद्यष्टदले धीमान्न्यसेच्च लोकपालकान् ३९
कुम्भोदकेन संस्नाप्य शिखरं नासिकान्वितम्
गन्धपुष्पादिना पूज्य बलिं तेभ्यो निवेदयेत् ४०
बीजं कुमारकुम्भात्तु कुमारस्य हृदि न्यसेत्
दक्षिणामूर्तिकुम्भात्तु बीजं मूर्तिहृदि न्यसेत् ४१
विष्णुकुम्भात्तु तद्बीजं विष्णोश्च हृदि विन्यसेत्
ब्रह्मकुम्भात्परं बीजं ब्रह्मणो हृदि विन्यसेत् ४२
दिशाकुम्भं समुद्धृत्य प्रासादस्याभिषेचनम्
अष्टादशगणानां तु परितो बलिमाचरेत् ४३
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः
दक्षिणां गुरवे दद्याद्यथावित्तानुसारतः ४४
मूर्तिपान्पूजयेत्तत्र दैवज्ञमपि पूजयेत्
ब्राह्मणान्भोजयेत्तत्र मूर्तिपान् गुरुणा सह ४५

इहैव धनवान् छ्रीमान्सोऽन्ते सायुज्यमाप्नुयात्  ४६
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे प्रासादप्रोक्षणविधिपटलः चतुष्षष्टितमः

## पञ्चषष्टितमः पटलः
## मण्डपप्रोक्षणविधिः

अतः परं प्रवक्ष्यामि मण्डपप्रोक्षणं परम्
आपाद्य मण्डपं पूर्वं पूर्वोक्तविधिना सह  १
नानासुधाक्रियायुक्तं नानावर्णसमायुतम्
सुमुहूर्ते सुलग्ने च प्रोक्षणं हि समाचरेत्  २
निर्दिष्टदिवसात्पूर्वे सप्ताहे पञ्चमे तु वा
अङ्कुराण्यर्पयेद्धीमान्पूर्वोक्तविधिना सह  ३
कारयेच्छिल्पिकर्माणि ततः शिल्पिविसर्जनम्
मण्डपं मण्डयेद्धीमान् सर्वालङ्कारसंयुतम्  ४
वितानध्वजसंयुक्तं मुक्तादामैरलङ्कृतम्
दर्भमालासमायुक्तं द्वारतोरणसंयुतम्  ५
फलपल्लवसंयुक्तं द्वारकुम्भोपशोभितम्
गोमयालेपनं कृत्वा पर्यग्निकरणान्वितम्  ६
ब्राह्मणान्भोजयेत्तत्र यथावित्तानुसारतः
ब्राह्मणोच्छिष्टमुद्वास्य पुनः पुण्याहमाचरेत्  ७
प्रथमस्तम्भमध्ये तु कौतुकं बन्धयेत्तथा
तत्स्तम्भं ब्रह्मदैवत्यं ब्रह्ममन्त्रमुदाहरेत्  ८
स्तम्भानि चैव शेषाणि ज्ञेयरुद्रात्मिकानि च
नववस्त्रैश्च संवेष्ट्य स्तम्भानि च विचक्षणः  ९
कुर्यान्मण्डपमध्ये तु स्थण्डिलं शालिभिस्तथा
विंशद्द्रोणैस्तदर्धैर्वा कुर्यात्तु स्थण्डिलं बुधः  १०
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि
तन्मध्ये विन्यसेत्पद्मं साष्टपत्रं सकर्णिकम्  ११
तस्य मध्ये न्यसेत्कुम्भं ससूत्रं सापिधानकम्
सवस्त्रं वारिसंपूर्णं ब्रह्मबीजसमन्वितम्  १२

ब्रह्ममूर्तिमयं कुम्भं ब्रह्ममन्त्रेण पूजयेत्
अभितः कलशानष्टावष्टतीर्थसमान् शुभान् १३
स्थापयेत्तु यथान्यायं कुशवारिसमन्वितान्
गङ्गां च यमुनां चैव नर्मदां च सरस्वतीम् १४
सिन्धुं गोदावरीं चैव कावेरीं पुष्करीं तथा
पूजयित्वा स्वनाम्ना तु गन्धपुष्पादिभिर्बुधः १५
ईशाद्युदितिपर्यन्तं दद्याद्धारिद्रमोदनम्
चरकीप्रभृतीनां तु पक्वमांसं निवेदयेत् १६
तस्यापि वास्तुहोमं तु पूर्वोक्तविधिना सह
मण्डपस्य चतुर्दिक्षु कुर्यादध्ययनं तथा १७
तद्बाह्ये कारयेन्नृत्तं गेयवाद्यसमन्वितम्
मण्डपस्य चतुर्दिक्षु होमं कुर्याद्विचक्षणः १८
अश्वत्थोदुम्बरप्लक्षवटं पूर्वादितः क्रमात्
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् १९
हृदयेन समिद्धुत्वा ईशानेन घृतं हुनेत्
अघोरेण चरुं हुत्वा लाजं वामेन चैव हि २०
सर्षपं कवचेनैव नेत्रेणैव तिलं हुनेत्
प्रत्येकं शतमर्धं वा जुहुयात्तु विशेषतः २१
वेदादींश्च ततो हुत्वा व्याहृतिं च हुनेत्ततः
शिवब्रह्माङ्गविद्याङ्गान् हुत्वा पाशुपतं ततः २२
जयादिरभ्याधानं च राष्ट्रभृत्स्विष्टकृद्धुनेत्
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः २३
दक्षिणां दापयेत्पश्चाद्यथावित्तानुसारतः
मूर्तिपान्पूजयेत्तत्र चाध्येतॄंश्च प्रपूजयेत् २४
दैवज्ञं पूजयेत्तत्र पर्यष्टिपरिचारकान्
सुमुहूर्ते सुलग्ने तु प्रोक्षणं हि समाचरेत् २५
ब्रह्मकुम्भं समुद्धृत्य तीर्थकुम्भसमन्वितम्
तेनोदकेन संप्रोक्ष्य ब्रह्मसूक्तं समुच्चरन् २६
तीर्थोदकेन संप्रोक्ष्य महाव्योमेति मन्त्रतः

कुशोदकेन संप्रोक्ष्य पवमानमुदीरयन्  २७
गन्धपुष्पादिना पूज्य स्तम्भानि हृदयेन तु
स्तम्भेभ्यश्च बलिं दद्यात्पायसान्नं पृथक्पृथक्  २८
चतुर्द्वारेषु दातव्यं द्वारपालकमन्त्रकैः
अक्षतैः पुष्पसंयुक्तैश्चन्दनोदकसंयुतैः  २९
अस्त्रमन्त्रं समुच्चार्य मण्डपं विकिरेत्तदा
शिवं संपूज्य विधिवत्प्रणिपत्य क्षमापयेत्  ३०
आस्थानं कारयेत्तस्मात्परिवेषक्रमान्वितम्
तस्मिन्सौख्यं प्रकर्तव्यं ततो मङ्गलवाचकैः  ३१
भक्तानां परिचाराणां भक्ष्यादीनि प्रदापयेत्  ३२
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे मण्डपप्रोक्षणविधिपटलः पञ्चषष्टितमः

## षट्षष्टितमः पटलः
## चलसंप्रोक्षणविधिः

अतः परं प्रवक्ष्यामि चलसंप्रोक्षणं शुभम्
त्रिविधं प्रोक्षणं वक्ष्ये शृणु त्वं हि महानल  १
आवर्तं चैवानावर्तं पुनरावर्तमेव च
आद्यं बालगृहाद्देवं मूलस्थाने प्रतिष्ठितम्  २
तदावर्तमिदं प्रोक्तमनावर्तं ततः शृणु
चण्डालैः शिल्पिभिः स्पृष्टे पतितैः पातकैरपि  ३
मासादूर्ध्वं भवेदत्र पूजाहीने विशेषतः
अनावर्तमिदं प्रोक्तं पुनरावर्तकं शृणु  ४
मूलालयात्समानीय प्राप्य बालगृहे ततः
तस्मान्मूलालये स्थाप्यं पुनरावर्तकं स्मृतम्  ५
यात्राहोमयुतावर्तमनावर्तं विहीनकम्
क्षणहोमयुतं वह्ने पुनरावर्तकं स्मृतम्  ६
मूलालयाग्रतः कुर्यान्मण्डपं चतुरश्रकम्
अलङ्कृत्य वितानैश्च दर्भमालाध्वजैस्ततः  ७
दीपैः पुष्पैः फलैः सार्धमङ्कुरैरष्टमङ्गलैः

स्तम्भानि वेष्टयेत्तत्र वस्त्रैः प्रत्येकशः पुनः ८
मण्डपं नवधा कृत्वा पदमेकं तु वेदिका
रत्निमात्रसमुत्सेधं दर्पणोदरसंनिभम् ९
दिग्विदिक्षु विधानेन कुर्यात्कुण्डानि लक्षणैः
चतुरश्रं भवेत्प्राच्यामाग्नेय्यां तु भगाकृति १०
अर्धचन्द्रं तु याम्यायां नैर्ऋत्यां तु त्रिकोणकम्
वारुणे वर्तुलं कुण्डं वायव्यां तु षडश्रकम् ११
पद्मं तु सौम्यदिग्भागे ऐशान्यामष्टकोणकम्
प्राक्कुण्डवेदिकामध्ये कुण्डं प्राधानिकं कुरु १२
हस्तमात्रप्रविस्तारं खातं वै हस्तमानकम्
मेखलात्रयसंयुक्तमेकैकं तु त्रियङ्गुलम् १३
नाभियोनिसमायुक्तं निम्नोन्नतविवर्जितम्
गोमयालेपनं कृत्वा पिष्टचूर्णैरलङ्कृतम् १४
पर्यग्निकरणं कृत्वा पुनः पुण्याहमाचरेत्
मण्डपस्य चतुर्दिक्षु तोरणानि प्रकल्पयेत् १५
दर्भमालाभिरावेष्ट्य पुष्पमालाप्रलम्बितम्
लिङ्गशुद्धिं ततः कृत्वा बिल्वपत्रेण घर्षयेत् १६
पञ्चगव्येन संस्नाप्य व्योमव्यापिमुदाहरन्
गन्धोदकेन संस्नाप्य गन्धद्वारानिति ब्रुवन् १७
पूजयेन्मूललिङ्गं तु शास्त्रदृष्टेन कर्मणा
चन्दनागरुकोष्ठैश्च कुङ्कुमोशीरकेसरैः १८
त्वगेलापत्रकर्पूरैरालोड्यालेपयेच्छिवम्
पिण्डिकां तु समालिप्य पुण्याहं तु समाचरेत् १९
शिरसा धारयेल्लिङ्गं हैमकौतुकसूत्रकम्
अर्कपङ्कजपुष्पैश्च मयूराशोकपाटलैः २०
करवीरैर्नन्द्यावर्तैः पालाशकुसुमैरपि
बृहतीद्रोणमन्दारैर्बकुलैर्जातिचम्पकैः २१
पुन्नागैः कर्णिकारैश्च कुमुदोत्पलमल्लिकैः
लिङ्गमापूरयेदद्भिर्मुक्तपुष्पैर्विशेषतः २२

नववस्त्रेण संवेष्ट्य लिङ्गपीठं हृदा बुधः
ततो बालगृहं गत्वा पूजयेच्छिवमादरात्  २३
यात्राहोमः प्रकर्तव्यः बालस्थानस्य चाग्रतः
स्थण्डिलं हस्तमात्रेण निर्दोषैः सिकतैरपि  २४
अग्न्याधानादिसंयुक्तं शिवाग्निं परिकल्पयेत्
प्रासादबीजमुख्यैश्च व्योमव्यापिपदैरपि  २५
शिवाङ्गैश्चैव विद्याङ्गैः प्रत्येकं जुहुयात्ततः
स्पृष्ट्वा स्पृष्ट्वा तु जुहुयात् त्र्यम्बकेन च मन्त्रतः  २६
तस्याग्रे स्थण्डिलं कृत्वा अष्टद्रोणेन शालिना
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि  २७
तन्मध्ये पद्ममालिख्य साष्टपत्रं सकर्णिकम्
गन्धपुष्पदिना पूज्य शक्तिबीजमुदाहरन्  २८
कर्णिकायां न्यसेत्कुम्भं शिवाख्यं बीजसंयुतम्
सकूर्चं सापिधानं च सवस्त्रं वारिपूरितम्  २९
तन्मध्ये विन्यसेद्देवमष्टत्रिंशत्कलामयम्
पञ्चवक्त्रयुतं देवं पञ्चमूर्ध्ना च संयुतम्  ३०
अक्षपञ्चदशोपेतं दशबाहूपशोभितम्
क्षौमवस्त्रयुतं देवं वृषारूढं वृषध्वजम्  ३१
सर्वायुधेन संयुक्तमावाह्य सद्यमन्त्रतः
स्थापयेद्वाममन्त्रेण बहुरूपेण कुण्ठयेत्  ३२
सान्निध्यं पुरुषेणैव पञ्चमेनार्चयेत्तदा
दर्शयेद्बीजमुद्रां तु मुकुलीं पद्ममुद्रिकाम्  ३३
नमस्काराख्यमुद्रां च बध्वास्त्रं दिक्षु योजयेत्
तस्यैव वामपार्श्वे तु वर्धनीं विन्यसेद्बुधः  ३४
सकूर्चां सापिधानां च सवस्त्रां वारिपूरिताम्
तन्मध्ये विन्यसेद्गौरीं पिण्डिकायां तु देशिकः  ३५
सुस्तनां चारुवदनां सुकेशां च सुशोभिताम्
कम्बुग्रीवां विभक्ताङ्गां किंचित्प्रहसिताननाम्  ३६
दुकूलवसनां देवीं ध्यात्वा तद्बीजसंयुताम्

पूजयित्वा यथान्यायं शिवकुम्भं च वर्धनीम् ३७
नैवेद्यं दापयेद्धीमान्ताम्बूलं हृदयेन तु
रुद्रसूक्तेन जुहुयात्स्वस्तिसूक्तसमन्वितम् ३८
पञ्चगव्येन संप्रोक्ष्य वेदिकां हृदयेन तु
स्थण्डिलं शालिभिः कुर्यादष्टद्रोणैर्विशेषतः ३९
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि
तन्मध्ये पद्ममालिख्य साष्टपत्रं सकर्णिकम् ४०
गन्धाद्यैः पूजयेद्धीमान्नवशक्तिसमन्वितम्
लाजपुष्पैस्तिलैर्दर्भैर्विकिरेत्तु विशेषतः ४१
बालस्थानमथो गत्वा जुहुयादस्त्रमन्त्रतः
तेनैव चलयेल्लिङ्गं तरुणाख्यं सपिण्डकम् ४२
शिरसा धारयेत्कुम्भं वर्धनीं च विशेषतः
प्रदक्षिणं तथा कृत्वा प्रासादं घोषसंयुतम् ४३
सर्वातोद्यसमायुक्तं धूपदीपसमाकुलम्
नृत्तगेयसमायुक्तं ध्वजपिञ्छसमायुतम् ४४
स्वस्तिसूक्तसमायुक्तं ततो मङ्गलवाचकैः
शनैः प्रदक्षिणं कृत्वा प्रविशेन्मण्डपं तथा ४५
वेदिकोपरि संस्थाप्य वामदेवमनुस्मरन्
उत्तरे विन्यसेन्मन्त्री वर्धनीं सहिरण्यकाम् ४६
पूजयित्वा शिवोमां च स्वस्वगायत्रिमन्त्रतः
विन्यसेत्कलशानष्टावष्टविद्येश्वरात्मकान् ४७
सकूर्चान्सापिधानांश्च सवस्त्रान्वारिपूरितान्
हेमटङ्कसमायुक्तान्हेमशूलसमायुतान् ४८
पूजयित्वा स्वनाम्ना तु नैवेद्यान्तं विचक्षणः
मुकुलीं पद्ममुद्रां च कर्णिकां पञ्चवक्त्रिकाम् ४९
लिङ्गं सुरभिमुद्रां च नमस्कारं च दर्शयेत्
अभितः कलशानष्टौ लोकपालाधिदैवतान् ५०
उपवेद्युपरि न्यस्य हैमकास्त्रसमायुतान्
सकूर्चान्सापिधानांश्च सवस्त्रान्वारिपूरितान् ५१

पूजयित्वा स्वनाम्ना तु मङ्गलाङ्कुरसंयुतम्
द्वारकुम्भं ततः स्थाप्य द्वारं द्वारं प्रति द्वयम् ५२
नन्द्यादिपशुपत्यन्तं पूर्वादीनि प्रदक्षिणम्
पूजयित्वा स्वनाम्ना तु गन्धपुष्पादिभिः शुभैः ५३
दिशास्वध्ययनं कुर्यात्पूर्वोक्तविधिना सह
पटेन महतावेष्ट्य ततो होमं समारभेत् ५४
मथित्वाग्निं समादाय सूर्यकान्तोद्भवं तु वा
अग्न्याधानादिकं कृत्वा यथाविधिपुरःसरम् ५५
शिवाग्निं जनयेत्पूर्वं षडङ्गेन हुनेत्पुनः
प्रणीताग्निं समादाय स्वस्वमन्त्रैश्च मूर्तिपाः ५६
दिशाकुण्डेषु निक्षिप्य मूर्तिमन्त्रमनुस्मरन्
समिदाज्यचरुं लाजान्सर्षपांश्च यवांतिलान् ५७
शतत्रयं शतार्धं वा प्रत्येकं जुहुयात्क्रमात्
पलाशोदुम्बराश्वत्थप्लक्षं चेति दिशासु वै ५८
शमीखादिरश्रीवृक्षं बिल्वं चेति विदिक्षु वै
वक्त्रेण जुहुयादैन्द्रे बहुरूपेण दक्षिणे ५९
पश्चिमे सद्यमन्त्रेण वामदेवेन चोत्तरे
आग्नेय्यां हृदयेनैव नैर्ऋृत्यां शिरसा तथा ६०
शिखया वायुदिग्भागे ऐशान्यां कवचेन तु
ईशानेन हुनेद्धीमान्प्रधाने देशिकोत्तमः ६१
शिवेन जुहुयादाज्यं नेत्रेणैव चरुं हुनेत्
लाजं हुत्वास्त्रमन्त्रेण सर्षपं कवचेन तु ६२
यवं हुत्वा च शिखया शिरसा च चरुं हुनेत्
अर्घ्यमष्टाङ्गकं कृत्वा हृदयेन तु मन्त्रतः ६३
एवं जागरणं रात्रौ प्रभाते स्थापनं भवेत्
आचार्यो मूर्तिपैः सार्धं स्नानत्रयमथाचरेत् ६४
व्यपोह्योषितपुष्पं तु कौतुकं हृदयेन तु
सद्यादिपञ्चमन्त्रैश्च स्नापयेत्पञ्चगव्यकैः ६५
सुगन्धैरभिषिच्याद्भिर्लिङ्गं पीठं स्थलं क्रमात्

घर्षयेत्पञ्चबिल्वेन पञ्चमन्त्रमुदाहरन् ६६
पुष्पोदकेन संस्नाप्य मृदम्भोभिः कुशोदकैः
गन्धपुष्पैः समभ्यर्च्य हृदयेन तु मन्त्रतः ६७
समिधाहुतिं तथा हुत्वा उपाहुतिमथाचरेत्
घृतं मिमिक्षे घृतं हुत्वा देवस्य त्वा चरुं हुनेत् ६८
गौरीमिमाय लाजान् वै शन्नो देवीति सर्षपम्
कया नश्चित्रमन्त्रेण यवं हुत्वा विचक्षणः ६९
तिलान्पाशुपतास्त्रेण हुत्वा प्रत्येकशो दश
ब्रह्मजज्ञानमन्त्रेण जुहुयात्तदनन्तरम् ७०
आचम्य त्रिर्यदस्येति स्विष्टकृज्जुहुयात्क्रमात्
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ७१
कटकं कुण्डलं चैव यज्ञसूत्रं च हैमकम्
यथाशक्त्या तु दातव्यं ग्रामभूमिधनानि च ७२
निद्राकुम्भानि संपूज्य ध्यात्वा देवं त्रियम्बकम्
आत्मानमर्चयित्वा तु गन्धाद्यैः सकलीकृतम् ७३
शिवकुम्भं समुद्धृत्य मूर्तिकुम्भसमन्वितम्
शिरसा धारयित्वा तु प्रदक्षिणमथाचरेत् ७४
सर्वालङ्कारसंयुक्तं सर्वातोद्यसमन्वितम्
धूपदीपसमायुक्तं वितानध्वजसंयुतम् ७५
पुत्रपौत्रकलत्रैश्च यजमानो व्रजेदनु
द्वारदेशं समानीय पूजयेद्विधिवत्पुनः ७६
गर्भगेहं ततः प्राप्य स्थापयेत्स्थण्डिलोपरि
ध्यात्वा लिङ्गे परं रूपं कलाङ्गानि ततो न्यसेत् ७७
मुहूर्तं निरीक्ष्य दैवज्ञो गुरवे संनिवेदयेत्
शिवकुम्भं ततोद्धृत्य पिधानं तु व्यपोह्य च ७८
तस्मात्तु स्थापयेल्लिङ्गं शिवमन्त्रं हृदा सह
ध्यानेन ध्येयमालोक्य न्यसेद्देवं परं शिवम् ७९
अविच्छेद्यं हि निष्पन्नं निष्प्रपञ्चं निरामयम्
बीजं तु निष्कलं शान्तं शुद्धमव्यक्तरूपिणम् ८०

अरूपिणमनाधारं सूक्ष्मं सर्वगतं शिवम्
ध्यात्वा वै लिङ्गमध्ये तु शिवरूपं परात्परम् ८१
पञ्चवक्त्रं तथा मूर्धा नेत्रपञ्चदशान्वितम्
पञ्चास्यं पञ्चनासं च दशश्रोत्रं चतुर्गलम् ८२
दशभुजं तनुरेकं द्विपादं पद्मसंस्थितम्
सूर्यकोटीप्रतीकाशं सर्वाभरणसंयुतम् ८३
शुक्लाम्बरधरं रूपं शुक्लं यज्ञोपवीतिनम्
कुलिशं चाभयं खड्गं टङ्कशूलं च दक्षिणे ८४
वरदं खेटकं पाशं घण्टाङ्कुशं तु वामके
शिवरूपमिदं वह्ने सर्वकामार्थसाधनम् ८५
सदाविशस्य रूपं तु शृणवतां च महानल
चतुर्मूर्धचतुर्वक्त्रनेत्रद्वादशभिर्युतम् ८६
चतुरास्यं चतुर्नासं वसुश्रोत्रं चतुर्गलम्
दशभुजं तनुरेकं पूर्वोक्तायुधसंयुतम् ८७
व्यक्ताव्यक्तमये लिङ्गे ध्यात्वा देवं त्रियम्बकम्
उक्तं सदाशिवं रूपं महेशस्य ततः शृणु ८८
शुद्धप्रवालसंकाशमेकवक्त्रं चतुर्भुजम्
कृष्णापरशुसंयुक्तं वरदाभयहस्तकम् ८९
जटामकुटसंयुक्तं सर्वाभरणभूषितम्
एतद्रूपं परं ध्यायेत्प्रतिमासु विशेषतः ९०
कुम्भाद्बीजं समादाय लिङ्गमध्ये विनिक्षिपेत्
वर्धन्या वर्धनीबीजं पिण्डिकायां तु विन्यसेत् ९१
अनन्तादिशिखण्ड्यन्तान्न्यसेत्पीठे विशेषतः
स्वैः स्वैर्मन्त्रैश्च कलशैरभिषिच्य यथाक्रमम् ९२
गन्धाद्यैरर्चयेद्देवमर्चनोक्तं यथाविधि
पञ्चावरणमार्गेण पूजयेत्तु विशेषतः ९३
शुद्धान्नं पायसं गौल्यं हारिद्रं कृसरोदनम्
पूर्वादि ऊर्ध्वपर्यन्तं हृदयेन निवेदयेत् ९४
चण्डस्याचमनं दद्यान्निर्माल्यं तु विसर्जयेत्

दद्याच्छिवाय ताम्बूलं पञ्चगन्धसमन्वितम् ९५
उत्सवं कारयेत्पश्चाद्यथावित्तानुसारतः
एवं यः कुरुते मर्त्यः स पुरायां गतिमाप्नुयात् ९६
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे चलसंप्रोक्षणविधिपटलः षट्षष्टितमः

## सप्तषष्टितमः पटलः
## द्वारपालप्रतिष्ठाविधिः

परिवारस्थापनं वक्ष्ये द्वाररक्षाधिपैः सह
पूर्वद्वाराधिपौ ज्ञेयौ नन्दिकालावुभौ तथा १
दराडी मुराडी महावीर्यौ दक्षिणद्वारपालकौ
भृङ्गी च विजयश्चैव पश्चिमद्वारपालकौ २
अनन्तः पशुपतिश्च उत्तरद्वारपालकौ
नन्दीशो दराडहस्तः स्यात् कालः परशुधारकः ३
दराडी च दराडहस्तः स्यान्मुराडी वै भिन्दिपालधृक्
भृङ्गी वै खड्गहस्तः स्याद्विजयः शूलधारकः ४
अनन्तो वज्रहस्तः स्यात्पशुपतिः पाशधारकः
नन्दीशः श्यामवर्णः स्यात्कालो वै धूम्रवर्णकः ५
इन्द्रनीलनिभो दराडी मुराडी वै श्वेतवर्णकः
भृङ्गी मयूरग्रीवाभो विजयो रक्तवर्णकः ६
अनन्तः कालवर्णः स्यात् पशुपतिर्नील एव च
त्रिनेत्राश्चतुर्भुजाः सर्वे सर्वाभरणभूषिताः ७
किंचित्त्रिभङ्गिकं कायं वामपादं तु कुञ्चितम्
इत्येवं लक्षणं कृत्वा ततः स्थापनमारभेत् ८
वारुणात्पञ्चमं ग्राह्यं वासवेन समन्वितम्
वायोः पञ्चममुद्धृत्य वज्रेणैव समन्वितम् ९
तृतीयं वारुणं ग्राह्य वृत्रघ्ना च समन्वितम्
पवनात्पञ्चमं यत्तत्पञ्चस्वरसमन्वितम् १०
चतुर्थमनिलाद्ग्राह्य सप्तस्वरसमायुतम्
सोमवर्गाच्चतुर्थं तु तृतीयेन समन्वितम् ११

इन्द्राद्यमुद्धरेत्तस्य वायव्याद्यंशसंयुतम्
बिन्दुनादयुताः सर्वे प्रणवादिनमोऽन्तकाः १२
मध्ये नाम चतुर्थ्यन्तं योजयेद्देशिकोत्तमः
आकारेण समायुक्तं हृदयं संप्रकीर्तितम् १३
ईकारेण समायुक्तं शिरोमन्त्रमुदाहृतम्
ऊकारेण समायुक्तं शिखामन्त्रमुदीरितम् १४
एकारेण समायुक्ताः कवचास्ते भवन्ति वै
अंकारेण समायुक्तं नेत्रमन्त्रं प्रकीर्तितम् १५
विसर्गेण समायुक्तमस्त्रमन्त्रमिति स्मृतम्
नामाद्यं ह्रस्वसंयुक्तं पञ्चब्रह्ममिति स्मृतम् १६
नेत्रबीजं समुच्चार्य नेत्रमोक्षणमारभेत्
तर्पयेन्मधुनाज्येन तत्तद्धृदयमुच्चरन् १७
संस्नाप्य पञ्चगव्येन पञ्चमन्त्रमुदाहरन्
त्वमग्ने रुद्रमन्त्रेण शुद्धतोयेन सेचयेत् १८
गन्धादिना समभ्यर्च्य हृदयमन्त्रमुच्चरन्
तेषामग्रे तु कर्तव्यं स्थण्डिलं शालिभिर्बुधैः १९
तन्मध्ये पद्ममालिख्य साष्टपत्रं सकर्णिकम्
तण्डुलैः शोभितं कृत्वा तिलदर्भैः परिस्तरेत् २०
द्वारपालाधिदैवत्यं कुम्भं तन्मध्यमे न्यसेत्
द्रोणतोयेन संपूर्णं ससूत्रं सापिधानकम् २१
सवस्त्रं पल्लवोपेतं तत्तद्बीजसमन्वितम्
हर्म्यपालसमायुक्तानष्टौ च कलशान्न्यसेत् २२
ससूत्रान्सापिधानांश्च सवस्त्रान्वारिपूरितान्
अर्चयित्वा विधानेन नैवेद्यान्तं स्वनामतः २३
तस्याग्रे स्थण्डिलं कृत्वा वालुकैर्हस्तमात्रकम्
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् २४
तत्तद्धृदयमन्त्रेण समिधाहुतिमाचरेत्
घृतं मिक्षे घृतं हुत्वा शिरसा च चरुं हुनेत् २५
त्वमग्ने रुद्रमन्त्रेण हुत्वा लाजं विचक्षणः

अक्षतं तिलसंमिश्रं क्षीरमस्त्रेण होमयेत्  २६
प्रत्येकं शतमर्धं वा जुहुयात्क्रमशः पुनः
एवं जागरणं रात्रौ प्रभाते स्थापनं भवेत्  २७
पूर्णाहुतिं तु शिरसा स्विष्टान्तं हि समाचरेत्
तत्तत्कुम्भं समुद्धृत्य सर्वालङ्कारसंयुतम्  २८
सुमुहूर्ते सुलग्ने च नक्षत्रकरणान्विते
कुम्भाद्बीजं समादाय हृद्देशे तु न्यसेत्क्रमात्  २९
दिशाकुम्भं समुद्धृत्य पूर्वादीनि प्रदक्षिणम्
पिण्डिकायां न्यसेद्धीमान् हर्म्यपालकबीजकान्  ३०
तेनोदकेन संप्रोक्ष्य तत्तद्धृदयमुच्चरन्
गन्धपुष्पादिना पूज्य स्वस्वबीजमुदाहरन्  ३१
शुद्धान्नं दापयेत्पश्चादुपदंशसमन्वितम्
पश्चादाचमनं दद्यात्ताम्बूलं च निवेदयेत्  ३२
द्वारपालाधिपानां तु स्थापनं चोच्यते क्रमात्  ३३
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे द्वारपालस्थापनविधिपटलः सप्तषष्टितमः

## अष्टषष्टितमः पटलः
## परिवारस्थापनविधिः

परिवारस्थापनं वक्ष्ये शृणु वह्ने विशेषतः
वृषः कात्यायनी चैव मातरो विघ्ननायकः  १
सुब्रह्मण्यस्तथा ज्येष्ठा केशवो भास्करस्तथा
पूर्वाद्यैशानपर्यन्तमन्तर्हारे स्थिता इमे  २
तेषामग्रे तु कर्तव्यं मण्डपं लक्षणान्वितम्
तन्मध्ये वेदिकां कुर्याद्विस्तारेण द्विहस्तकम्  ३
तालमात्रसमुत्सेधं दर्पणोदरसंनिभम्
कुण्डानि परितः कल्प्य चतुर्दिक्षु विधानतः  ४
चतुरश्रं धनुर्वृत्तं त्रिकोणं च यथाक्रमम्
मातॄणां नवकुण्डानि यथोक्तं दिग्विभागतः  ५
एकाग्निं वाथ कर्तव्यं प्रासादग्रे विशेषतः

मेखलात्रयसंयुक्तमेकैकं तु त्रियङ्गुलम् ६
हस्तमात्रप्रविस्तारं नाभियोनिसमन्वितम्
मण्डपं मण्डयेद्धीमान् पूर्वोक्तविधिना सह ७
मातृणां लक्षणं वक्ष्ये सर्वेषां च यथाविधि
चतुर्थं सोमवर्गात्तु सप्तस्वरविभूषितम् ८
तृतीयं वरुणवर्गात् पञ्चमस्वरसंयुतम्
यकारादिसकारान्तं मातृणामक्षरं भवेत् ९
वासवाद्येन संयुक्ता मन्त्राश्चामोघशक्तयः
तृतीयं वह्निवर्गात्तु शक्राद्येन समन्वितम् १०
शूलवर्गात्तृतीयं तु पञ्चमस्वरसंयुतम्
तृतीयं यमवर्गात्तु गदाख्येन समन्वितम् ११
एकादशेन संयुक्तमिन्द्राद्यैश्च विशेषतः
सोमाच्चतुर्थं संग्राह्य सप्तमस्वरसंयुतम् १२
पवनात्पञ्चमं ग्राह्य वासवैकादशेन च
वृषाख्यो मेदिनी चोभौ ज्येष्ठायां पुत्रपुत्रिके १३
चतुर्थं सोमवर्गात्तु तृतीयस्वरसंयुतम्
वायुवर्गाच्चतुर्थं तु युक्तमिन्द्रे द्वयेन तु १४
बिन्दुनादसमायुक्तं प्रणवादिनमोऽन्तकम्
परिवाराणामष्टानां मन्त्राः सम्यगुदीरिताः १५
षोडशपरिवाराणां मन्त्राणि शृणु चानल
स्वनामाद्यक्षरं ग्राह्य बिन्दुनादसमन्वितम् १६
प्रणवादि नमोऽन्तं तु सर्वेषां मन्त्रमुच्यते
सद्यादयो ह्रस्वयुक्ता दीर्घयुक्ता हृदान्विताः १७
अस्त्रं विसर्गसंयुक्तमनुस्वारविवर्जितम्
सानुस्वारं भवेन्नेत्रं सर्वेषां समुदाहृतम् १८
द्वात्रिंशत्परिवाराणां मन्त्राणि शृणु चानल
यस्य नामादिमं बीजं बिन्दुनादसमन्वितम् १९
प्रणवादि नमोऽन्तं च सर्वेषां समुदाहृतम्
प्रासादप्रतिमोत्सेधं पूर्वोक्तविधिना कुरु २०

रत्नन्यासं प्रकर्तव्यं हैमं वा तत्र निक्षिपेत्
नेत्रद्वययुते ऋृक्षे कारयेदक्षिमोक्षणम् २१
पक्ष्मरेखां पुरा कृत्वा कृष्णमण्डलमालिखेत्
ज्योतिर्मण्डलमालिख्य नेत्रमन्त्रमुदाहरन् २२
तर्पयेद्धृदयेनैव देशिको मधुसर्पिषा
स्नापयेत्पञ्चगव्येन पवमानमुदीरयन् २३
शुद्धोदकेन संस्नाप्य शुद्धैरुक्थेति मन्त्रतः
प्रासादाभ्यन्तरे तस्मिन्मानुषे प्रतिमां न्यसेत् २४
सुस्निग्धं कारयित्वा तु पुण्याहं तत्र कारयेत्
प्रतिष्ठादिनात् पूर्वेद्युर्निशायामधिवासयेत् २५
स्थण्डिलं कारयेद्वेद्यां शालिभिश्चतुरङ्गुलम्
तन्मध्ये पद्ममालिख्य साष्टपत्रं सकर्णिकम् २६
तण्डुलैः शोभितं कृत्वा तिलदर्भैः परिस्तरेत्
तन्मध्ये विन्यसेत्कुम्भं तत्तन्मूर्तिमयं शुभम् २७
स्थापयेदेककुम्भं तु एकमूर्तिविधानतः
द्वे मूर्ती स्यान्महावह्ने द्वौ कुम्भौ विन्यसेत्ततः २८
त्रिमूर्तिश्चेत्त्रयं स्थाप्य पञ्च चेत्पञ्च एव हि
सप्तसङ्ख्या भवेत्तत्र कलशान्सप्त विन्यसेत् २९
अष्टमूर्त्यष्टकुम्भाः स्युर्नवमे नवकुम्भकाः
दशमे दशमं कुम्भमेकादशं तथैव च ३०
सकूर्चान्सापिधानांश्च सवस्त्रान्वारिपूरितान्
स्थापयेत्तु यथान्यायं तत्तद्बीजसमन्वितम् ३१
यद्रूपं परिवाराणामुक्तं शास्त्रे विशेषतः
तद्रूपं कुम्भमध्ये तु भावयेत्तु विचक्षणः ३२
तन्नाम्ना चार्चयेद्विद्वान् गन्धपुष्पादिभिः क्रमात्
नैवेद्यं दापयेत्तस्मात्ताम्बूलं च निवेदयेत् ३३
ततो होमं प्रकुर्वीत शास्त्रदृष्टेन कर्मणा
पलाशोदुम्बराश्वत्तवटं पूर्वादितः क्रमात् ३४
समिदाज्यचरुं लाजांस्तिलसिद्धार्थमाषकान्

प्रत्येकं जुहुयाद्धीमान् शतमर्धार्धमेव च ३५
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्
तत्तद्बीजं समुच्चार्य हुत्वेध्मानि विशेषतः ३६
आज्यादिमाषपर्यन्तं जुहुयाद्धृदयादिभिः
द्रव्यान्ते व्याहृतिं हुत्वा द्रव्यान्ते तु त्रियम्बकम् ३७
एवं जागरणं रात्रौ प्रभाते स्थापनं भवेत्
आचार्यो मूर्तिपैः सार्धं स्नानं कृत्वा विशेषतः ३८
निद्राकुम्भानि संपूज्य ततो होमं समाचरेत्
जयादिरभ्याधानं च राष्ट्रभृच्च हुनेत्क्रमात् ३९
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः
सर्वातोद्यसमायुक्तं नृत्तगेयसमन्वितम् ४०
कुम्भमादाय हृदिना प्रतिमाग्रे विनिक्षिपेत्
सुमुहूर्ते सुलग्ने तु नक्षत्रकरणान्विते ४१
कुम्भाद्बीजं समादाय प्रतिमाया हृदि न्यसेत्
सकलावयवं ध्यात्वा पूजयित्वा यथाविधि ४२
नैवेद्यं दापयेत्तस्माद्धृदयेन तु मन्त्रतः
पुनराचमनं दद्यात्ताम्बूलं च निवेदयेत् ४३
पूजयेत्तत्तन्मन्त्रेण तदाप्रभृति नित्यशः
यस्मिन्राष्ट्रे कृतं ह्येवं तत्र राजा जयी भवेत् ४४
पुत्रश्रीकीर्तिमांस्तत्र ह्यायुरारोग्यवर्धनम्
अलयानामभावे तु पीठमेवं प्रकल्पयेत् ४५
विस्तारं तु द्वितालं स्यान्मेखलात्रयसंयुतम्
एकैकं तु त्रियङ्गुल्यं विस्तारोत्सेधतत्समम् ४६
चतुरङ्गुलमानेन पद्ममूर्ध्वे तु कल्पयेत्
अध्रुवं स्थापयेद्ब्रह्मे परिवारान्विशेषतः ४७
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे परिवारस्थापनविधिपटलः अष्टषष्टितमः

## एकोनसप्ततितमः पटलः
## बलिपीठस्थापनविधिः

स्थापनं बलिपीठस्य प्रवक्ष्यामि विशेषतः
पूर्वोक्तस्थाने कर्तव्यं पीठं वै लक्षणान्वितम् १
आमोदश्च प्रमोदश्च प्रमुखो विमुखस्तथा
अविघ्नो विघ्नकर्ता च षडेते भूतनायकाः २
आमोदं पूर्वदिग्भागे प्रमोदं दक्षिणे तथा
प्रमुखं पश्चिमे भागे विमुखं चोत्तरे न्यसेत् ३
अविघ्नं कर्णिकामध्ये विघ्नकर्तारमीशके
पूर्वे वा पश्चिमे वा स्यान्मण्डपं नवहस्तकम् ४
तन्मध्ये वेदिकां कुर्याद्विस्तारेण द्विहस्तकम्
रत्निमात्रसमुत्सेधं दर्पणोदरसंनिभम् ५
कुण्डं प्रकल्पयेद्विद्वान् चतुरश्रं चतुर्दिशि
रत्निमात्रप्रविस्तारं तद्वत्खातं त्रिमेखलम् ६
एकैकं त्र्यङ्गुलं प्रोक्तं नाभियोनिसमन्वितम्
गोमयालेपनं कृत्वा पञ्चचूर्णैरलङ्कृतम् ७
मण्डपं मण्डयेत्सम्यग् वितानध्वजसंयुतम्
तोरणैर्द्वारकुम्भैश्च धूपदीपैर्विशेषतः ८
आमोदाद्यादिभूतानां नेत्रमोक्षणमारभेत्
ज्योतिर्मण्डलमालिख्य तत्तद्धृदयमन्त्रतः ९
पर्यग्निकरणं कृत्वा पुण्याहं तत्र कारयेत्
शालिभिः स्थण्डिलं कुर्याद्वेदिकोपरि देशिकः १०
तण्डुलैर्भूषितं कृत्वा तिलदर्भैः परिस्तरेत्
तस्योर्ध्वे विन्यसेत्कुम्भान्सवस्त्रान्वारिपूरितान् ११
ससूत्रान्सापिधानांश्च सकूर्चान्सहिरण्यकान्
पूर्वादिषु चतुर्दिक्षु आमोदादिघटान्न्यसेत् १२
अविघ्नादिघटान्मध्ये स्थापयेत्तान्विशेषतः
तत्तदक्षरमुद्धृत्य बिन्दुनादसमन्वितम् १३
प्रणवादिनमोऽन्तं स्यान्मन्त्रमुच्चारयेत्क्रमात्

कुम्भेषु विन्यसेद्बीजान् हृदयेन समन्वितान्  १४
तत्तत्कुम्भेषु तन्मूर्तिं ध्यात्वा वै देशिकोत्तमः
गन्धादिना समभ्यर्च्य नैवेद्यान्तं विशेषतः  १५
ततो होमं प्रकुर्वीत देशिको मूर्तिपैः सह
पलाशखादिराश्वत्थवटं पूर्वादितः क्रमात्  १६
समिदाज्यचरुं लाजान्सर्षपांश्च यवांस्तिलान्
शतमर्धं तदर्धं वा जुहुयात्क्रमशः पुनः  १७
तत्तद्धृदयमन्त्रेण समिदाहुतिमाचरेत्
घृतं मिक्षे घृतं हुत्वा अहमस्मि चरुं हुनेत्  १८
प्रजापतेति मन्त्रेण लाजं हुत्वा विचक्षणः
अग्न आयाहि मन्त्रेण हुत्वा वै सर्षपं क्रमात्  १९
ब्रह्मजज्ञानमन्त्रेण यवं यत्ते तिलं हुनेत्
द्रव्यान्ते व्याहृतिं हुत्वा पश्चादाज्येन होमयेत्  २०
शिवाङ्गैश्चैव विद्याङ्गैः पञ्चाङ्गैश्च हुनेत्क्रमात्
आमोदादीन्स्वबीजेन आज्यं हुत्वा विचक्षणः  २१
स्विष्टान्तं होमयेदन्ते तत्तत्स्थापनमाचरेत्
सर्वातोद्यसमायुक्तं स्थापयेत्सुमुहूर्तके  २२
तत्तत्कुम्भं समुद्धृत्य घटेभ्यो हृदि विन्यसेत्
गन्धपुष्पादिना पूज्य हृदयमन्त्रमुच्चरन्  २३
पञ्चवर्णहविर्दद्यात्परितश्च बलिं क्षिपेत्
पुनराचमनं दद्याच्छुद्धिं कृत्वा विशेषतः  २४
आचार्यं पूजयेत्तत्र मूर्तिपानथ पूजयेत्
दैवज्ञं पूजयेत्तत्र पर्यष्टिपरिचारकान्  २५
बलिपीठस्थापनं स्यात् सर्वसंपत्कराय च  २६

इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे बलिपीठस्थापनविधिपटलः
एकोनसप्ततितमः

## सप्ततितमः पटलः

## मुद्रालक्षणविधिः

अतः परं प्रवक्ष्यामि मुद्राणां लक्षणं परम्
मुकुली पद्ममुद्रा च कर्णिका शोधनी तथा १
पञ्चमुखी सुरभिमुद्रा द्रव्या बीजसमन्वितम्
आवाहनी ध्वजा मुद्रा निष्ठुरा संहृतिस्तथा २
कालकण्ठी तथा लिङ्गा शान्ता वै शङ्खमुद्रिका
शिवा सदाशिवाख्या च महेशमुद्रा कीर्तिता ३
शक्तिमुद्रा शूलमुद्रा परश्वाख्या तथैव च
खड्गमुद्राख्या पाशाख्या अङ्कुशा धनुरेव च ४
बाणमुद्रा महाघण्टा वज्रमुद्रा तथैव च
हृन्मुद्रा च शिरोमुद्रा शिखा कवचमुद्रिका ५
अस्त्रमुद्राक्षिमुद्रा च सद्योवामाख्यमुद्रिका
अघोरपुरुषेशानमहामुद्रा नमस्कृता ६
त्रिचत्वारिंशदाख्याता मुद्राः सम्यगुदीरिताः
द्वौ हस्तावेकतः कृत्वा अन्तरे सुषिरं तयोः ७
सरोजमुकुलाकारं दर्शयेन्मुकुलं तथा
उत्तानौ तु करौ कृत्वा मणिबन्धं तु बन्धयेत् ८
मध्यमे कुञ्चिताङ्गुष्ठौ शेषाः प्रविरलास्तथा
पद्ममुद्रा भवेदेषा दर्शयेत्पीठकल्पने ९
कनिष्ठौ कुञ्चितौ चैव वामेनान्यत्र यश्च तम्
वामाङ्गुष्ठकनिष्ठे तु दक्षिणे तु व्यवस्थितम् १०
तथैव दक्षिणाङ्गुष्ठमितरे तु व्यवस्थितम्
देशिन्यानामिकामध्याः कुञ्चिताश्चोभयोरपि ११
कर्णिकाकल्पने पद्मे दर्शयेद्देशिकोत्तमः
हृद्देशे मणिबन्धं तु बन्धयेत्तु परस्परम् १२
उभौ पाणी समुत्थाप्य शोधनी शोधने वरा
कृत्वान्योन्यगताङ्गुल्यं पृष्ठतो हस्तयोर्द्वयोः १३
तिर्यग्गौ विन्यसेत्तत्र अङ्गुष्ठाभ्यां तु सङ्क्रमे

देशिन्यौ मध्यमौ रुद्धौ उच्छ्रितौ नामिकायुतौ १४
इयं पञ्चमुखी ख्याता दर्शयेद्वक्त्रकर्मणि
वेणिबन्धं तथा कुर्यादङ्गुष्ठौ तलमध्यगौ १५
तर्जन्यौ मध्यमौ लग्नौ कनिष्ठानामिकायुतौ
इयं सुरभिमुद्रा च द्रव्यशुद्ध्यर्थकारणम् १६
कराभ्यामञ्जलिं कृत्वा सवक्त्रौ द्वावनामिकौ
तयोरग्रे सुसंलग्नौ शेषाश्च प्रसृतास्ततः १७
द्रव्यमुद्रा भवेदेषा द्रव्याभावे प्रदर्शयेत्
उत्तानौ तु करौ कृत्वा मुष्टिं बध्वा विशेषतः १८
अङ्गुष्ठौ प्रक्षिप्तौ मध्ये कनिष्ठौ प्रसृतौ युतौ
बीजमुद्रेयमाख्याता दर्शयेच्छक्तिकल्पने १९
उत्तानौ तु करौ कृत्वा पाणिमूले तु बन्धयेत्
निधायाङ्गुष्ठशिरसि तर्जन्याग्रौ विचक्षणः २०
अनामिकाग्रौ संलग्नौ सवक्रं स्याद्विशेषतः
कनिष्ठौ चोच्यते युक्तौ मध्यमौ प्रसृतौ तदा २१
आवाहिनीति विख्याता सिंहासनविधौ परा
उत्तानौ तु करौ कृत्वा अङ्गुष्ठौ तलमध्यगौ २२
शेषा ऋजुकराङ्गुल्यः कम्पितावाहनी स्मृतौ
वामप्रदेशिन्याश्चाग्रं वेष्टयेद्दक्षिणेन तु २३
अङ्गुष्ठमूर्ध्वतः कृत्वा हृदयेन नियोजयेत्
मध्यमानामिकाग्रे तु वामाङ्गुष्ठे निधापयेत् २४
प्रसृतं स्यात्कनिष्ठा तु ध्वजमुद्रा प्रकीर्तिता
दर्शयेद्देवसान्निध्ये ध्वजानां चाधिरोहणे २५
उत्तानौ तु करौ कृत्वा मुष्टिं बध्वा विशेषतः
अङ्गुष्ठौ मध्यतः क्षिप्तौ निष्ठुरा संनिरोधयेत् २६
वामाङ्गुल्यश्च प्रसृताश्चाङ्गुष्ठे मूर्ध्नि संस्थिता
दक्षिणं मुष्टिबन्धस्थमङ्गुष्ठं चोर्ध्वसंस्थितम् २७
मुष्टिमूर्ध्वगतं कृत्वा संहृतिः संहरे वरा
कृत्वा मुष्टिं तथोत्थाने अङ्गुल्याग्रं विशेषतः २८

अङ्गुष्ठाग्रे तु संलग्ने कालकरिठयुते वरा
कृत्वा मुष्टिं भवेद्धस्तौ अङ्गुष्ठौ चोच्यते युतौ २९
मुद्रैषा लिङ्गसंज्ञा तु प्रच्छन्नेति प्रदर्शयेत्
प्रासारिताः स्युरङ्गुल्यं सवितुश्चोर्ध्वसंस्थितम् ३०
अङ्गुष्ठं कुञ्चितं चैव शान्तेयं रौद्रकर्मणि
उत्तानौ तु करौ कृत्वा प्रोताङ्गुल्यपरस्परम् ३१
दक्षिणानामिका तिर्यग्वामानामिकयोर्बहिः
अनामिकाग्रावावेष्ट्य तर्जनीभ्यां विशेषतः ३२
मध्यमाङ्गुलिसंलग्नौ कनिष्ठौ वक्त्रसंयुतौ
तर्जनीमूलपार्श्वस्थावङ्गुष्ठावञ्जलीकृतौ ३३
शङ्खमुद्रा भवेदेषा स्नानकाले प्रदर्शयेत्
उत्तानौ तु करौ कृत्वा वेणिबन्धं तु कारयेत् ३४
प्रासार्य मध्यमौ युक्तौ शिवमुद्रेति कीर्तिता
उत्तानौ तु करौ कृत्वा वेणिबन्धं तु कारयेत् ३५
तत्कनिष्ठौ तु तर्जन्यौ प्रसृतौ संयुतौ तदा
मुद्राः सदाशिवाख्याश्च आवाह्यान्ते प्रदर्शयेत् ३६
उत्तानौ तु करौ कृत्वा वेणिबन्धं तु कारयेत्
प्रसार्य मध्यमाङ्गुष्ठौ कनिष्ठौ च समायुतौ ३७
मुद्रा महेश्वरस्यैषा प्रतिष्ठान्ते प्रदर्शयेत्
उत्तानौ तु करौ कृत्वा चाङ्गुष्ठौ तलमध्यमौ ३८
शेषाः परस्परं प्रोक्ताः तर्जन्यौ प्रसृतौ युतौ
शक्तिमुद्रेति विख्याता शक्तीनां स्थापने परा ३९
उत्तानौ तु करौ कृत्वा वेणिबन्धं तु पृष्ठतः
कनिष्ठाङ्गुष्ठसंलग्नौ शेषास्तिर्यग्गताः स्थिताः ४०
अस्त्रकर्षणकाले तु शूलमुद्रां प्रदर्शयेत्
उत्तानौ तु करौ कृत्वा ह्युभौ प्रोत्य परस्परम् ४१
प्रसार्य मध्यमौ युक्तौ तर्जन्यौ कुञ्चितौ युतौ
परशुमुद्रा भवेदेषा सर्वशत्रुविमर्दिनी ४२
उत्तानौ तु करौ कृत्वा ह्युभौ श्लिष्टौ परस्परम्

प्रसार्य तर्जनी द्वौ तु शेषा मुष्टिस्त्वसिर्मता ४३
उत्तानौ तु करौ कृत्वा मुष्टिं बद्ध्वा विशेषतः
प्रसार्याङ्गुष्टतर्जन्यौ बध्वा चोर्ध्वे प्रदर्शयेत् ४४
इतराङ्गुष्ठतर्जन्यावितराङ्गुष्ठयोगतः
पाशमुद्रा भवेदेषा पाशच्छेदेन हेतुना ४५
उत्तानौ तु करौ कृत्वा तर्जनी कुञ्चिता भवेत्
शेषा ऋजुघनाश्चैव साङ्कुशाख्या उदाहृता ४६
उत्तानौ तु करौ कृत्वा मुष्टिं बध्वा विशेषतः
वामकर्णात्समाकृष्य दक्षिणेन करेण तु ४७
धनुर्मुद्रा भवेदेषा सर्वशत्रुविमर्दिनी
उत्तानौ तु करौ कृत्वा मुष्टिं बद्ध्वा विचक्षणः ४८
प्रसार्य मध्यमौ द्वौ तु अधश्चोर्ध्वं प्रदर्शयेत्
अग्रमग्रं तु संयुक्तं वाममूर्ध्वं तु दक्षिणम् ४९
शेषाणि कुञ्चिताश्चैव शरमुद्रा प्रकीर्तिता
उत्तानौ तु करौ कृत्वा वेणिबन्धं तु कारयेत् ५०
प्रसार्य मध्यमौ द्वौ तु शेषा मण्डलं कुण्डलम्
घण्टामुद्रा भवेदेषा विघ्नानां च विनाशिनी ५१
उत्तानौ तु करौ कृत्वा कनिष्ठाङ्गुष्ठसंयुतौ
तर्जन्यानामिकामध्या प्रसृताः तिर्यगाः स्मृताः ५२
सव्योपरि न्यसेदन्यं वज्रमुद्रा परिकीर्तिता
उत्तानौ तु करौ कृत्वा वेणिबन्धं तु कारयेत् ५३
अङ्गुष्ठौ कुञ्चितौ तत्र हृदया संप्रकीर्तिता
उत्तानौ तु करौ कृत्वा कनिष्ठाङ्गुष्ठसंयुतौ ५४
शेषाः परस्परं प्रोत्य शिरोमुद्रा प्रकीर्तिता
उत्तानौ तु करौ कृत्वा तर्जन्यङ्गुष्ठगोपितौ ५५
शेषा ऋजुघनायुक्ता शिखामुद्रा उदाहृता
उत्तानौ तु करौ कृत्वा वेणीबन्धं तु कारयेत् ५६
अङ्गुष्ठौ गोपितौ मध्ये कनिष्ठौ प्रसृतौ युतौ
कवचमुद्रा भवेदेषा सर्वशत्रुनिवारिणी ५७

उत्तानौ तु करौ कृत्वा तर्जन्यङ्गुष्ठसंयुतौ
शेषा ऋृजुघनाश्चैव नेत्रमुद्रेति कीर्तिता ५८
उत्तनौ तु करौ कृत्वा द्वौ हस्तौ तु परस्परम्
अङ्गुष्ठतर्जन्य प्रोत्य चास्त्रमुद्रा प्रकीर्तिता ५९
उत्तानौ तु करौ कृत्वा वेणीबन्धं तु कारयेत्
अङ्गुष्ठौ द्वौ प्रसार्याथ सद्यमुद्रा प्रकीर्तिता ६०
उत्तानौ तु करौ कृत्वा वेणीबन्धं तु कारयेत्
अनामिकौ द्वौ प्रसृतौ वाममुद्रा प्रकीर्तिता ६१
उत्तानौ तु करौ कृत्वा वेणीबन्धं तु कारयेत्
मध्यमौ द्वौ प्रसार्याथ ह्यघोराख्या उदाहृता ६२
उत्तानौ तु करौ कृत्वा वेणीबन्धं तु कारयेत्
तर्जनी द्वौ प्रसार्याथ मुद्रा तत्पुरुषस्य तु ६३
उत्तानौ तु करौ कृत्वा वेणीबन्धं तु कारयेत्
कनिष्ठिकौ प्रसार्याथ ईशानस्य प्रकीर्तिता ६४
हस्ताभ्यां संस्पृशेद्धीमान्कादिपादान्तकं यथा
एषा मुद्रा महामुद्रा करसंस्कारकर्मणि ६५
हस्तपृष्ठौ तु संलग्नौ प्रोत्याङ्गुल्यं परस्परम्
दक्षिणावर्तमापीड्य तलेनाङ्गुलिगोपिता ६६
हृद्देशे दर्शयेद्धीमान्सा मुद्रा च नमस्कृता ६७

इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे मुद्रालक्षणविधिपटलः सप्ततितमः

## अनुबन्धः

## मुद्रालक्षणम्

मुद्राणां लक्षणं चैव किं ब्रूहि शशिभूषण
अथ मुद्राप्रसिद्ध्यर्थं वक्ष्यते शृणु चानल १
कृत्वा तु सर्वमन्त्राणां मुद्रायुक्तं फलं ददेत्
मुकुली कालकण्ठं च शोधनी शशकर्णिका २
मनोरमा नमस्कारा निष्ठुरा पद्ममुद्रिका
ध्वजा चावाहनी चैव शान्ता वै लिङ्गमुद्रिका ३

अस्त्रमुद्रा च गायत्रीनेत्रमुद्रा प्रकीर्तिता
द्वौ हस्तावेकता कृत्वा मध्ये तु सुषिरं तयोः ४
सरोजमुकुलाकारं मुकुलां तु प्रदर्शयेत्
पाणिमूले तु संलग्नौ हृद्देशे तु परस्परम् ५
कृत्वैव तालवत्पाणिं मुद्रेयं शोधनी भवेत्
तर्जन्यौ कुञ्चितौ चैव तयोरग्रे निधापयेत् ६
द्वयोरङ्गुष्ठशिरसि तेषामृत्वागता समा
कृत्वा तु मणिबन्धे तु वामे सव्यं तथा न्यसेत् ७
मुद्रेयं शशिकर्णी तु विज्ञेयाद्यागकर्मणि
वलिते हस्तयोः कार्य्यमुक्ता ते तु कनिष्ठकौ ८
तयोर्वामावलिर्ज्ञेया वलिते मध्यमेव च
कुञ्चितेऽनामिकाग्रे च स्वपाणितलयोर्न्यसेत् ९
देशिन्यौ प्रसृतौ कृत्वा तयोरग्रे निधापयेत्
अङ्गुष्ठौ मूलपर्वस्थौ तयोरेव हि कुञ्चितौ १०
मनोरमेति विख्याता ++ सा ++ परा
सर्वाङ्गं तु सतौ हस्तौ हृद्देशमाश्रितौ ११
सर्वेषां बन्धनी कार्य्या समस्तारापरा ++
हस्ताभ्यामञ्जलीकृत्वा द्वौ मुष्टिं साययेद्बुधः १२
अङ्गुष्ठगर्भे निक्षिप्य निष्ठुरां संप्रयोजयेत्
पूर्वोक्तमुकुलं यां तु हृद्देशे निःसृताङ्गुलम् १३
व्याकोचकमलाकारां पद्ममुद्रां च दर्शयेत्
अग्रं वामप्रदेशिन्या वेष्टयेत्सव्यपाणिना १४
कृत्वोर्ध्वं तु ततोऽङ्गुष्ठं हृदये संनियोजयेत्
वामाङ्गुष्ठं च वामाभिस्तिसृभिर्वेष्टयेत्क्रमात् १५
ध्वजमुद्रा समाख्याता संयोज्या यागकर्मणि
हस्ताभ्यामञ्जलीकृत्वा कनिष्ठामूलपर्वयोः १६
अङ्गुष्ठं स्थापयेदेषां मुद्रावाहनी भवेत्
तर्जन्याङ्गुष्ठलग्नाग्रा शान्तेयं वा प्रकीर्तिता १७
स्थापने सर्वमन्त्राणां प्रयोक्तव्या विचक्षणः

शान्तां बध्वा क्षिपेद्वामाङ्गुष्ठं तदधोमुखम्  १८
वेष्टयेद्दक्षिणाङ्गुष्ठं वामाङ्गुष्ठं तलेन तु
वामहस्ताङ्गुलीभिस्तु सव्यमुष्टिं च वेष्टयेत्  १९
लिङ्गमुद्रेति विख्याता शिवरूपधरी सदा
द्विमुष्टिं सहितं कृत्वा शीघ्रं हस्तं प्रसारयेत्  २०
अस्त्रमुद्रेति विख्याता सर्वेषां तु भयङ्करी
अन्योन्यान्तरगाः सर्वाः करपृष्ठाग्रह्योर्जिताः  २१
अङ्गुष्ठाङ्गुलया कुर्यात्सुषिरं च करान्तरे
पूजाकर्मणि गायत्रीं गायत्र्यां तत्प्रयोजयेत्  २२
नेत्रं नेत्रेति नेत्रस्य शान्तं वाधोमुखं भवेत्
एते वैतशिमुद्रां तु नेत्रमुद्रां तु योजयेत्  २३
मनोरमामुकुलाभ्यां तु ईशाद्यं तु योजयेत्
नमस्कारादिशान्तान्तं हृदयादीनि योजयेत्  २४
विद्येशं योजयेत्तुर्यमुद्रेयं योजयेच्छिवम्
मुकुलीं पद्ममुद्रां तु गणेशं योजयेत्सुधी  २५
लोकपालान् नमस्कारं पूजयेत्तु पृथक्पृथक्  २६
इति पटलस्य अनुबन्धः समाप्तः

## एकसप्ततितमः पटलः
## रत्नलोहलिङ्गप्रतिष्ठाविधिः

अतः परं प्रवक्ष्यामि स्थापनं धातुरत्नयोः
सौवर्णं राजतं ताम्रं कांस्यं वा पित्तलामयम्  १
सौवर्णं श्रीप्रदं लिङ्गं राजतं राज्यदायकम्
पुत्रदं ताम्रजं लिङ्गं कांस्यं वै तुष्टिदायकम्  २
पैत्तलं रोगनाशार्थं धातुजानां फलं स्मृतम्
माणिक्यं पद्मरागं च तथा मरकतं भवेत्  ३
स्फटिकं च यथा प्रोक्तं पुष्परागं तथैव च
प्रवालं चैव वज्राख्यं वैडूर्यमिन्द्रनीलकम्  ४
माणिक्यं कामदं ज्ञेयं पद्मरागं धनावहम्

पुष्टिं मरकतं कुर्यात् स्फटिकं पुत्रवृद्धिदम् ५
स्तम्भनं पुष्परागं च राजवश्यं प्रवालकम्
आकर्षणं तु वज्राख्यं वैडूर्यं चायुर्वर्धनम् ६
इन्द्रनीलं महत्सिद्धिं रत्नजानां फलं भवेत्
अङ्गुल्यादिवितस्त्यन्तं कुर्याल्लिङ्गं तु रत्नजम् ७
अङ्गुल्यारभ्य हस्तान्तं यथेष्टं लोहजं कुरु
स्वमानेन च कर्तव्या पिण्डिका रत्नलोहयोः ८
स्वयोनिरेव पीठः स्यात् तदालाभे विधीयते
रत्नानां लोहजं पीठं धातुजस्यैव धातुजम् ९
लोहजस्यैव लिङ्गस्य पीठिका श्वभ्रवर्जिता
रत्नजानां तु लिङ्गानां स्वयोनिश्वभ्रवर्जिताः १०
श्वभ्रं कुर्याद्वियोनेस्तु चतुर्भागैकभागया
त्रिगुणं लिङ्गतारं तु पिण्डिकायास्तु विस्तृतम् ११
चतुर्गुणं वा कर्तव्यमुत्सेधं तत्समं भवेत्
चतुरश्रा वा वृत्ता वा चललिङ्गस्य पिण्डिका १२
उत्सेधं पिण्डिकायास्तु षोडशांशेन भाजयेत्
पट्टिका चाश्विनीभागा पञ्चांशं पद्मतुण्डकम् १३
कण्ठमानं तु द्व्यंशं स्याच्चतुर्भागोर्ध्वपद्मकम्
द्व्यंशेन तु महापट्टी चांशेन घृतवारिणी १४
पीठतारत्रिभागैकं नालनिर्गममुच्यते
कृत्वा तु निश्चलं लिङ्गं प्रतिष्ठां कारयेत्ततः १५
मण्डपं चललिङ्गानां प्रवक्ष्यामि महानल
नदीतटाकतीरे वा पर्वते वा वनान्तरे १६
गोष्ठे देवालये चैव गृहे वा पूजकस्य तु
नवहस्ताष्टहस्तं वा सप्तहस्तमथापि वा १७
षोडशस्तम्भसंयुक्तं चतुर्द्वारसमन्वितम्
ध्वजतोरणसंयुक्तमाम्रपल्लवशोभितम् १८
मण्डपस्य तु तन्मध्ये वेदिं कुर्याद्द्विहस्तकम्
तालमात्रसमुत्सेधं दर्पणोदरसंनिभम् १९

परितः कल्पयेत्कुण्डं चतुर्दिक्ष्वीशदेशतः
प्राग्देशे कल्पयेत्कुण्डमेकहोमे विशेषतः २०
चतुरश्रं धनुर्वृत्तं त्रिकोणं पद्ममेव च
पिण्डिकाकृतिवद्वाथ कुण्डानि परिकल्पयेत् २१
अग्निकार्यं पुरा कुर्यात्स्थण्डिले वाथ कारयेत्
एवं संस्कृत्य विधिवत्स्थापनं हि समारभेत् २२
पञ्चगव्यं समाहृत्य स्नापयेद्धृदयेन तु
स्नापयेद्गन्धतोयेन लिङ्गं वस्त्रेण वेष्टयेत् २३
जलाधिवासनं कुर्याज्जलाधारस्य मध्यमे
एकरात्रिं द्विरात्रिं वा रात्रित्रयमथापि वा २४
जलादुत्तार्य देवेशं स्नापयेत्पञ्चगव्यकैः
पूजयित्वा हृदा मन्त्री गन्धपुष्पादिभिः क्रमात् २५
मण्डपं प्रोक्षयेद्धीमान् अण्डजाद्यैरनुक्रमात्
वामादिशक्तयस्तत्र पूजयित्वा स्वनामतः २६
शयनोपरि न्यसेल्लिङ्गं प्राक्शिरस्कमधोमुखम्
पूजयित्वा हृदा मन्त्री रक्तवस्त्रेण वेष्टयेत् २७
ऐशान्यां स्थापयेन्मन्त्री शिवकुम्भं च वर्धनीम्
अभितः कलशानष्टौ ससूत्रान्सापिधानकान् २८
सवस्त्रान्वारिसंपूर्णान् सकूर्चान् सहिरण्यकान्
विद्येश्वरसमायुक्तान्पल्लवैरुपशोभितान् २९
स्थापयित्वा यथान्यायं पूजयेत्स्वस्वनामभिः
नैवेद्यं दापयेद्धीमान्हृदयेन तु मन्त्रतः ३०
मुकुलीं पद्ममुद्रां च शूलमुद्रां प्रदर्शयेत्
नन्द्यादिपशुपत्यन्तं द्वारकुम्भेषु योजयेत् ३१
ततो होमं प्रकुर्वीत शास्त्रदृष्टेन कर्मणा
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ३२
खादिरौदुम्बराश्वत्थवटपालाशमेव च
पलाशं स्यात्तथैकाग्नौ शतमर्धं तदर्धकम् ३३
समिदाज्यचरुं लाजान्सर्षपांश्च यवांस्तिलान्

होमयेद्विधिना धीमान्द्रव्याणि च विशेषतः ३४
समिधो जुहुयाद्दिक्षु सद्यादीशान्तमन्त्रकैः
आज्यादितिलपर्यन्तं हुत्वा वै हृदयादिभिः ३५
द्रव्यान्ते व्याहृतिं हुत्वा स्पृष्ट्वा लिङ्गं हृद बुधः
दशबीजैर्वर्णमन्त्रैः पिण्डमन्त्रैश्च होमयेत् ३६
स्रुचा चतुर्गृहीतेन हृदा पूर्णाहुतिं ददेत्
द्रव्यैरेतैस्तथा मन्त्रैरेकाग्नौ जुहुयात्क्रमात् ३७
पलाशी च समित्प्रोक्ता शतमर्धार्धमेव वा
एवं जागरणं रात्रौ प्रभाते स्थापनं भवेत् ३८
आचार्यो मूर्तिपैः सार्धं स्नानं कृत्वा यथाविधि
निद्राकुम्भानि संपूज्य सलिङ्गं देशिकोत्तमः ३९
उपाहुतिं तथा कुर्यात्पञ्चविंशतिसङ्ख्यया
घृतमिक्षेति मन्त्रेण घृतं हुत्वा विशेषतः ४०
सद्यादीशानपर्यन्तं चर्वादीनि हुनेत्क्रमात्
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ४१
दक्षिणां दापयेद्विद्वान्यथावित्तानुसारतः
स्नानवेद्यां न्यसेल्लिङ्गं हृदयमन्त्रमुच्चरन् ४२
कलाङ्गानि न्यसेत्तस्मिन्पूजयित्वा यथाविधि
सुमुहूर्ते सुलग्ने तु मन्त्रन्यासं समाचरेत् ४३
उद्धृत्य शिवकुम्भं तु वर्धन्या सह देशिकः
कुम्भाद्बीजं समादाय लिङ्गस्य शिरसि न्यसेत् ४४
वर्धन्या वर्धनीबीजं पिण्डकायां तु विन्यसेत्
अनन्तादिशिखण्ड्यन्तानष्टविद्येश्वरान्क्रमात् ४५
पूर्वादीशानपर्यन्तं पिण्डकायां तु विन्यसेत्
पञ्चगव्यैः शिवाद्भिस्तु स्नापयेच्छिवमन्त्रतः ४६
शुद्धदेशे समानीय विन्यसेद्विष्टरे बुधः
एकावरणमार्गेण यजेद्गन्धादिभिर्बुधः ४७
पायसान्नं हृदा दद्याद्गुलखण्डसमन्वितम्
शिखयाचमनं दद्यान्निर्माल्यं तु विसर्जयेत् ४८

ताम्बूलं दापयेत्पश्चाद्धृदयेन तु मन्त्रतः
शिष्याय दापयेल्लिङ्गं मन्त्रमुद्रासमन्वितम् ४९
तेनैव पूजयेल्लिङ्गमेकावरणमार्गतः
अर्चनोक्तं समभ्यर्च्य नैवेद्यान्तं विशेषतः ५०
ब्रह्माङ्गैराहुतिं कुर्यात्प्रत्येकं दशसङ्ख्यया
एवं यः पूजयेन्नित्यं यावज्जीवं प्रतिज्ञया ५१
इहैव धनवान्गोमान्पुत्रवान्कीर्तिमान्भवेत्
अमुत्र मोक्षमाप्नोति क्रीडते शिववत्सुखी ५२
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे रत्नलिङ्गप्रतिष्ठाविधिपटलः एकसप्ततितमः

## द्विसप्ततितमः पटलः
### रुद्रोद्धारविधिः

अतः परं प्रवक्ष्यामि रुद्रोद्धारविधिं क्रमात्
श्रीरुद्रोद्धारणं चैव शमयप्रश्नसंयुतम् १
एकान्ते निर्जने देशे तीर्थे देवालयेऽपि वा
मण्डपे वा प्रपायां वा सर्वालङ्कारशोभिते २
सुसमे भूप्रदेशे तु सूत्रपातं समारभेत्
षडङ्गुलप्रमाणेन चतुःसूत्रं प्रपातयेत् ३
प्राङ्मुखोदङ्मुखस्तत्र शालिपिष्टेन संयुतम्
मध्ये नवपदं वृत्तं कर्णिकां कारयेत्ततः ४
विंशतिश्च ततो बाह्ये चतुश्चतुरथाधिकम्
पञ्चत्रिंशतिभिश्चित्रैरावृत्तैस्तु समन्ततः ५
त्रिसहस्रैरशीत्याख्यैश्चतुश्च परिशोभितम्
श्वेतेनावेष्टयेद्विद्वान्विन्यसेदक्षराणि तु ६
ओंकारं मध्यमे न्यस्य नकारं पूर्वतो न्यसेत्
मकारं दक्षिणे न्यस्य स्तेकारं पश्चिमे न्यसेत् ७
रुकारं चोत्तरे न्यस्य पश्चाद्बाह्यदले न्यसेत्
रुद्र मश्च न्यकारश्च च वश्च उ तथैव च ८
तो च तश्च इकारश्च षट्च वे च नमस् । ततः

नमस्ते अस्तु धन्वने प्रथमावरणं न्यसेत् ९
पञ्चैते कर्णिकायां ते दलैर्विंशतिरेव च
बा च हुश्च तथा चैव भ्यां च तश्च तथैव च १०
मुश्च तश्च ते च न का मकारश् । च तथैव च
या तश्चैवा इकारश्च षुकारः शिवकाम तः ११
शिवं बभूव ते चैव धश्च नुश् । च तथैव च
चतुर्विंशतिका वर्णा द्वितीयावरणे न्यसेत् १२
शिवा शरव्या या चैव भवश्चैव तवस्तथा
तया नो रुद्र मृडय ॥ या ते रुद्र शिवा तनुः १३
अघोरापापश्च इत्येतानष्टाविंशतिवर्णकान्
तृतीयावरणे न्यस्त्वा चतुर्थावरणे ततः १४
पञ्च कारशिकारश्च नी । तया नस्तथैव च
नाव शन्तमया । चैव गिरिशन्ता तथैव च १५
भि चाकशीहि ॥ यामिषुं गिरिशन्त हस्ते ततः
द्वात्रिंशद्वर्णकानेतान् चतुर्थावरणे न्यसेत् १६
बिभर्ष्यस्तवे चैव शिवां गिरित्र तां कुरु
मा हिंसीः पुरुषं जगच्छिवेनैव तथैव च १७
वचसा त्वा गिरिश्चैव वशाच्छा वदामसी ततः
षट्त्रिंशद्वर्णकानेतान्पञ्चमावरणे न्यसेत् १८
यथा नस्सर्वमिज्जगदयक्ष्मंस्तथैव च
सुमना चैवाश्च सद्य ॥ अध्यवोचस्तथैव च १९
दधिवक्ता प्रथमो देव्यो भिषक्
अहींश्च सर्वाञ्चत्वारिंशत्षष्ठावरणे न्यसेत् २०
जम्भयत् सर्वांश्च यातुधान्यश्चैव सो तः
यस्ताम्रो अरुणाश्चैव उत बभ्रुः सुमङ्गलः २१
ये चैमां रुद्रा अभितो दिक्षु श्रितास्सहस्रशोऽवै
षां हेड चतुश्चत्वारिंशद्वर्णान्तु सप्तमे २२
ईमहे च । असौ योऽवसर्पति नील एव च
ग्रीवो विलोहितश्चैव उतैनं गोपास्तथैव च २३

अदृशन्नदृशंश्चैव उदहार्यस्तथैव च
उतैनं विश्वा भूतानि स दृष्टो मृडयाति च २४
अष्टचत्वारिंशद्वर्णानष्टमावरणे न्यसेत्
सविसर्गो नकारश्च । नमो अस्तुश्च नी तथा २५
लश्च ग्रीवा च यश्चैव सहस्राक्षाय मीढुषे
अथो ये अस्य सत्वानोऽहं तेभ्योऽकरं नमः २६
प्रमुञ्च धन्वनस्त्वमुभयोरार्त्निरेव च
योर्ज्यांश्च याश्च ते ह द्विपञ्चाशाच्चाक्षरा इमे २७
नवमावरणे न्यस्त्वा दशमावरणं न्यसेत्
इषवः परा ता भगवो वपस्तथैव च २८
अवतत्य धनुस्त्वं सहस्राक्ष शतेषुधे
निशीर्य शल्यानांश्चैव मुखा शिवो न एव च २९
सुमना च भवे चैव । विज्यं धनुः कपर्दिने
विशल्यो बाणवांश्चैव षट्पञ्चाशच्च विन्यसेत् ३०
दशमावरणे न्यस्त्वा एकादशमथ शृणु
उकारश्च तकारश्च अनेशन्नस्येषवस्ततः ३१
आभुरस्य निषङ्गथिर्या ते हेतिस्तथैव च
मीढुष्टमश्च हस्ते च बभूव ते धनुस्तथा ३२
तयास्मान्विश्वतश्चैव यक्ष्मया परि एव च
भुजश्चैव । नमस्ते च अस्त्वायुधायानातता ३३
यश्च षष्ट्यक्षराण्येव एकादशावृते न्यसेत्
धृष्णवे च उभाभ्यां च उत ते च नमो ततः ३४
बाहुभ्यां तु वकारश्च धनुः नो । परि ते धनु
नो हेति च तथा चैव रस्मान्वृणक्तु विश्वतः ३५
अथो य इषुधिस्तवारे अस्मन्निधेहि तम्
प्रथमः समाप्तः
ओंकारश्च नमो चैव हिरण्यबाहवे ततः ३६
सेनान्ये च दिशानेनां चतुष्षष्टि द्वादशावृते
सानुनासिक वश्चैव ++ पतये नमो नमः ३७

वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमः
नमो नमश्चैव यस्मिन् जराय त्विषिरेव च ३८
मते पथीनां पतये नमो नमस्त्वथो लिखेत्
बभ्रुशाय विव्याधिने अन्नानां पतये नमः ३९
नमोश्च हरिकेशाय अष्टषष्टिस्त्रयोदश
उकारश्च पकारश्च वीतिने च तथैव च ४०
पुष्टानां पतये चैव नमो नमो तथैव च
भवस्य हेत्यै जगतां पतये च नमो नमः ४१
रुद्राय च तता पश्चाद्विश्च ने च तथैव च
क्षेत्राणां पतये चैव नमो नमस्तथैव च ४२
सूतायाश्चाव हन्त्याय वनानां पतये नमः
नमश्चैव तथा रोहिताय स्थपत एव च ४३
एतद्द्वासप्ततीश्चैव लिखेत्चतुर्दशावृते
वृक्षाणां पतये चैव नमो नमो तथैव च ४४
मन्त्रिणे चस्तथा चैव वाणिजाय क एव च
क्षाणां च पतये चैव नमो नमो तथैव च ४५
भुवंतये वारिवस्कृतायौषधीनां पतयेति च
उच्चैर्घोषायाक्रन्दयते पत्तीनां ततह् ४६
पतये नमो नमश्च कृत्स्नवीताय धावते
सत्त्वनां पतये चैव षट्सप्तति न्यसेत्ततः ४७
पञ्चदशावृतं न्यस्त्वा स्वराणमावृतं ततः
तयो नमो नमश्चैव ४८
द्वितीयः समाप्तः
ओं नमस्सहमानाय निव्याधिन आव्याधिनीनां ततः
पतये नमो नमो चैव ककुभाय निषङ्गिणे ४९
स्तेनानां पतये चैव नमो नमो निषङ्गिणे
इषुधिमते चैव तस्कराणां तथैव च ५०
पतये नमः । नमश्चैव वञ्चते परिवञ्चते
स्तायूनां पकारश्च अशीतिः षोडशावृते ५१

तये नमो नमो चैव निकारश्चेरवे ततः
परिचरायारण्यानां पतये नमो नमः ५२
सृगाविभ्यो जिघांसद्भ्यो मुष्णतां पतये नमः
नमोऽसिमद्भ्यो नक्तंचरद्भ्यश्च तथैव च ५३
प्रकृन्तानां पतये चैव नमो नमः
उष्णीषिणे गिरिचराय कुलुञ्चानां पतये च ५४
नमो वर्णानां चाचतुरशीतिश्च न्यसेत्सप्तदशावृते
इषुमद्भ्यो धन्वाविभ्यश्च वो नमो नमः ५५
आतन्वानेभ्यश्चैव प्रतिदधानेभ्यश्च एव च
च वो नमो नमश्चैव आयच्छद्भ्यो तथैव च ५६
विसृजद्भ्यश्च वो चैव नमो नमस्तथैव च
अस्यद्भ्यो विध्यद्भ्यश्च तथैव च नमो नमः ५७
आसीनेभ्यः शयानेभ्यश्च वो नमो नमः
स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमः ५८
तिष्ठद्भ्यो धावद्भ्यश्च वो नमो नम एव च
सभाभ्यः सभापतिभ्य वो चैव नमो नमः ५९
अश्वेभ्योऽश्वपतिभ्यश्च वो नमो नम एव च
तृतीयः समाप्तः
ओं नमस्तथैव चैव आव्याधिनीभ्यो ६०
विविध्यन्तीभ्यश्च वो नमो नमस्तथैव च
उगणाभ्यस्तृंहतीभ्यश्चरभ्यश्च पतिभ्यश्च वै तथैव च ६१
सभापतिभ्य वो चैव नमो नमस्तथैव च
श्रत्सेभ्यो श्रत्सपतिभ्यश्च वो नामो नमस्तथैव च ६२
शताधिकं च चत्वारि एकोनविंशावृते न्यसेत्
वो नमो च नमो चैव गणेभ्यो गण एव च ६३
पतिभ्यश्च वो नमो । नमो चैव नमो । नमस्तथैव च
विरूपेभ्यो विश्वरूपेभ्यश्च नमो नमः ६४
महद्भ्यः क्षुल्लकेभ्यश्च वो नमो नम एव च
रथिभ्योऽरथेभ्यश्च वो नमो नम एव च ६५

क्षतृभ्यः संग्रहीतृभ्यश्च वो नकारस्तथैव च
विंशतिश्चावृते वर्णान्न्यसेत्षरणवतीनपि ६६
नमो । नश्च मकारश्च तक्षभ्यश्च तथैव च
रथकारेभ्यश्च वो नमो । नमस्तथैव च ६७
कुलालेभ्यः कर्मरिभ्यश्च वो नमो । नमः
पुञ्जिष्ठेभ्यो निषादेभ्यश्च वो नमो नमस्ततः ६८
इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमो नमस्ततः
मृगयुभ्यः श्वनिभ्यश्च वो नमो नम एव च ६९
श्वभ्यश्च श्वपतिभ्यश्च वो नमो नम एव च
चतुर्थः समाप्तः
ओं नमो भवाय च रुद्राय च नमस्ततः ७०
शर्वा इत्येकविंशत्तु विन्यसेत्तु शताक्षरम्
यकारश्च पशुश्चैव पतये च नमो नमः ७१
नीलग्रीवाय च शितिकरठाय च वश्च नमस्ततः
कपर्दिने च व्युप्तकेशाय वश्च नमस्ततः ७२
सहस्राक्षाय चश्चैव शतधन्वने च ततः
नमो गिरिशाय च शिपिविष्टाय च ७३
नमो मीढुष्टमा चैव यश्च वेषा नमो ततः
चकारश्च नमो चैव ह्रस्वाय च तथैव च ७४
वामनाय च वै च नमो बृहते च वर्षीयसे च
नमो । नमो ततो वृद्धाय च एव च ७५
यश्च संवृद्ध्व इत्येतान्शतवर्णांश्चतुः परान्
द्वाविंशावरणे न्यस्त्वा त्रयोविंशावृतं ततः ७६
नेकारश्च पकारश्च नमो अग्रियाय च
प्रथमाय चकारश्च नमश्च आशवे ततः ७७
चाजिराय चकारश्च नमश्च शीघ्रियाय च
शीभ्याय च नमश्चैव ऊर्म्याय च तथैव च ७८
अवस्वन्याय चकारश्च नमः स्रोतस्य एव च
स्याकारश्च यकारश्च द्वीप्याय च नमो नमः

पञ्चमः समाप्तः
ओं नमो ज्येष्ठाय च कनिष्ठाय च नमस्ततः
पूर्वजाय चकारश्चापरजाय नमो नमः ८०
मध्यमाय चापगल्भ्याय च नमस्ततः
जघन्याय च बुध्नियाय चकारश्च नमस्ततः ८१
सोभ्याय च प्रतिसर्याय च
सौम्यान् न्यसेत्त्रयोविंशदष्टोत्तरशताक्षरान् ८२
यश्च वश्च नमो ततः याम्याय च क्षेभ्याय च नम
ऊर्व्याय च नमश्चैव श्लोक्याय चावसान्याय तथैव च ८३
नमो चैव वन्याय च तथैव च
कक्ष्याय च नमश्चैव श्रवाय च प्रतिश्रवाय च ८४
यश्च वश्च नमश्चैव आशुषेणाय चा ततः
शुरथाय च नमश्चैव शूराय चावभिन्दते च ८५
चकारश्च नमो चैव वर्मिणे च तथैव च
नमो वरूथिने चैव विल्विने कव चस्ततः ८६
चिने व चकारश्च नश्च एव तथैव च
शताधिकैर्नवमेवं तु चतुर्विंशावृते न्यसेत् ८७
सविसर्गो मकारश्च श्रुताय च तथैव च
श्रुतसेनाय इत्युक्तं चकारश्च नमस्ततः ८८
षष्ठः समाप्तः
ओं नमो दुन्दुभ्याय चाहनन्याय च एव च
नमो धृष्णवे शश्च प्रमृशाय च मश्च मूः ८९
दूताय च प्रहिताय च नमश्चैव निषङ्गिणे
चेषुधिमतेश्च नमश्च तीक्ष्णेषवे च तथैव च ९०
चायुधिने चकारश्च नमश्च स्वायुधानि च
स्वधन्वने नमश्चैव स्रुत्याय च तथैव च ९१
पथ्याय च नमः काट्याय च नीप्याय च नमस्
सूद्याय च सरस्याय चकारश्च नमो नमः ९२
पञ्चविंशावृते न्यस्त्वा शतं वै षोडशोत्तरम्

नाद्याय च वैशन्ताय च वश्च नमो नमस्ततः ९३
कूप्याय चावट्याय च वश्च नमो नमः
वर्ष्याय चावर्ष्याय च नमो नमः ९४
मेघ्याय च विद्युत्याय चकारश्च नमो ततः
ईध्रियाय च तप्याय च चकारश्च नमो नमः ९५
वात्याय च रेष्मियाय च चकारश्च नमो नमः
वास्तव्याय चकारश्च वास्तुश्च पाय च नमः ९६
सप्तमः समाप्तः
ओं नमश्च सोमाय च रुद्राय च नमो ततः
आग्रे वश्च तथा पञ्च विंशत्युत्तरकं शतम् ९७
षड्विंशावरणे न्यस्त्वा सप्तविंशावृतं ततः
ताम्राय चारुणाय चकारश्च नमो नमः ९८
नमः शङ्गाय च पशुपतये च नमो नमः
नम उग्राय भीमाय चकारश्च नमो नमः ९९
नमो अग्रेवधाय च दूरेवधाय च नमः
नमो हन्त्रे च हनीयसे चञ्च नम नमो ततः १००
वृक्षेभ्यो हरिकेशेभ्यो नकारः सविसर्गमः
ताराय च नमश्चैव शम्भवे च नमो नमः १०१
शङ्कराय नमश्चैव मयस्कराय च नमः
शिवाय च तथा चैव शिवतराय च नमः १०२
तीर्थाय च कूल्याय चकारश्च नमस्ततः
पार्याय चावार्याय चकारश्च नमस्ततः १०३
प्रतरणाय चोत्तरणाय चकारश्च नमस्ततः
आतार्य्याय चालाद्याय चकारश्च नमस्ततः १०४
नमश्शष्प्याय च फेन्याय चकारश्च नमस्ततः
सिकत्याय च प्रवाह्याय चकारश्च नमस्ततः १०५
अष्टमः समाप्तः
ओं नम इरिण्याय च प्रपथ्याय च नमः
किंशिलाय च क्षयणाय चकारश्च नमस्ततः १०६

कपर्दिने च पुलस्तये च वश्च नमो नमः
गोष्ठ्याय च तथा चैव यश्च तश्च तथैव च १०७
गृह्याय च नमश्चैव तल्प्याय च तथैव च
+++ वश्च गेह्याय च नमः १०८
काट्याय च गह्वरेष्ठाय ह्रदय्याय नमो नमः
निवेष्प्याय नमश्चैव पांसव्याय च एव च १०९
रजस्याय च शुष्क्याय च हरित्याय च नमस्ततः
लोप्याय च नमश्चैव उलप्याय च नमस्ततः ११०
ऊर्व्याय च नमश्चैव सूर्म्याय च नमस्ततः
पर्ण्याय पर्णशद्याय व्याश्च नमस्ततः १११
नमोऽपगुरमाणाय चाभिघ्नते च नमो नमः
आक्रिवेदते च प्रक्रिवेदते च वश्च नमस्ततः ११२
वः किरिकेभ्यो देवानां ह्रदयेभ्यो नमस्ततः
विक्षीणकेभ्यो विचिन्वत्केभ्यो नमस्तथैव च ११३
आनिर्हतेभ्यो नमश्च आमीवत्केभ्यश्च नमः
नवमः समाप्तः
ओं द्रापे अन्धसस्पते दरिद्रं नीललोहित ११४
एषां पुरुषाणामेषां पशूनां माभेर्मा ततः
रो मो एषां किंचनाममत् या तेश्च तथैव च ११५
रुद्र शिवा तनूश्चैव शिवा रुद्राहभेषजी
शिवा रुद्रस्य भेषजी तकारश्च तथैव च ११६
एकोनत्रिंशावरणे शतं च त्रिंशदक्षरान्
याश्च नो मृडजीवश्च से इमां रुद्राय एव च ११७
तवसे कपर्दिने क्षयद्वीराय एव च
प्रभरामहे मतिं यथा नश्शम एव च ११८
सश्च विश्च तथा चैव चतुष्पदे विश्वमेव च
पुश्च ष्टं च तथा चैव ग्रामे यस्मिन्ननातुरम् ११९
मृडा ततः नो रुद्रोश्च त नो मयस्कृधिश्च एव च
द्वीराय नम सा चैव विधेम ते तथैव च १२०

यच्छञ्च योश्च मनुरायजे पिच तथैव च
तदश्याम तव रुद्र प्रणीतौ मा न एव च १२१
महान्तं मानो अर्भकं मा न उक्षन्तमेव च
उत मा न उक्षितं मा नो वधीः पितरं ततः १२२
मोतश्च मातरन्त्येतत्षट्त्रिंशदुत्तरं ततः
त्रिंशदावरणे न्यस्त्वा एकत्रिंशद्वृते ततः १२३
प्रिया मा नस्तनुवो रुद्र रीरिष एव च
मा नस्तोके तनये मा न आयुषि ततः १२४
मा नो गोषु मा नो अश्वेषु रीरिषश्च विसर्गयुक्
वीरान्मा नो रुद्र भामितो वधीर्हविस्ततः १२५
ष्मन्तश्च नमसा चैव विधेम ते तथैव च
आरात्ते गोघ्न उत पुरुषघ्ने क्षय एव च १२६
द्वीराय सुम्नमस्मे ते अस्तु रक्षा च नः
अधि च देव ब्रूह्यधा च नः शर्म यच्छ द्विबर्हाः १२७
स्तु हि श्रुतं गर्तसदं युवानं मृग एव च
नश्च भीममुपहत्नुमुग्रं मृडा च तथैव च १२८
जरित्रे रुद्रस्तवानो अन्यं ते अस्मन्नि व
शतं च चत्वारिंशच्च एकत्रिंशावृते न्यसेत् १२९
एकत्रिंशावृतं प्रोक्तं द्वात्रिंशच्चावृतं शृणु
पकारश्च न्तुकारश्च सेनाश्च सविसर्गकाः । वीरय् १३०
परि णो रुद्रस्य हेतिर्वृणक्तु एव च
परि त्वेषस्य दुर्मतिरघायोः पाव स्थिरा मघः १३१
वद्भ्यस्तनुष्व मीढ्वस्तोकश्च ++ मृडयाय च
मीढुष्टम शिवतमः शिवो नः सुमना भव १३२
परमे वृक्ष आयुधं निधाय कृत्तिं वसानः
आ चरश्च पिनाकं च बिभ्रदेव तथैव च १३३
आगहिश्च विकारश्च किरिदश्च विलोहितः
नमस्ते अस्तु भगवो यास्ते सहस्रहेत १३४
योऽस्मन्निवपन्तु ताः सहस्राणि सहस्रधा

बाहुवोस्तव हेतयः तासामीशानश्च ततः १३५
शतं च चत्वारिंशच्च पदे द्वात्रिंशदक्षरे
भगवः पराचीनाश्च मुखा कृधिस्तथैव च १३६
दशमः समाप्तः
सहस्राणि सहस्रशो ये रुद्रा अधि भूम्यां ततः
तेषां सहस्रयोजने व धन्वानि तन्मसि १३७
अस्मिन्महत्यर्णवे अन्तरिक्षे भवा अधि
नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः १३८
नीलग्रीवाः शितिकण्ठा दिवं रुद्रा उपश्रिताः
ये वृक्षेषु सस्पिञ्जरा नीलग्रीवा विलोहिताः १३९
ये भूतानामधिपतयो विशिखासः कपर्दिनः
ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् १४०
ये पथां पथिरक्षय ऐलवृश्च एव च
शतं चाष्टचत्वारिंशत्पदे त्रयस्त्रिंशदावृते १४१
दाश्च यश्च तथा व्युश्च सविसर्गो ध एव च
ये तीर्थानि प्रचरन्ति सृकावन्तो निषंगिणः १४२
य एतावन्तश्च भूयांसश्च नमो श्च एव च
दिशो रुद्रा वितस्थिरे तेषां सहस्रयोजने १४३
व धन्वानि तन्मसि नमो रुद्रेभ्य एव च
ये पृथिव्यां च एव तु ये अन्तरिक्षे च ये दिवि १४४
येषामन्नं वातो वर्षमिषवस्तथैव च
तेभ्यश्चैव दशश्चैव प्राचीर्दशश्च दक्षिणा १४५
दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्य एव च
नमस्ते नो मृडयन्तु ते यं द्विष्मस्तथैव च १४६
ष्मोर्यश्च नो द्वेष्टि तं वो जंभे दधास्तथा
एकादशः समाप्तः
ओं शं च मे मयश्च मे प्रियं च मे तथैव च १४७
नुकामश्च मे कामश्च मे सौमनसश्च मे व च
चतुस्त्रिंशावृतं न्यस्त्वा द्विपञ्चाशत्शतं भवेत्परं १४८

नसवश्च मे भद्रं च मे श्रेयश्च मे तथैव च
वस्यश्च मे यशश्च मे भगश्च मे तथैव च १४९
द्रविणं च मे यन्ता च धर्ता च मे तथैव च
क्षेमश्च मे धृतिश्च मे विश्वं च मे तथैव च १५०
महच्च मे संविच्च मे ज्ञात्रं च मे तथैव च
सूश्च मे प्रसूश्च मे सीरं च मे तथैव च १५१
लयश्च मे तथा चैवमृतं च मे तथैव च
अयक्ष्मं च मेऽनामयश्च मे जीवातुश्च मे तथा १५२
दीर्घायुतं च मेऽनमित्रं च मे तथैव च
अभयं च मे सुगं चैव मे तथैव च १५३
शयनं च मे सूषा च मे सुदिनं चश्शान्तिशान्तिरेव च
नमस्ते रुद्र मन्यव उतोत इषवे नमः १५४
ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जंभे दधामि
आद्यन्तग्रहणं वक्ष्ये रुद्रमेकादशोच्यते १५५
शमयच्चं सभैवेति पञ्चत्रिंशावृतं यजेत्
चतुश्शतं च नवतिः पञ्चवर्णाधिकं भवेत् १५६
श्रीरुद्रप्रथमेऽध्याये वर्णमेवं प्रकीर्तितम्
द्विशतं पञ्च त्रिंशच्च द्वितीयाध्यायमेव तु १५७
अशीतिद्विशतं चैव तृतीयाध्यायमक्षरम्
पञ्चाशद्द्विशतं वर्णाश्चतुर्थेऽध्यायमेव तु १५८
त्रिसप्तत्येकशतं पञ्च पञ्चमाध्यायमक्षरम्
त्रिसप्ततिशतं चैव षष्ठे चाध्यायमेव तु १५९
एकाशीतिशतं चैव सप्तमाध्यायमक्षरम्
शतं चैव एकाशीतिरष्टमाध्यायमक्षरम् १६०
चतुश्शतं च नवतिः सप्तवर्णाधिकं भवेत्
दशमाध्यायमेवं तु एकादशमतः शृणु १६१
सप्ताधिकं च षष्ठं च द्विशतमक्षरं भवेत्
एकादशं तु वर्णानां षष्टिश्चैवाधिकं शतम् १६२

इति श्रीदीप्तशास्त्रे प्रतिष्ठातन्त्रे रुद्रोद्धारविधिपटलः द्विसप्ततितमः

## त्रिसप्ततितमः पटलः
## सहस्रनामविधिः

रुद्रनामसहस्रं तु वक्ष्येऽहं शृणु चानल
सर्वरोगप्रशमनं सर्वशत्रुविनाशनम् १
दिनं नाम्ना जपेद्भक्त्या शिवसायुज्यमाप्नुयात्
सकलीकरणं कृत्वा पूजाङ्गं पूजयेद्बुधः २
नादमादौ समुद्धृत्य नादाद्यं कूटसंयुतम्
कालार्णं पृथिवीबीजं वारुणं रेफसंयुतम् ३
अनिलार्णवमुद्धृत्य षष्ठस्वरसमन्वितम्
बिन्दुनादसमायुक्तमिमं मन्त्रं शतं जपेत् ४
ऋषिराद्यन्तशून्यस्तु छन्दोऽनुष्टुप्तथैव च
देवारुद्रसहस्रेभ्यो मूर्ध्नि आस्ये हृदि न्यसेत् ५
धर्मार्थकाममोक्षार्थे विनियोगः कृताञ्जलिः
पश्चात्सहस्रनामं तु एकवारं जपेद्बुधः ६
दिनं प्रति जपेद्भक्त्या ते मर्त्या भुवि ईश्वराः
आदौ प्रणवमुद्धृत्य पश्चान्नाम समुद्धृतम् ७
द्वितीयस्वरसंयुक्तं बिन्दुनादसमन्वितम्
इदमादौ समायुक्तं मध्ये रुद्रपदं ततः ८
तत्तन्नामपदं मध्ये चतुर्थ्यन्तं प्रयोजयेत्
भवः शिवो हरो रुद्रः पुष्कलः पुरुषोत्तमः ९
अग्रगण्यः सदाचारः सर्वः शम्भुर्महेश्वरः
ईश्वरः स्थाणुरीशानः सहस्राक्षः सहस्रपात् १०
वरीयान्वरदो वन्द्यः शङ्करः परमेश्वरः
गङ्गाधरः शूलधरः परार्थैकप्रयोजनः ११
सर्वज्ञः सर्वदेवादिर्गिरिधन्वा जटाधरः
चन्द्रापीडश्चन्द्रमौलिर्विद्वान्विश्वामरेश्वरः १२
वेदान्तसारसन्दोहः कपाली नीललोहितः
ध्यानाहारोऽनवच्छेद्यो गौरीभर्ता गणेश्वरः १३

अष्टमूर्तिर्विश्वमूर्तिस्त्रिवर्गः स्वर्गसाधनः
ज्ञानगम्यो दृढप्रज्ञो देवदेवस्त्रिलोचनः १४
वामदेवो महादेवः पटुः परिवृढो मृडः
विश्वरूपो विरूपाक्षो वागीशः शुचिमत्तरः १५
सर्वप्राणश्च सर्वादिर्वृषाङ्को वृषवाहनः
ईशः पिनाकी खट्वाङ्गी चित्रवेषश्चिरन्तनः १६
महेष्वासो महायोगी गोप्नो ब्रह्माङ्गहृज्जटी
कालकालः कृत्तिवासाः सुभगः प्रणवात्मकः १७
उन्मत्तश्चूडचक्षुष्यो दुर्वासाः पुरशासनः
मृगायुधः स्कन्दगुरुः परमेष्ठी परायणः १८
अनादिमध्यनिधनो गिरीशो गिरिबान्धवः
कुबेरबन्धुः श्रीकण्ठो लोकवर्णोत्तमोत्तमः १९
सामान्यदेवः कोदण्डी नीलकण्ठः परश्वधी
विशलाक्षो मृगव्याधः सुरेशः करुणाकरः २०
धर्माधर्मः क्षमाक्षेत्रं भगवान्भगनेत्रभित्
उग्रः पशुपतिस्ताक्ष्यर्ः प्रियभक्तः प्रियंवदः २१
दाता दयाकरो दक्षः कपर्दी कामशासनः
श्मशाननिलयस्तिष्यः सेतुरप्रतिमाकृतिः २२
लोकोत्तमः स्फुटालोकस्त्र्यम्बको नागभूषणः
अन्धकारिरघद्वेषी भास्करो भक्तवत्सलः २३
वीतदोषोऽक्षयगुणो दक्षारिः पूषदन्तभित्
धूर्जटिः खण्डपरशुः सकलो निष्कलो नटः २४
अहंकारः कलाधारः पाण्डुराङ्गो मृडोऽनघः
पूर्णः पूरयिता पुण्यः सकुमारः सुलोचनः २५
सामगेयप्रियः क्रूरः पुण्यकीर्तिरनामयः
मनोजवस्तीर्थकरो जटिलो जीवितेश्वरः २६
जीतितान्तकरोऽनन्तो वसुरेता वसुप्रदः
सद्गतिः सत्कृतिः सत्ता कालकण्ठः कलाधरः २७
मानी मुनिर्महाकालः सद्भूतिः सत्परायणः

चन्द्रसंजीवनः शास्ता लोकगूढोऽमराधिपः २८
लोकबन्धुर्लोकनाथः कृतज्ञः कीर्तिभूषणः
अनपायोऽक्षरः शान्तिः सर्वशस्त्रभृतां वरः २९
तेजोमयो द्युतिधरो लोकमायोऽग्रणीरणुः
शुचिस्मितः प्रसन्नात्मा दुर्जयो दुरतिक्रमः ३०
समावृत्तो निवृत्तात्मा धर्मप्रज्ञः सदाशिवः
अकल्मषश्चतुर्बाहुर्धनावासो दुरासदः ३१
दुर्गमो दुर्मुखो दुर्गः सर्वायुधविशारदः
अध्यात्मयोगनिलयः सुतन्तुस्तन्तुवर्धनः ३२
शुभाङ्गो लोकसारङ्गो जगदीशो जनार्दनः
भस्मशुद्धिकरो मेरुरूर्जस्वी शुद्धविग्रहः ३३
हिरण्यरेतास्तरणिर्मरीचिर्महिमालयः
महाह्रदो महागर्तः सिद्धवृन्दारवन्दितः ३४
व्याघ्रचर्माम्बरधरो महाभूतो महानिधिः
अमृतांशोऽमृतवपुः पञ्चयज्ञः प्रभञ्जनः ३५
पञ्चविंशतितत्त्वस्थः पद्मनाभः परान्तकः
सुलभः सुव्रतः शूरो वाङ्मयैकनिधिर्निधिः ३६
वर्णाश्रमगुरुर्वर्णी शत्रुजिच्छत्रुतापनः
आश्रमः क्षमणः क्षामो ज्ञानवानचलश्चलः ३७
प्राणभृत्प्राणधृग्ज्ञेयः सुपर्णो वायुवाहनः
धनुर्धरो धनुर्वेदो गुणराशिर्गुणाधिकः ३८
अनन्तसृष्टिरानन्दो दण्डो दमयिता दमः
अभिवन्द्यो महाकायो विश्वकर्मा विशारदः ३९
वीतरागो विनीतात्मा तपस्वी भूतभावनः
उन्मत्तवेषः प्रच्छन्नो जितकामो जितप्रियः ४०
कल्याणः प्रकृतिः कल्यः सर्वलोकप्रजापतिः
तरस्वी तारको धीमान्प्रधानः प्रभुरव्ययः ४१
लोकपालोपगीतात्मा कल्पादिः कमलेक्षणः
वेदशास्त्रार्थतत्वज्ञो नियमो नियताश्रयः ४२

चन्द्रः सूर्यः शनिः केतुर्विरामो विद्रुमच्छविः
भक्तिगम्यः परंब्रह्म मृगपाणर्यर्पणोऽनघः ४३
अद्रिरद्र्यालयः कान्तः परमात्मा जगत्प्रभुः
सर्वकर्मफलस्त्वष्टा मङ्गल्यो मङ्गलप्रदः ४४
महातपा दीर्घतपाः स्थविष्ठः स्थविरो ध्रुवः
अहः संवत्सरो व्याप्तः प्रमाणं परमं तपः ४५
संवत्सरकरो मन्त्रः प्रत्ययः सर्वदर्शनः
अजः सर्वेश्वरः सिद्धो महारेता महाबलः ४६
योगी योग्यो महाबीजः शुद्धः सर्वादिरच्युतः
वसुर्वसुमनाः सत्यः सर्वपापहरोऽव्ययः ४७
अमृतः शाश्वतः शान्तो बाणहस्तः प्रतापवान्
कमण्डलुधरो धन्वी वेदाङ्गो वेदविन्मुनिः ४८
भ्राजिष्णुर्भोजनं भोक्ता लोकनेत्रो धराधरः
अतीन्द्रियो महामायः सर्वावासश्चतुष्पदः ४९
कालयोगी महानादो महोत्साहो महाबलः
महाबुद्धिर्महावीर्यो भूतचारी पुरन्दरः ५०
निशाचरः प्रेतचारी महाशक्तिर्महाद्युतिः
अनिर्देश्यवपुः श्रीमान्सर्वकारी मितोऽमितः ५१
बहुरूपो बृहन्मायो नियतात्मा निजोद्भवः
ओजस्तेजो द्युतिधरो नर्तकः सर्वलासकः ५२
नृत्तप्रियो नित्यनृत्तः प्रकाशात्मा प्रतापवान्
बुद्धिः स्पष्टाक्षरो मित्रः समानः सारसंप्लवः ५३
युगादिकृद्युगावर्तो गम्भीरो बलवाहनः
इष्टो विशिष्टः शिष्टेष्टः शिवदायी शिवाकृतिः ५४
अपां निधिरधिष्ठानं विजयो जयकालवित्
प्रतिष्ठितः प्रमाणज्ञो हिरण्यकवचस्तथा ५५
विमोचनः सुरगणो विद्येशो विबुधाश्रयः
बालरूपो बलोन्माथी विकर्ता गहनो गुहः ५६
करणं कारणं कर्ता सर्वबन्धविमोचनः

व्यवसायो व्यवस्थानं स्थानदो जगदादिकः ५७
राजराजप्रियो रामो राजचूडामणिर्विभुः
वीरेश्वरो वीरभद्रो वीरासनविधिर्विराट् ५८
वीरचूडामणिर्वेत्ता मुकुन्दः कुन्दवत्सलः
चक्रहस्तः शूलपाणिः शिपिविष्टः शिवाश्रयः ५९
वालखिल्यो महाहारो वामनो बादरायणः
अभिवाद्यः शरण्यश्च सुब्रह्मण्यः सुधाकविः ६०
मघवान्कौशिको गोमान्विरामः सर्वसाधनः
ललाटाक्षो विश्वदेहः सारः संसारचक्रकृत् ६१
अमोघदण्डो मध्यस्थो हरिणो ब्रह्मवर्चसी
परमार्थः परमयः परार्थः पाण्डुवत्सलः ६२
रुचिर्वररुचिर्वन्द्यो वाचस्पतिरहर्पतिः
रविर्विरोचनः स्कन्दः शास्ता वैवस्वतोऽर्जुनः ६३
युक्तिरुत्तमकीर्तिश्च शान्तरागः पुरञ्जयः
कैलासपतिः कामारिः सविता रविलोचनः ६४
विद्वत्तमो वीतभयो विश्वभर्तानिवारितः
नित्यो नियतकल्याणः पुण्यश्रवणकीर्तनः ६५
दुराश्रयो विश्वसहो ध्येयो दुःस्वप्ननाशनः
उत्तारणो दुष्कृतिहा दुर्धर्षो दुःसहो हयः ६६
अनादिर्भूर्भुवो लक्ष्मीः किरीटी त्रिदशाधिपः
विश्वगोप्ता विश्वभर्ता सुवीरो रुचिराङ्गदः ६७
जननो जनजन्मादिः प्रीतिमान् रतिमानृतः
वासिष्ठः काश्यपो भानुर्भीमो भीमपराक्रमः ६८
प्रणवः सत्पथाचारो महाकायो महामनाः
जनाधिपो महावीरः सकलागमपारगः ६९
तत्त्वं तत्त्वाविदेकात्मा विभूतिर्भूतिभूषणः
ब्रह्मर्षिर्ब्राह्मणो विष्णुर्जन्ममृत्युजरातिगः ७०
यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो मेघवाहनः
महेन्द्रो दुर्भरः सेनी ज्ञानाङ्गो ज्ञानवाहनः ७१

पञ्चब्रह्मसमुत्पत्तिर्विश्वेशो विमलोदयः
आत्मयोनिरनाद्यन्तः षड्तुः सप्तलोकधृक् ७२
गायत्रीवल्लभः प्रांशुर्विश्ववासः प्रभाकरः
शुचिर्गिरिरतः संराट् सुरेशः सुरशत्रुहा ७३
अमोघोऽरिष्टदमनः प्रमुक्तो विगतज्वरः
स्वयंज्योतिरतिज्योतिरात्मज्योतिरचञ्चलः ७४
पिङ्गलः कपिलश्मश्रुः शास्त्रनेत्रस्त्रयीतनुः
ज्ञानस्कन्धो महाज्ञानी मरुत्पतिरुपप्लवः ७५
भगो विवस्वानादित्यो लोकचारी दिवस्पतिः
उदारकीर्तिरुद्योगी सद्योगी सदसन्मयः ७६
नक्षत्रमाली नाकेशः पद्मायतविलोचनः
पितृपादः पापहारी नरकारिर्नभोगतिः ७७
हृत्पुण्डरीकमध्यस्थः शुकः श्येनो वृषाकपिः
उग्रो ग्रहपतिः कृष्णः समर्थोऽनर्थनाशनः ७८
अधर्मशत्रुरक्षोभ्यः पुरुहूतः पुरुष्टुतः
ब्रह्मगर्भो महागर्भो धर्मो धेनुर्धनागमः ७९
जननेता च सुखदः कुमारः कुशलागमः
हिरण्यवर्णो ज्योतिष्मानुपेन्द्रः तिमिरापहः ८०
अरोगो नयनाध्यक्षो विश्वासो विश्वसद्यजः
ब्रह्मज्योतिः सुवर्धामा महाज्योतिरनुक्रमः ८१
मातामहो मातरिश्वा नागहारोऽप्यनन्तधृत्
पुलस्त्यः पुलहोऽगस्त्यो जमदग्निः पराशरः ८२
निरावरणविज्ञानी विरिञ्चो विष्टरश्रवाः
आत्मभूरग्निनेत्री च ज्ञानमूर्तिर्महायशाः ८३
लोकचूडामणिर्वीरश्चण्डः सत्यपराक्रमः
व्यालकल्पो महाकल्पः कल्पवृक्षः कलाधरः ८४
अलङ्करिष्णुरचलो विष्णुर्विमललोचनः
असुः शब्दपतिर्वेगी प्लवनः शिखिसारथिः ८५
असंमृष्टो निधिः शुक्रः प्रमाथी पादपाशनः

वसुश्रवो हव्यवाहः प्रतप्तो विश्वभोजनः ८६
जप्यो ज्वरादिशमनो लोहिताक्षस्तनूनपात्
पृषदश्वो नभोयोनिः सुप्रतीकस्तमिस्रहा ८७
निदाघस्तपनो मेघः पक्षः परपुरञ्जयः
सुखानिलः सुनिष्पन्नः सुभगः शिशिरात्मकः ८८
वसन्तो माधवो ग्रीष्मो नभस्यो बीजवाहनः
अङ्गिरा भृगुरात्रेयो विमलो विश्ववाहनः ८९
भावनः पुरुजिच्छक्रस्त्रैविद्यो नरवाहनः
मनो बुद्धिरहंकारः क्षेत्रज्ञः क्षेत्रपालकः ९०
जमदग्निर्जलनिधिर्विवाहो विश्वकारकः
अधरोऽनुत्तरो ज्ञेयो ज्येष्ठो निःश्रेयसालयः ९१
शैलोन्नततनुर्दाहो दानवारिररिन्दमः
चामुण्डाजनकश्चारुर्निःशल्यो लोकशल्यहृत् ९२
चतुर्वेदश्चतुर्बाहुश्चतुरश्चत्वरप्रियः
आम्नायोऽथ समाम्नायस्तीर्थदेवः शिवानलः ९३
बहुरूपो महारूपः सर्वरूपश्चराचरः
न्यायनिर्वाहको न्यायो न्यायगर्भो निरञ्जनः ९४
सहस्रमूर्धा देवेन्द्रः सर्वशस्त्रविभञ्जनः
मुण्डो विरूपो विकृतो दण्डी दान्तो गुणोत्तमः ९५
पिङ्गलाक्षोऽथ हर्यक्षो नीलग्रीवो निरामयः
सहस्रबाहुः सर्वेशः शरण्यः सर्वलोकधृत् ९६
पशुपाशः परंज्योतिः परावारः परापरः
पद्मगर्भो महागर्भो विश्वगर्भो विचक्षणः ९७
परापरज्ञो वरदः सुरेशः सुमहास्वनः
देवासुरगुरुर्देवो देवासुरनमस्कृतः ९८
देवासुरमहामन्त्रो देवासुरमहाश्रयः
देवादिदेवो देवर्षिर्देवासुरवरप्रदः ९९
देवासुरेश्वरो दिव्यो देवासुरमहेश्वरः
सर्वदेवमयोऽचिन्त्यो देवतात्मात्मसम्भवः १००

ईड्योऽनीड्यः सुरव्याघ्रो देवसिंहो दिवाकरः
विबुधाग्रवरः श्रेष्ठः सर्वदेवोत्तमोत्तमः १०१
शिवज्ञानरतः श्रीमान् शिवः श्रीपर्वतप्रियः
वज्रहस्तोऽथ विष्टम्भो विष्वक्सेनो निशाचरः १०२
निशान्तो लोकचारी च धनाध्यक्षो धनाधिपः
नन्दी नन्दीश्वरो नन्दो नग्नव्रतधरः शुचिः १०३
लिङ्गाध्यक्षः सुराध्यक्षो लोकाध्यक्षो युगावहः
स्ववशः स्वागतः स्वर्गः स्वरः स्वरमयः स्वराट् १०४
बीजाध्यक्षो बीजकर्ता धर्मकृद्धर्मवर्धनः
दम्भोऽदम्भो महादम्भः सर्वभूतमहेश्वरः १०५
लोककर्ता मृगपतिर्महाकर्ता महौषधिः
उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः १०६
नीतिः सुनीतिः शुद्धात्मा सोमः सोमरतः सुखी
सोमपोऽमृतपः सौम्यो महानीतिर्महामतिः १०७
अजातशत्रुरालोकः संभाव्यो हव्यवाहनः
लोककारो वेदकारः सूत्रकारः सनातनः १०८
महर्षिः कपिलाचार्यो विश्वदीप्तिर्विलोचनः
पिनाकपाणिर्भूदेवः स्वस्तिदः स्वस्तिकृत्स्वधा १०९
त्रिसामा सामगः सर्वः सर्वगः सर्वगोचरः
उपहारप्रियोऽमोघः कर्णिकारप्रियः कविः ११०
श्रीपतिः श्रीनिवासश्च शीलवान्भिषगुत्तमः
गङ्गाप्लवोदको भव्यः पुष्कलः स्थपतिः स्थितः १११
विजितात्मा विधेयात्मा भूतवाहनसारथिः
सुगुणो गुणकार्यश्च सुकीर्तिश्छिन्नसंशयः ११२
कामरूपः कामपालो भस्मोद्धूलितविग्रहः
भस्मप्रियो भस्महस्तो भस्मस्कन्दकृतागमः ११३
ज्योतिर्मयो निराकारो जलनाथो जलेश्वरः
तुम्बवीणो महाकामो अशोकः शोकनाशनः ११४
त्रिलोकात्मा त्रिलोकेशः शुद्धः शुद्धिरधोक्षजः

अव्यक्तलक्षणो व्यक्तो व्यक्ताव्यक्तो विरूपकः ११५
परशीलः परगुणो मारो मारधनो मयः
ब्रह्मविष्णुप्रजापालो हंसो हंसपतिर्मखः ११६
वेधा विधाता धाता च स्रष्टा भर्ता चतुर्मुखः
कैलासशिखरावासी सर्ववासः सदागतिः ११७
हिरण्यगर्भो द्रुहिणः पुरुषः पूर्वजः पिता
भूतालयो भूतपतिर्भूतिदो भुवनेश्वरः ११८
सद्योजातोऽर्थविद्ब्राह्मो ब्रह्मण्यो ब्राह्मणप्रियः
वेदप्रियो वेदनाथो देवको देवचिन्तकः ११९
विषमाक्षो विशालाक्षो विषदो विषवर्धनः
निर्मदो निरहंकारो निर्मोहो निरुपद्रवः १२०
दर्पहा दर्पदो दृप्तः सनर्तः परिवर्तकः
सप्तजिह्वः सहस्रांशुः स्निग्धः प्रकृतिदक्षिणः १२१
भूतभव्यो भवन्नाथः प्रभावान्भ्रान्तिनाशनः
अर्थोऽनर्थो महाकोशः परकार्यैकपण्डितः १२२
निष्कलङ्कः कृतानन्दो निर्व्याजो व्याजमर्दनः
सत्ववान्सात्विकः सत्यः कीर्तिस्तम्भः कृतागमः १२३
पुण्यवन्द्यो गुणग्राही नैकाक्षो नैकधर्मकृत्
सुप्रीतः सुमुखः सूक्ष्मः सुखण्डो दक्षिणानलः १२४
नन्दः स्कन्दधरो धुर्यः प्रकटः प्रीतिवर्धनः
अयाचितः सर्वसहो विदग्धः सर्ववाहनः १२५
अमृतश्चेति विख्याताः पदं प्रति नमोऽन्तकम्
श्लोकादौ प्रणवं युक्तं तदन्ते च नमोऽन्तकम् १२६
पृथग्व श्लोकमात्रं वा जपेत्सायुज्यमाप्नुयात्
मन्त्राणामपि सर्वेषामुत्तमं मन्त्रनायकम् १२७
इमं मन्त्रं समुच्चार्य सर्वरक्षाकरं नृणाम्
यान्यान्कामयते कामांस्तांस्तान्वर्णेन सिद्ध्यते १२८
सहस्रनाम्नैरभ्यर्च्य जपहोमं यथाविधि
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् १२९

इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे सहस्रनामविधिपटलः त्रिसप्ततितमः

## चतुःसप्ततितमः पटलः
## स्थाननिर्देशनविधिः

कैलासशिखरासीनमीशानं सुरनायकम्
त्रिमूर्तिमादौ पप्रच्छ लोकानुग्रहकाम्यया १
अप्रच्छदग्निविधिवद्दीप्तशास्त्रमनुत्तमम्
कर्षणादिप्रतिष्ठान्तं सर्वं ब्रूहि मम प्रभो २
उक्तप्रश्नो विशेषेण सर्वकामार्थसाधकम्
महेन्द्रे मलये चैव हिमाद्रौ चार्जुने तथा ३
सह्ये विन्ध्ये च गङ्गायां नर्मदायां तथैव च
गोदावर्यां सरस्वत्यां कुरुक्षेत्रे विशेषतः ४
नैमिषे चान्तर्वेद्यां तु महाकाले वने तथा
क्षीरवृक्षसमीपे तु सौगन्धिकवनेऽपि च ५
नदीनां सङ्गमे चैव करवीरे श्मशानके
पारियात्रे च गोकर्णे वने चोपवने तथा ६
श्रीशैले यमुनायां तु प्रासादं परिकल्पयेत्
महेन्द्रे चायुरारोग्यं कर्तुः सदाभिवर्धते ७
मलये चैव सौभाग्यं धनधान्यविवर्धनम्
हिमाद्रौ पुत्रलाभं च अर्जुने शत्रुनाशनम् ८
गवां प्रवर्धनं सह्ये विन्ध्ये योगप्रसिद्धिदम्
गङ्गायां धौतपापायां नर्मदायां श्रियं ददेत् ९
गोदावर्यां महासिद्धिर्धनधान्यविवर्धनम्
सरस्वत्यां महाकीर्तिर्नैमिशे राष्ट्रवर्धनम् १०
शत्रोरुच्चाटनार्थाय कुरुक्षेत्रे विशेषतः
अन्तर्वेद्यां तु राज्यार्थी कारयेदालयं क्रमात् ११
महाकाले तु मोक्षः स्यात्क्षीरवृक्षेऽतिशान्तिकम्
सौगन्धिकवने कुर्यात्स्वर्गार्थी तु विशेषतः १२
नद्यां आयुःप्रदं ज्ञेयं करवीरे धनावहम्

यशोबले प्रवर्तेते पारियात्रे विशेषतः १३
गोकर्णे कन्यकालभं वने धान्यविवर्धनम्
उपवने विशेषेण पृथिव्यामेकराड्भवेत् १४
श्रीशैले कन्यालभार्थं यमुनायां तु पुष्टिदम्
सामान्यलक्षणं प्रोक्तं ग्रामादिष्वधुनोच्यते १५
ग्रामे च नगरे चैव पत्तने खेटके पुरे
कुब्जके राजधान्यां तु कुर्याद्देवालयं क्रमात् १६
वास्तु संपूजयेत्पूर्वं ग्रामन्यासं ततः परम्
ग्रामं च पञ्चधा कृत्वा भागमेकं बहिर्न्यसेत् १७
तत्पैशाचमिति ज्ञेयं तत्र देवालयं कुरु
दिक्षु दिक्षु च मध्ये च कुर्याद्देवालयं क्रमात् १८
ग्रामं पैशाचसंयुक्तं पदं स्यात्पञ्चविंशतिः
विदिक्षु विभजेत्कोष्ठान् कर्णाननादिसूत्रकैः १९
निर्ऋतेरीशगं सूत्रं वायोरग्निगतं भवेत्
चतुष्कात्पूर्वगं सूत्रं त्रिसूत्रमिति च स्मृतम् २०
चतुष्काद्याम्यगं सूत्रं धान्यसूत्रमिहोच्यते
चतुष्काद्वारुणं सूत्रं धनसूत्रमिति स्मृतम् २१
चतुष्कात्सोमगं सूत्रं सुखसूत्राभिधानकम्
एवं क्रमेण कोणेषु कल्पयेद्देशिकोत्तमः २२
ग्रामैशाने शिवस्थानमुक्तमार्गेण कारयेत्
ऐशद्वियंशके विद्वान्सूत्रं त्यक्त्वाऽलयं कुरु २३
धनधान्यसमृद्ध्यर्थं राजराष्ट्रविवर्धनम्
अग्नेस्तु द्व्यंशके हर्म्यं सर्वदुःखभयावहम् २४
निर्ऋतौ द्व्यंशके कर्ता वर्धते पुत्रपौत्रकैः
वायोः पदद्वये हर्म्यं स्थाननाशं करोति हि २५
एवमेव महाकोणेष्वंशभेदेन कल्पयेत्
पूर्वादिषु महादिक्षु पदमध्ये तु कल्पयेत् २६
शतं सहस्रपदयो ++++ ++ स्रकैः
ब्राह्मणैरधिवासो यः स ग्रामश्चोत्तमः स्मृतः २७

षट्सहस्रैरथाध्यर्धैस्तस्यार्धैकं तु सप्तकैः
अधिष्ठितस्तु यो ग्रामो मध्यमं तु विदुर्बुधाः २८
शतत्रयं च तस्यार्धं तदर्धं चाधमं स्मृतम्
प्रासादं कारयेद्धीमान्तत्तद्ग्रामानुरूपतः २९
पञ्चहस्तं नवहस्तं क्रमात्प्रासादमारभेत्
ग्रामाणामधमानां तु यथासङ्ख्यक्रमेण तु ३०
मुनिहस्तैः सूत्रहस्तैरेकादशकरैरपि
प्रासादं कारयेद्विद्वान् मध्यमस्य विशेषतः ३१
ग्रहकरै रुद्रकरैः त्रयोदशकरैरपि
प्रासादं कारयेद्धीमान् ग्रामाणामुत्तमस्य तु ३२
अथवान्यप्रकारेण वक्ष्यते शिवमन्दिरम्
त्रिहस्तादिसमारभ्य सप्तविंशतिकान्तकम् ३३
कुर्याद् ग्रामानुसारेण एकस्य द्वौ तु सङ्ख्यया
अधमादयो ये ग्रामाः शूद्रग्रामा इति स्मृताः ३४
त्रिहस्तादिसमारभ्य एकादशकरान्तकम्
क्षुद्रग्रामस्य विज्ञेयं प्रासादं सुविशेषतः ३५
ग्रामे च नगरे चैव पत्तने राजधानिके
खेटके कुब्जके चैव पुरे पूर्वोक्तवत्कुरु ३६
ब्राह्मणानां समृद्धानां वासो ग्राम इति स्मृतः
नानाजातिसमायुक्तं नानाशिल्पिभिरन्वितम् ३७
क्रयविक्रयकैः कीर्णं नगरं चेति कीर्तितम्
द्वीपान्तरागतद्रव्यक्रयविक्रयकैर्युतम् ३८
पत्तनं चेति विख्यातं नानाजातिसमाकुलम्
सचिवैश्च चतुर्भिश्च चतुरङ्गबलैरपि ३९
राजवेश्मसमायुक्तं राजधानीति चोच्यते
शूद्रैरधिष्ठितं चैव खेटकं चेति कीर्तितम् ४०
तेषां सीमान्तरं चैव कुब्जकं च विशेषतः
क्रयविक्रयकैः कीर्णं नानाजातिसमाकुलम् ४१
तन्तुवायैः समायुक्तं तत्पुरं चेति कीर्तितम्

पञ्चालं पावके स्थाने महामोटयास्तु कल्पयेत् ४२
श्रीदेव्यास्तु प्रकर्तव्यं याम्यायां श्रीकरं ततः
सुब्रह्मण्यं च नैर्ऋत्यां कारयेत्कुक्कुटालयम् ४३
++++ ++++ हस्तिपृष्ठविमानकम्
मातृस्थानं तु सौम्यायां प्रासादं मन्दिरं कुरु ४४
कैलासगिरिदिग्भागे ईश्वरस्य विनिर्मितम्
अथवान्यप्रकारेण वक्ष्यते शिवमन्दिरम् ४५
इन्द्र ईशानयोर्मध्ये सोम ईशानयोरपि
यथेष्टं कारयेद्धीमान्तत्तद्ग्रामानुरूपतः ४६
हरादिके भास्करान्तं मध्ये विष्णुगृहं विना
अथवान्यप्रकारेण वक्ष्यते राजधानिकम् ४७
अभ्यन्तराणि द्वाराणि दुर्गालक्ष्मीप्रतिष्ठया
द्वारस्य दक्षिणे भागे कर्तव्यं लक्षणान्वितम् ४८
बाह्यद्वारे चतुर्दिक्षु विघ्नेशाय यजेत्क्रमात्
उमादेव्याः प्रकर्तव्यं राजवेश्मस्य पश्चिमे ४९
पित्रोपायकरं कल्प्य दौवारिकहकं यजेत्
देवस्थानं विना यत्र एककालं न वासयेत् ५०
नित्यपूजाविहीने तु कुमारपीडां करोति हि
शूले सन्ध्ये चतुष्के च मर्मस्थाने न कारयेत् ५१
एवं परीक्ष्य बहुधा कर्तव्यं देवतालयम्
सुमुहूर्ते सुलग्ने च नक्षत्रकरणान्विते ५२
उत्तरायणकाले तु कारयेत्कर्षणं बुधः
अथवा दक्षिणे काले तुलावृश्चिकयोरपि ५३
श्वेता रक्ता च पीता च कृष्णभूमिद्विजादयः
मोक्षदा ब्राह्मणा ज्ञेया क्षत्रिया विजयप्रदा ५४
वैश्या तु धनदा भूमिः शूद्रा पुत्रसमृद्धिदा
वल्मीकाढ्यास्तथोषारं कृमिदुष्टं तु वर्जयेत् ५५
हस्तमात्रं खनेद्भूमिं पूरयेत्तेन पांसुना
अधिके चोत्तमा भूमिः समाने मध्यमा भवेत् ५६

न्यूना स्याद्वर्जयेद्धीमान् ग्राहयेन्मध्यमोत्तमाः
भूतप्रेतपिशाचानां बलिं दद्याद्विशेषतः ५७
अस्त्रेणोत्सारयेदेतान्पश्चात्कर्षणमारभेत्
कपिलौ श्वेतरक्तौ च नाङ्गहीनौ वृषौ पुनः ५८
हेमशृङ्गखुरैर्युक्तौ बलवान्मध्यमो वयः
वृषमन्त्रेण संपूज्य हलं यद्यज्ञवृक्षकम् ५९
आसनं खादिरो वापि हलं कृत्वा युगायुतम्
पूजयेद्वृषमन्त्रेण हलं कृत्वा सुलोहकम् ६०
बन्धयेदस्त्रमन्त्रेण गोचर्मकृतरज्जुना
पुण्याहं वाचयित्वा तु कर्षयेच्छिवमन्त्रतः ६१
शिवं ध्यात्वा विशेषेण प्रागुदक्प्लवनं महीम्
आचार्यं पूजयित्वा तु दद्यात्तु सहलौ वृषौ ६२
तिलसर्षपमुद्गादि नेत्रमन्त्रेण वापयेत्
त्रिरात्रावापिधारात्रि अन्यथा परिवर्जयेत् ६३
तेषु पक्षेषु तां खात्वा गोगणान्तान्निवेदयेत्
एवं परीक्ष्य बहुधा महेन्द्रादौ विशेषतः ६४
ग्रामे वा नगरे वापि पत्तने राजधानिके
विधेयस्थाने कर्तव्यं प्रासादं सविशेषतः ६५
मेषं विसृज्य वृषभं गते सूर्ये दिने बुधः
सशङ्कुच्छायया ग्राह्यं पूर्वोक्तविधिना सह ६६
यावत्प्रासादविस्तारं शल्योद्धारं समारभेत्

इति श्रीदीप्तशास्त्रे प्रतिष्ठातन्त्रे स्थाननिर्देशनविधिपटलः चतुःसप्ततितमः

## पञ्चसप्ततितमः पटलः
### शल्योद्धारविधिः

शल्योद्धारविधिं वक्ष्ये शल्यं कुर्याद्विचक्षणः
एकाशीति पदं कुर्याद्वास्तुदेहं प्रकल्पयेत् १
वास्तु संपूजयेत्पश्चादीशानादिसमासतः

ईशानादिसमारभ्य द्वात्रिंशत्पदभोगिनाम् २
ईशानश्चैव पर्जन्यो जयन्तश्च महेन्द्रकः
आदित्यः सत्यको भृशो अन्तरिक्षश्च पूर्वगाः ३
अग्निः पूषा च वितथो गृहक्षतयमौ तथा
गन्धर्वो भृङ्गराजश्च मृशश्चैव तु दक्षिणे ४
पश्चिमे पितरश्चैव दौवारिकस्तथैव च
सुग्रीवः पुष्पदन्तश्च वरुणश्चासुरस्तथा ५
शोषश्च पापयक्ष्मा च ते चाष्टौ कथितास्सुराः
उत्तरे च तथा रोगो नागो मुख्यस्तथैव च ६
भल्लाटश्च तथा सोमो मृगादितिदितिस्तथा
ब्रह्मा नवपदान्भुङ्क्ते वास्तुमध्ये विशेषतः ७
समरीको विवस्वांश्च मित्रश्च पृथिवीधरः
ब्रह्मणस्तु चतुर्दिक्षु षट्षट्पदसुभोगिनः ८
आपश्चैवापवत्सश्च सविता सावित्र एव च
इन्द्रो इन्द्रजयश्चैव रुद्रो रुद्रजयस्तथा ९
एते द्विपदभोक्तारो विदिक्ष्वष्टौ ह्यवस्थिताः
चरकी च विदारी च पूतना पापराक्षसी १०
ईशानादिषु कोणेषु बाह्यस्थाः पदवर्जिताः
स्कन्दोऽर्यमाथ जृम्भश्च बलिपिञ्छो ग्रहोत्तमाः ११
प्राचीं दिशं समारभ्य चतुर्दिक्षु व्यवस्थिताः
पूजयेद्गन्धपुष्पाद्यैर्यथोक्तविधिना सह १२
पञ्चगव्यकुशाद्भिश्च यवाक्षततिलैस्तथा
चरुणा सह दातव्यं ब्रह्मणे तु बलिं बुधः १३
चरकीप्रभृतीनां तु मांसं पक्वं निवेदयेत्
शेषाणामपि देवानां पायसादि निवेदयेत् १४
गुलान्नमाज्यसंयुक्तं सर्वेषामपि दापयेत्
गन्धादीनां नमोऽन्तं स्यात्स्वाहान्तं दापयेद्बलिम् १५
वास्तुहोमं ततः कृत्वा मध्ये वा चोत्तरेऽपि वा
तत्र स्याद्देवता यत्र स्वनामाद्येन होमयेत् १६

एकैकं शतमर्धं तु तदर्धं वापि होमयेत्
तिलतराडुलसंयुक्तं होमयेत्तु विचक्षणः १७
द्रव्यान्ते व्याहृतीर्हुत्वा स्विष्टान्तं हि समाचरेत्
वास्तुहोमं विना यत्र कृतं वास्तु विनश्यति १८
पुरायाहं वाचयेत्तत्र खानयेत्तु विशेषतः
सिकतां पूरयेत्तत्र ग्रस्थिलोष्टादि वर्जयेत् १९
कर्षणान्तविधिः प्रोक्तः शृणुष्व प्रथमेष्टकाम् २०
इति श्रीदीप्तशास्त्रे प्रतिष्ठातन्त्रे शल्योद्धारविधिपटलः पञ्चसप्ततितमः

## षट्सप्ततितमः पटलः
## प्रथमेष्टकाविधिः

ग्रथातः संप्रवक्ष्यामि शृणुष्व प्रथमेष्टकाम्
प्रासादे मराडपे चैव प्राकारे गोपुरे तथा १
परिवारालये चैव विन्यसेत्प्रथमेष्टकाम्
सर्वेषामधरे चैषां कल्पयेद्वास्तुपश्चिमे २
द्विविधं वास्तुसंभेदमनूपं जाङ्गलं भवेत्
वर्णगन्धरसैः शब्दैः स्पर्शनाकृतिभिस्तथा ३
प्रशस्तां खानयेद्भूमिमनूपे जलदर्शनम्
ग्रधिष्ठानप्रमाणं वा द्विगुणाध्यर्धमेव वा ४
जाङ्गले खानयेत्पश्चात्पूरयेद्वालुकादिभिः
इष्टिमृद्भिश्च पाषाणैः सिकतैः शर्करादिभिः ५
घनीकृतेऽङ्कभेदैश्च बृहद्भिः सर्वहंसकैः
घनीकृत्वोक्तपूर्वोक्तमिष्टकास्थापनं पुनः ६
यथाधिष्ठानमानं वा द्विगुणाध्यर्धमेव वा
कुर्याच्छ्वभ्रे विशेषेण विन्यसेत्प्रथमेष्टकाम् ७
तत्तले हर्म्यसूत्राणि पातयेद्भित्तिसूत्रकम्
होमसूत्रं न्यसेद्धीमान् हर्म्यसूत्रस्य बाह्यतः ८
तद्बाह्ये हर्म्यमात्रेण मानसूत्रं प्रसारयेत्
इष्टकाभिः शिलाभिर्वा स्थापयेत्प्रथमेष्टकाम् ९

शैलजे शैलजं ग्राह्यं मृण्मये मृण्मयं न्यसेत्
मिश्रे तु शैलमेव स्याद्दारुजे दारुमेव च १०
स्त्रीपुंनपुंसकाः शैलास्त्रिविधेन विधीयते
सुस्निग्धा घनसंयुक्ता घण्टारवसमन्विता ११
सोऽपि पुंलिङ्गमित्युक्तं सा शिला प्रथमा स्मृता
सुस्निग्धा मधुवर्णा च मृदुका सस्वना तथा १२
सा शिला युवती ज्ञेया द्वारबन्धे तु योजयेत्
अस्निग्धा झर्झरा रूक्षा निःस्वना सा नपुंसकम् १३
तदेव मूर्ध्नि विन्यस्यं तल्लक्षणमिहोच्यते
षोडशाङ्गुलमायाममष्टाङ्गुलसुविस्तरम् १४
तदर्धं नीव्रमेवं स्याद् एकभूमेष्टका भवेत्
क्रमाद्द्व्यङ्गुलवृद्ध्या तु अष्टत्रिंशाङ्गुलान्तकम् १५
आद्वादशानां भूमीनां सा प्रथमा शिला भवेत्
तदर्धं विस्तृतं तासां तस्यार्धं नीव्रमुच्यते १६
द्वादशाङ्गुलमायामं षण्मात्रं विस्तृतं भवेत्
तस्यार्धं नीव्रमेवं स्यात् स्थापनीयेष्टका भवेत् १७
तलं प्रत्यङ्गुलं वृद्धिश्चतुर्विंशति चान्तकम्
ऋजुरेखाः पुमांश्चैव कर्णरेखा नपुंसका १८
अग्ररेखाः स्त्रियश्चैव ज्ञात्वा कर्म समाचरेत्
प्रथमेष्टकां न्यसेत्पुंसा स्त्रीभिश्च द्वारबन्धनम् १९
मूर्ध्नेष्टकां न्यसेद्धीमान्नपुंसेन तु देशिकः
कृष्णां च बलहीनां च कुञ्जराक्षयुतामपि २०
बिन्दुरूपयुतां वापि वर्जयेदिष्टकां बुधः
सुमुहूर्ते शुभे लग्ने नक्षत्रकरणान्विते २१
स्थापयेत्स्थापको धीमान्निरर्थेन तु देशिकः
कृष्णां च बलहीनां च इष्टकां वा शिलां तु वा २२
तेषां नामानि वक्ष्यामि शृणु वह्ने विशेषतः
नन्दा भद्रा जया रिक्ता पूर्णा च परिकीर्तिताः २३
द्वारस्य दक्षिणे श्रीमान्स्तम्भमूले तु विन्यसेत्

आचार्यः शिल्पिभिश्चैव विन्यसेत्प्रथमेष्टकाम्  २४
सर्वालंकारसंयुक्तः सर्वाभरणभूषितः
शुक्लोष्णीषोत्तरीयश्च स्थपतिः स्थापयेत्तदा  २५
प्रासादस्याग्रतः कुर्यान्मण्डपं नवहस्तकम्
सप्तहस्तादि वा कुर्यात्पञ्चहस्तमथापि वा  २६
वितानध्वजसंयुक्तं दर्भमालोपशोभितम्
प्रासादस्योत्तरे वाथ मण्डपं कारयेद्बुधः  २७
मण्डपे स्थण्डिलं कृत्वा शालिभिश्चतुरङ्गुलम्
तिलतण्डुलसंयुक्तं भूषयेत्स्थण्डिलं प्रति  २८
जातीपुष्पतिलैर्दर्भैर्विकिरेत्तु समन्ततः
गन्धादिभिः समभ्यर्च्य विन्यसेदिष्टकां पुनः  २९
हेमकौतुकसंयुक्तां सवस्त्रां देशिकोत्तमः
तदग्रे स्थण्डिले स्थाप्य कलशान्नवसङ्ख्यया  ३०
सवस्त्रं सापिधानं च सकूर्चं हेमसंयुतम्
गन्धादिभिः समभ्यर्च्य प्रत्येकं जापयेद्गुरुः  ३१
प्रासादस्य चतुर्दिक्षु होमं कुर्याद्यथाविधि
समिदाज्यचरुं लाजांस्तिलसर्षपसंयुतान्  ३२
शिवाङ्गैः शतमर्धं वा व्याहृतिं च ततो हुनेत्
प्रभाते सुमुहूर्ते तु स्थापयेत्प्रथमेष्टकाम्  ३३
अग्रमग्रं च ऐशान्यां पृष्ठं पृष्ठं च नैर्ऋते
पृष्ठाग्रं चाग्नि वायव्ये ज्ञात्वा निक्षिप्य मन्त्रतः  ३४
पूर्वादिषु चतुर्दिक्षु विन्यसेद्धृदयादिभिः
पूर्वपश्चिममायामं तथा वै दक्षिणोत्तरम्  ३५
पश्चात्पश्चिमपूर्वं तु विन्यस्य दक्षिणोत्तरम्
चतुर्दिक्षु हुतं कुर्याद्धृदयाद्यैरनुक्रमात्  ३६
समिदाज्यचरुं लाजान्सर्षपं तिलतण्डुलम्
अष्टोत्तरशतं हुत्वा शिवमन्त्रेण मन्त्रवित्  ३७
सुमुहूर्ते सुलग्ने च योगे च करणान्विते
सर्ववाद्यसमायुक्तं सर्वमङ्गलसंयुतम्  ३८

स्थापयेत्तु विशेषेण रत्नं मध्ये विनिक्षिपेत्
पूरयेदवटं तत्र पश्चादद्भिर्विचक्षणः ३९
कलशाद्भिः समापूर्य शस्ताशस्तं परीक्षयेत्
शुभं वै दक्षिणावर्तं वामावर्तमशोभनम् ४०
वामावर्ते ततः कुर्यादीशानेन शताहुतीः
महाव्याहृतिमन्त्रेण होमयेद्दोषशान्तये ४१
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः
शिल्पिनं पूजयेत्तत्र वस्त्राभरणसंयुतम् ४२
प्रथमेष्टकाविधिः प्रोक्त उपपीठविधिं शृणु ४३
इति श्रीदीप्तशास्त्रे प्रतिष्ठातन्त्रे प्रथमेष्टकाविधिपटलः षट्सप्ततितमः

## सप्तसप्ततितमः पटलः
### जलधाराविधिः

अतः परं प्रवक्ष्यामि जलधाराविधिक्रमम्
अनावृष्टावतिवृष्टौ दुर्भिक्षे दुर्निमित्तके १
ज्वरादिपीडने चैव मसूरकादिपीडने
शलभामूषकाद्यैस्तु सर्वसस्यविनाशने २
पशूनां पीडने चैव महोत्पातप्रशान्तये
रक्षाविधौ च नारीणां प्रजाशून्ये तथैव च ३
प्रासादे मधुसंभूते वल्मीके चोत्थिते तथा
मृद्दारुप्रतिमानां तु वल्मीके चोत्थिते यदि ४
प्रासादे गर्भगेहे तु क्रूरस्यापि महोद्भवे
राजाभिषेकसमये युद्धारम्भस्य जन्मनि ५
भूमिकम्पे दिशां दाहे प्रतिसूर्यप्रदर्शने
रात्राविन्द्रधनुं दृष्ट्वा तद्दुष्टं परिवर्जयेत् ६
दिवानक्षत्रदर्शेन राजा मरणमाप्नुयात्
एवमादिषु कालेषु जलधारा विधीयते ७
क्षीरं दधि घृतं चैव शर्करामधुसंयुतम्
पञ्चैतानि मयोक्तानि अथवा जलधारया ८

पादत्रयं तु कुर्वीत खादिराश्वत्थचूतकैः
बिल्वेन पट्टिकां कुर्याल्लक्षरोन समन्वितम् ९
विंशत्यङ्गुलमानेन त्रिपादिका महेश्वरी
पीठात्त्रिगुरामुत्सेधं हस्तमात्रं तु पट्टिका १०
आग्नेय्यां खादिरं न्यस्त्वा अश्वत्थं वारुरो न्यसेत्
ऐशान्यां विन्यसेदाम्रं पादानां विन्यसेद्बुधः ११
धर्मज्ञानं च वैराग्यमाग्नेय्यां वारुरोंशके
गङ्गां च पट्टिके न्यस्त्वा कुम्भे सदाशिवं न्यसेत् १२
अथवा याज्ञिकैर्वृक्षैः पूर्वोक्तविधिना सह
सौवर्णं राजतं ताम्रमथवा मृरामयं भवेत् १३
सुदृढं रसरत्नाभं बिम्बप्रभसमन्वितम्
द्रोराद्वयं तु संपूर्णं सुपक्वं कालवर्जितम् १४
द्वात्रिंशत्प्रस्थसंपूर्णमुत्तमं कुम्भमुच्यते
चतुर्विंशतिसंपूर्णं मध्यमं कुम्भमुच्यते १५
अधमं द्रोरासंपूर्णं कुम्भं वै त्रिगुणं भवेत्
त्रिगुणीकृतसूत्रेरा वेष्टयेत्तन्तुजालवत् १६
प्रतिकुम्भं समं कृत्वा इति शास्त्रस्य निश्चयः
मासं वाप्यर्धमासं वा द्वादशाहमथापि वा १७
नवाहं चैव सप्ताहं पञ्चाहं तु समन्वितम्
एकाहं वा प्रकुर्वीत स्नावयेच्छिवमूर्धनि १८
यजमानेच्छया कुर्यात्पूर्वरात्रेऽधिवासयेत्
मराडपं तु प्रकारेरा चतुर्द्वारसमन्वितम् १९
चतुस्तोरसंयुक्तं द्वारकुम्भसमन्वितम्
मङ्गलाङ्कुरपूर्वे तु दर्भमालाविभूषितम् २०
स्तम्भानावेष्ट्य वस्त्रेरा मङ्गलाष्टकशोभितम्
तन्मध्ये वेदिकां कुर्याद्रत्निमात्रप्रमाणतः २१
स्थरिडलं तत्र कुर्वीत अष्टद्रोरोन शालिना
तदर्धैस्तराडुलैर्भूष्य तदर्धैश्च तिलैरपि २२
लाजान्दर्भसमायुक्तान्विकिरेत्स्थरिडलोपरि

गन्धपुष्पादिना पूज्य ततः स्थापनमारभेत् २३
पुरायाहं तत्र कुर्वीत ब्राह्मणैः स्वस्तिवाचकैः
चन्दनागरुकुष्ठं च कर्पूरोशीरकं तथा २४
अस्त्रमन्त्रेण संपीड्य जलभाराडेन योजयेत्
जलभाराडं पूरयेद्धीमानस्त्रमन्त्रं तु वारिणा २५
षडङ्गैः शिवमन्त्रेण अभिमन्त्रेण संयुतम्
स्वाहान्तेनैव तोयेन शिवकुम्भं तु पूरयेत् २६
पञ्चरत्नसमायुक्तं सकूर्चं सापिधानकम्
वस्त्रयुग्मेन संवेष्ट्य चूतपल्लवशोभितम् २७
गन्धपुष्पादिना पूज्य हृदयादिकमन्त्रतः
ध्यात्वा कुम्भस्य मध्ये तु शिवं परमकारणम् २८
व्योमादिपरमं गुह्यं सर्वज्ञं तु सदाशिवम्
पञ्चमूर्धं चतुर्वक्त्रं वसुश्रोत्रसमन्वितम् २९
चतुरास्यं चतुर्नास्यं दिग्भुजं तनुरेकहृत्
द्विपादं तु सुखासीनं कुम्भमध्ये तु भावयेत् ३०
सान्तं यान्तसमारूढं चतुर्थस्वरभूषितम्
बिन्दुनादसमायुक्तं मन्त्रमूर्तिं सदाशिवम् ३१
एवं ध्यात्वा तु मनसा गन्धपुष्पादिनार्चयेत्
तराडुलस्य तु तन्मध्ये कर्णिकायां न्यसेद्बुधः ३२
गन्धपुष्पं च धूपं च दीपैरर्घ्यं तु दापयेत्
अष्टदिक्ष्वष्टकुराडानि चतुरश्राणि विन्यसेत् ३३
इन्द्रस्येशस्य मध्ये तु वृत्तकुराडं तु कल्पयेत्
पूर्वोक्तलक्षणेनैव नवकुराडानि कारयेत् ३४
चतुर्दिक्षु च कुराडानि पञ्चहोमे तु कारयेत्
एकहोमं शिवाग्रे तु कारयेत्तु विचक्षणः ३५
पलाशखादिराश्वत्थप्लक्षन्यग्रोधवञ्जुलाः
उदुम्बरः शमी चैव अपामार्गस्तथैव च ३६
शोषणं पाचनं चैव उल्लेखनं तथैव च
शिवाग्निं जनयेत्तत्र शिवमन्त्रेण देशिकः ३७

ब्रह्माणं दक्षिणे स्थाप्य ब्रह्मजज्ञानमन्त्रतः
प्रणीतां चोत्तरे स्थाप्य इदं विष्णिवति मन्त्रतः ३८
घृतं मिक्षेति मन्त्रेण आज्यसंस्कारमेव च
समिदाज्यचरून् लाजान्सर्षपांश्च यवांस्तिलान् ३९
क्षीरं दधि गुलं चैव जुहुयात्तत्पृथक्पृथक्
समिधं सद्यमन्त्रेण आज्यं वामेन हूयते ४०
पुरुषेण चरुं हुत्वा लाजान्घोरेण हूयते
सर्षपं चेशमन्त्रेण यवं हुत्वा हृदा तु वै ४१
शिरोमन्त्रेण च तिलं क्षीरं हुत्वा शिखेन तु
दधि वै कवचेनैव गुलमस्त्रेण हूयते ४२
द्रव्यान्ते व्यहृतिं चैव हुत्वा हुत्वा स्पृशेद्धटम्
चतुर्दिक्ष्वध्ययनं कुर्युश्चत्वारो वेदपारगाः ४३
ऋग्वेदशान्तिः पूर्वे स्याद्यजुर्वेदं तु दक्षिणे
सामन्तु पश्चिमे न्यस्त्वा अथर्वं चोत्तरे न्यसेत् ४४
श्रीसूक्तं पुरुषसूक्तं च रात्रिसूक्तं वृषाकपिः
पवमानं च वाल्मीकं ऋग्वेदाध्ययनं भवेत् ४५
सम्प्रयच्छ महानाम्नि रुद्रहोतारमेव च
शान्तिद्वयं पवमानमरुणं नारायणं तथा ४६
यजुष्यध्ययनं प्रोक्तं सामेनाध्ययनं तथा
ज्येष्ठसाम बृहत्साम रथन्तरं विष्णुसामकम् ४७
सामेनाध्ययनं प्रोक्तमथर्वं तु ततः शृणु
नीलरुद्रं स्कन्दसूक्तं अथर्वेऽध्ययनं भवेत् ४८
ततो गर्भगृहं गत्वा लिङ्गपीठौ समर्चयेत्
स्नपनं तत्र कुर्वीत शताष्टकलशाधिकम् ४९
वस्त्रं गन्धं च पुष्पं च धूपदीपं तथा भवेत्
पञ्चवर्णहविर्दत्वा तथा गोरसपायसम् ५०
शुद्धान्नं च समायुक्तं पञ्चद्रोणेन दापयेत्
शालितण्डुलकं श्रेष्ठं परमान्नं निवेदयेत् ५१
त्रिपादीं पूजयेद्धीमान्धर्मज्ञानादिमन्त्रतः

एकैकं वस्त्रयुग्मेन वेष्टयेद्धृदयेन तु ५२
वलयं वस्त्रेण संवेष्ट्य गङ्गामन्त्रेण चार्चयेत्
तस्योपरि न्यसेत्कुम्भं शिवगायत्रिमन्त्रतः ५३
यवमात्रं भवेद्विद्वान्सुषिरं तत्प्रतिष्ठितम्
द्विगुणं त्रिगुणं वापि दधि क्षीरं समर्चयेत् ५४
सौवर्णं राजताद्यं तु सुषिरं पृष्ठसाधिना
कुम्भतोयेन सुषिरं कुम्भमध्ये तु पूरयेत् ५५
सकूर्चं सापिधानं च वस्त्रपल्लवसंयुतम्
तत्तत्सदाशिवं ध्यात्वा पूर्ववत्परिकल्पयेत् ५६
रात्रिं दिवं शिवमूर्ध्नि स्त्रावयेत्तदनन्तरम्
कुर्याद्बाह्याय कुम्भं तु बाह्यकुम्भं तु पूरयेत् ५७
अधिवासं च रात्रौ तु पूजयेत्तु दिनं प्रति
एतद्दिनेन तु प्राप्य देवदेवं दिने दिने ५८
द्विगुणं धारयेद्देवं सन्धित्रयमुपासयेत्
नैवेद्यं द्विगुणं कुर्याद्ब्राह्मणान्भोजयेत्ततः ५९
अर्चकानां प्रपूज्यैवं तथा अध्ययनं तथा
जलधारां क्षीरधारां मध्वा दध्ना घृतादि वै ६०
दिवा रात्रौ शिवे मूर्ध्नि स्त्रावयेत्कुम्भपृष्ठतः
एवं विधिं समालोक्य पूजयेत्तु दिने दिने ६१
तदन्ते स्नपनं कुर्याच्छताष्टकलशान्वितम्
नृत्तगेयसमायुक्तं पूजान्ते तु दिने दिने ६२
आचार्यं पूजयेन्नित्यं पञ्चनिष्कमथापि वा
तदर्धं मूर्तिपान्दत्वा तदर्धाध्ययनं भवेत् ६३
दैवज्ञस्य तदर्धं स्यात्पण्डितानां तथैव च
परिचाराणां सर्वेषां पूजयेत्तु विशेषतः ६४
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्
जलधाराविधिः प्रोक्तो ब्रह्मोद्धारविधिं शृणु ६५

इति श्रीदीप्तशास्त्रे प्रतिष्ठातन्त्रे जलधाराविधिपटलः सप्तसप्ततितमः

## अष्टसप्ततितमः पटलः

## ब्रह्मोद्धारविधिः

अथातः संप्रवक्ष्यामि ब्रह्मोद्धारविधिं शृणु
अनिलस्य पञ्चमेनैव वासवस्य द्वितीयकम्  १
शङ्करं तु समुद्धृत्य प्रथमस्य द्वितीयकम्
धनदस्य चतुर्थेन युतं शक्रत्रयोदशम्  २
मरुतं पञ्चमं ग्राह्य वासवैकादशेन तु
शङ्करस्य द्वितीयान्तं वरुणाद्येन संयुतम्  ३
शक्रस्य पञ्चबीजेन युक्तं पूर्वोक्तमक्षरम्
ऐशानं तु समुद्धृत्य वासवस्य तृतीयकम्  ४
धनदस्य चतुर्थं तु युक्तमिन्द्रत्रयोदशम्
पवनस्य पञ्चमं ग्राह्यमीशानं कथितं तव  ५
प्रणवं पञ्च फचानामष्टत्रिंशाक्षरः श्रिताः
ईशानं वर्णमेवोक्तं पुरुषस्य ततः शृणु  ६
वर्गात्त्रयोदशं ग्राह्य पञ्चदशसमन्वितम्
वारुणं तु समुद्धृत्य वासवेन समन्वितम्  ७
वायुबीजसमायुक्तं वज्रपञ्चमसंयुतम्
धनदस्य द्वितीयं च इन्द्रपञ्चमसंयुतम्  ८
शूलान्तेन समायुक्तं वज्रान्तेन तु संयुतम्
धनदं वज्रसंयुक्तं गदायास्तु चतुर्थकम्  ९
शक्रान्तान्तेन संवेष्ट्य वरुणान्तान्तमुद्धरेत्
वायुपञ्चमसंयुक्तं वज्राद्येन समायुतम्  १०
शङ्करस्य चतुर्थं तु वासवैकादशेन तु
मारुतात्पञ्चमं वज्रं शूलस्य च चतुर्थकम्  ११
सङ्क्रान्तेन समायुक्तमुद्धरेत तथा क्रमम्
पर्जन्यस्य द्वितीयान्तं वासवैकादशेन तु  १२
धनदस्य चतुर्थं तु वज्रान्तेन विभूषितम्
धनदं वज्रसंयुक्तं वारुणस्य चतुर्थकम्  १३
वासवस्य चतुर्थं तु तस्योर्ध्वे विन्यसेत्क्रमात्
वायुपञ्चममुद्धृत्य वासवेन समायुतम्  १४

शूलस्यैव चतुर्थं तु वासवत्रयसंयुतम्
पञ्च चैव समुद्धृत्य तदेव पुनरुद्धरेत् १५
वासवस्य त्रयोदश्याः पूर्वोक्तेन तु संयुतम्
धनदस्य द्वितीयं तु वज्रपञ्चमसंयुतम् १६
पाशान्तान्तं समुद्धृत्य कौबेरान्तमथो न्यसेत्
षोडशो वासवस्यैवं पवनाद्यं समुद्धरेत् १७
वह्न्याधास्तां तु संयुक्तं वासवेन समन्वितम्
यमश्चैव समुद्धृत्य वासवस्य त्रयोदश १८
पाशस्यैव द्वितीयान्तं वासवेन समन्वितम्
गदावाद्यं समुद्धृत्य वज्रान्तेन समन्वितम् १९
वारुणस्य समुद्धृत्य पुरुषं कथितं तव
चतुर्विंशतिवर्णाश्च ज्ञेयास्तत्पुरुषस्य तु २०
द्वादशान्तं समुद्धृत्य पञ्चदशसमन्वितम्
इन्द्रस्याद्यं समुद्धृत्य अग्निवर्गचतुर्थकम् २१
वासवैकादशान्तान्तं पूर्वोक्तेन तु संयुतम्
धनदान्तं समुद्धृत्य वासवैकादशेन तु २२
मारुतस्य चतुर्थं तु धनदाद्यं त्रयोदश
वासवाद्यं तु पाशान्तं वासवेन समन्वितम् २३
पावकस्य चतुर्थं तु द्वादशान्तेन संयुतम्
धनदान्तं दशान्तं स्याद्वायुवर्गचतुर्थकम् २४
धनदाद्द्वादशान्तेन युक्तं पूर्वोक्तमक्षरम्
जातवेदाश्चतुर्थं तु वासवस्य त्रयोदशम् २५
चन्द्रबीजान्तमुद्धृत्य वासवेन समन्वितम्
अनलस्य चतुर्थं तु वासवस्य त्रयोदशम् २६
चन्द्रान्तं तु समायुक्तं वरुणस्य तु संयुतम्
सोमान्तं तु दशान्तेन पवनस्य चतुर्थकम् २७
सोमाद्येन समायुक्तं षोडशेन समन्वितम्
ईशानस्य त्रियंशं तु वासवेन समन्वितम् २८
सोमबीजाच्चतुर्थं तु तदेव पुनरुद्धरेत्

अग्निबीजोर्ध्वकं कुर्याद्वासवेन समन्वितम्  २९
वारुणस्यादिमं वज्रं शूलाद्येन समन्वितम्
ईशानादिसमायुक्तं वासवेन समन्वितम्  ३०
गदाचतुर्थं योज्यं तद्बीजं चाग्निवासवम्
शूलस्यान्तान्तमुद्धृत्य वासवेन समन्वितम्  ३१
शीतांशोश्च चतुर्थं तु पुरस्तद्वह्निबीजकम्
एकादशेण संयुक्तं मारुतस्य चतुर्थकम्  ३२
कुबेरेण समायुक्तं द्वादशान्तेन संयुतम्
जलाधिवासनार्थान्तं वासवेन समन्वितम्  ३३
वायुपञ्चममुद्धृत्य वज्रेणैव समायुतम्
ईशानस्य तृतीयं तु वारुणाद्यदशान्तकम्  ३४
कुबेरान्तं वासवात्पञ्च वारुणान्तान्तमुद्धरेत्
वह्निबीजसमायुक्तं वासवेन समन्वितम्  ३५
कौबेरान्तं समुद्धृत्य वासवस्य तु षष्ठकम्
अनिलं तु समुद्धृत्य वासवैकादशेन तु  ३६
अनिलाच्चतुर्थमाहृत्य कौबेरं चाथ योजयेत्
षोडशेन समायुक्तमघोरं सर्वकामदम्  ३७
त्रयस्त्रिंशाक्षरा ज्ञेया अघोरस्यैव कथ्यते
द्वादशान्तं समुद्धृत्य पञ्चदशसमन्वितम्  ३८
धनदस्य चतुर्थं तु वज्रान्तेन समन्वितम्
पवनात्पञ्चमं ग्राह्य द्वादशान्तेन भूषितम्  ३९
दण्डान्तान्तं समुद्धृत्य वज्रान्तैकादशेन तु
शूलस्यान्तं समुद्धृत्य खड्गान्तं स्यादधः स्थितम्  ४०
वज्रान्तेन समायुक्तं कुबेरं वासवान्वितम्
वरुणस्य पञ्चमं ग्राह्य वासवेन समन्वितम्  ४१
ध्वजस्य पञ्चमं पश्चाद्वासवस्य त्रयोदशम्
गदान्तं तु समुद्धृत्य वज्रपञ्चमभूषितम्  ४२
पाशान्तान्तं समुद्धृत्य वन्याधस्तात्सुभूषितम्
वज्रान्तेन समायुक्तं गदा वासवसंयुतम्  ४३

वरुणस्य पञ्चमं ग्राह्य वज्रेणैव समन्वितम्
पवमानस्य पञ्चमं ग्राह्य षोडशेन समायुतम् ४४
अग्न्याद्या हि समुद्धृत्य शक्रान्तेन समायुतम्
सोमान्तान्तं समुद्धृत्य वज्रान्तेन समायुतम् ४५
चन्द्रादित्या हि समुद्धृत्य वासवेन समन्वितम्
पाशस्य पञ्चमं ग्राह्य वज्रेणैव समायुतम् ४६
पवनस्य पञ्चमं ग्राह्य षोडशेन समन्वितम्
ईशानान्तं समुद्धृत्य वज्रेणैव विभूषितम् ४७
धनदस्य चतुर्थं तु बीजं तत्पुरुषेण तु
अग्निबीजं ततोद्धृत्य वासवेन समन्वितम् ४८
पवनस्य पञ्चमं प्रोक्तं प्रवासस्य चतुष्टयम्
वरुणं तु समुद्धृत्य वासवेन समन्वितम् ४९
पाशान्तान्तं समुद्धृत्य इन्द्राद्येन समन्वितम्
अनिलात्पञ्चमं ग्राह्य वज्रेणैव समन्वितम् ५०
पाशस्य पञ्चमं ग्राह्य वासवान्तसमन्वितम्
कुबेराद्यं समुद्धृत्य पुरुहूतसमन्वितम् ५१
पाशस्य पञ्चमं ग्राह्य वासवेन समन्वितम्
वायुपञ्चममुद्धृत्य द्वादशान्तेन संयुतम् ५२
अनिलस्य पञ्चमं पश्चाद्वज्रेणैव समायुतम्
पवशस्य पञ्चमं प्रोक्तं द्वादशान्तेन संयुतम् ५३
वारुणं तु समुद्धृत्य वायुपञ्चममेव तु
वासवेन समायुक्तं वरुणस्यैव पञ्चमम् ५४
वज्रान्तेन समायुक्तं धनदाद्यं तु वासवम्
पाशस्य पञ्चमं पश्चाद्द्वासवेन समन्वितम् ५५
वायुपञ्चममुद्धृत्य षोडशेन समन्वितम्
सप्तषष्ट्यक्षरा प्रोक्तं च वामदेवं समुद्धरेत् ५६
शतपञ्चकसंयुक्तं अनिलाद्यं समुद्धरेत्
अथो वह्निसमायुक्तं वासवेन समन्वितम् ५७
पवनं वज्रसंयुक्तं पाशान्तान्तं समुद्धरेत्

गदायाद्यसमायुक्तं वासवस्य द्वितीयकम्  ५८
अनिलस्य पञ्चमं ग्राह्य वासवस्य तृतीयकम्
शङ्करस्य तृतीयं तु वासवेन समन्वितम्  ५९
वरुणान्तं समुद्धृत्य सोमस्य प्रथमं ततः
वासवद्वादशान्तं तु जिवितेशतृतीयकम्  ६०
वासवस्य द्वितीयेन वरुणं स्यात्ततः परम्
वासवस्य द्वितीयेन धनदस्य ततः परम्  ६१
वासवेन समायुक्तं धनदस्य चतुर्थकम्
वासवद्वादशेनैव वरुणस्य तु पञ्चमम्  ६२
वासवेन समायुक्तं अनिलस्य तु पञ्चमम्
वासवेन समायुक्तं षोडशेन समन्वितम्  ६३
वायवस्य चतुर्थं तु वासवेन समन्वितम्
धनदस्य चतुर्थं तु शक्रस्यैकादशैर्युतम्  ६४
तदेव पुनरुद्धृत्य वरुणस्य तु पञ्चमम्
वासवस्य द्वितीयं तु वरुणेन समन्वितम्  ६५
शक्रान्तान्तसमायुक्तं वायवस्य चतुर्थकम्
वासवेन समायुक्तं धनदस्य चतुर्थकम्  ६६
एकादशेन संयुक्तमनिलस्य चतुर्थकम्
त्रयोदशसमायुक्तं वारुणस्य तृतीयकम्  ६७
पवनस्य चतुर्थं तु वासवेन समन्वितम्
धनदस्य चतुर्थं तु वासवस्य द्वितीयकम्  ६८
धनदेन समायुक्तं वासवेन समन्वितम्
शङ्करेण समायुक्तं धनदस्य चतुर्थकम्  ६९
पञ्चत्रिंशत्कलैर्युक्तं नमस्कारादिकं भवेत्
ब्रह्मोद्धारविधिः प्रोक्तो मन्त्रोद्धारविधिं शृणु  ७०

इति श्रीदीप्तशास्त्रे प्रतिष्ठातन्त्रे ब्रह्मोद्धारविधिपटलः अष्टसप्ततितमः

## एकोनाशीतितमः पटलः

## उत्सवविधिः

अतः परं प्रवक्ष्यामि शिवोत्सवविधिक्रमम्
मुक्तिदं परमं नित्यं सदा विजयवर्धनम् १
सर्वभूतहितं पुण्यं सर्वलोकसुखावहम्
प्रथमं वृषयागं तु द्वितीयं रोपयेद् ध्वजम् २
तृतीयं ताडयेद्भेरीं चतुर्थं चाङ्कुरार्पणम्
पञ्चमं यागशाला स्यादस्त्रयागमतः परम् ३
सप्तमं बलिदानं स्यात्तथा यानक्रमं परम्
परिवेषं नावमं स्यान्नीराजनमथो दश ४
एकादशं कौतुकं च तीर्थसंग्रहणं परम्
त्रयोदशं चूर्णकर्म तीर्थं चैव चतुर्दश ५
ध्वजावरोहणं पश्चात्षोडशं स्नपनं भवेत्
एवं षोडशभेदेन शिवोत्सवं प्रकीर्तितम् ६
सवो दुःख इति ख्यातः सर्वसंपन्निवारणः
उद्गतस्तु सवो यस्मात्तस्मादुत्सव उच्यते ७
शैवं गौणं विभूतिं च भौवनं दैविकं तथा
पैतृकं चैव कौमारं सावित्रं चान्द्रमेव च ८
शैवमेकाहमित्युक्तं त्रयाहं गौणमुच्यते
पञ्चाहं भौतिकं प्रोक्तं सप्ताहं भौवनं तथा ९
नवाहं दैविकं प्रोक्तं पैतृकं द्वादशाहकम्
त्रयोदशाहं कौमारं सावित्रं स्याच्चतुर्दशम् १०
पक्षोत्सवं तु यत्प्रोक्तं तच्चान्द्रमिति कीर्तितम्
शैवं गौणं विभूतिं च प्रोच्यते कन्यसत्रयम् ११
भौवनं दैविकं चैव पैतृकं मध्यमत्रयम्
कौमारं चैव सावित्रं चान्द्रं वै चोत्तमत्रयम् १२
केतुरोहणपूर्वं तु भेरीताडनपूर्वकम्
अङ्कुरार्पणपूर्वं च त्रिविधं समुदाहृतम् १३
ध्वजमारोपयेत्पूर्वं भेरीघोषं ततः परम्
उत्सवस्याधिरात्रौ तु बीजनिर्वापमुच्यते १४

ध्वजारोहणपूर्वं तु प्रोक्तमेवं महानल
भेरीं तु ताडयेत्पूर्वं ध्वजमारोपयेत्ततः १५
अङ्कुराण्यर्पयेत्पश्चाद्भेरीपूर्वक्रमात्कृतम्
अङ्कुरार्पणपूर्वं तु वक्ष्ये संक्षेपणाच्छृणु १६
अङ्कुराण्यर्पयेत्पूर्वं ततो भेरीं तु ताडयेत्
ध्वजारोपणमन्ते तु कर्तव्यं प्रथमे निशि १७
उत्सवानां कनिष्ठानां केतुं नारोपयेद्बुधः
आरोपयेत्ततो धीमान्मध्यमे चोत्तमेऽपि वा १८
तद्दिनं त्रिगुणीकृत्य द्विगुणीकृत्य भावयेत्
उत्सवस्य दिनादौ वा ध्वजमारोपयेत्क्रमात् १९
शीर्षमासे तु कर्तव्यमार्द्रान्तं तु शिवोत्सवम्
पुष्यमासे तु पुष्यान्तमुत्सवं कारयेत्क्रमात् २०
माघमासे मघान्तं स्यात् षष्ट्यन्तं शिवोत्सवम्
फाल्गुने चोत्तरान्तं स्याच्चैत्रे चित्रान्तमेव च २१
वैशाखे तु विशाखान्तं मूलान्तं ज्येष्ठमासके
ज्येष्ठमासे विशेषेण कृष्णाष्टम्यान्तमाचरेत् २२
आषाढे चोत्तराषाढा श्रावणे श्रवणान्तकम्
भाद्रपदे तथा मासे पूर्वभाद्रपदान्तकम् २३
मासे चाश्वयुजेऽश्व्यन्तं कार्तिके कृत्तिकान्तकम्
सर्वमासे तु कर्तव्यमार्द्रान्तं स्याच्छिवोत्सवम् २४
राजजन्मर्क्षके चैव युद्धारम्भे समाचरेत्
प्रतिष्ठोत्सवं कर्तव्यं यावत्सप्तदिनान्तकम् २५
शैविकं शान्तिकं चैव द्विविधं चोत्सवक्रमम्
शैवादि चोत्सवदिनं यावत्संख्या विधीयते २६
तत्पूर्वरात्रिमारभ्य कारयेदुत्सवं बुधः
प्रतिष्ठा चोत्सवं यागं सायादिदिनमारभेत् २७
प्रतः काले ह्यवभृतं सायंकाले समारभेत्
रात्रिः सायं दिवा प्रातरिति शास्त्रस्य निश्चयः २८
पक्षोत्सवविधाने तु त्रिंशद्बलिं समाचरेत्

अष्टाविंशच्चतुर्दश्यां षड्विंशत्स्यात्त्रयोदशे २९
द्वादशाहे चतुर्विंशन्नावाहेऽष्टादश भवेत्
चतुर्दश स्यात्सप्ताहे पञ्चाहे दश एव च ३०
त्र्यहे च षड्बलिं दद्यादेकाहे तु बलिद्वयम्
एतच्छैविकमित्युक्तं शान्तिकं च ततः शृणु ३१
निर्दिष्टदिवसाद्रात्रिमारभ्योत्सवमाचरेत्
एकाहे चोत्सवारम्भे बलिमेकं समाचरेत् ३२
त्र्यहे चैव तु चत्वारि पञ्चाहे चाष्ट वै बलिम्
सप्ताहे द्वादश चैव नवाहे षोडशं बलिम् ३३
द्वादशाहे तु द्वाविंशच्चतुर्विंशत्त्रयोदशे
चतुर्दशाहे षड्विंशत्तिथिसंख्येऽष्टविंशकः ३४
एतद्वै शान्तिकं प्रोक्तं वृषयागमथ शृणु ३५
इति श्रीदीप्तशास्त्रे प्रतिष्ठातन्त्रे उत्सवविधिपटलः एकोनाशीतितमः

## अशीतितमः पटलः
## वृषाधिवासनविधिः

अतः परं प्रवक्ष्यामि शृणु वह्ने विशेषतः
ध्वजारोहणपूर्वेद्युर्निशायामधिवासयेत् १
शिवं संपूज्य विधिवद्विज्ञाप्योत्सवमुत्तमम्
वृषस्थानमलंकृत्य वितानध्वजचामरैः २
फलपुष्पादिभिश्चैव धूपदीपैरलंकृतम्
उत्तराभिमुखो भूत्वा स्वासीनो देशिकोत्तमः ३
अङ्गन्यासं करन्यासं पूर्वोक्तविधिना कुरु
अर्चयित्वा वृषं सम्यग्गन्धपुष्पादिना बुधः ४
दद्यान्मुद्गौदनं तस्मै विज्ञाप्य विधिपूर्वकम्
तस्याग्रे स्थण्डिलं कुर्यात्पञ्चतालप्रमाणकम् ५
अष्टद्रोणैस्तदर्धैर्वा तदर्धैस्तण्डुलैरपि
आलिख्य मध्यमे पद्ममष्टपत्रं सकर्णिकम् ६
तिलैः पुष्पैः कुशैस्तीर्य वृषबीजेन पूजयेत्

तन्मध्ये तु न्यसेत्कुम्भं वारिरत्नसमन्वितम् ७
पाद्यं पूर्वे तु संस्थाप्य यमे चाचमनीयकम्
पश्चिमे विन्यसेच्चार्घ्यं पञ्चगव्यं तथोत्तरे ८
शेषाणि शुद्धतोयेन पूर्य कुम्भानि विन्यसेत्
वस्त्रेण वेष्टयेत्सर्वान् ससूत्रान्कुशसंयुतान् ९
पूजयित्वा यथान्यायं नैवेद्यान्तं विशेषतः
स्थण्डिलं कारयेत्पश्चाद्धस्तमात्रेण शालिना १०
तन्मध्ये पद्ममालिख्य साष्टपत्रं सकर्णिकम्
तन्मध्ये विन्यसेद्धीमान्ध्वजं वै लक्षणान्वितम् ११
सप्तहस्तध्वजपटमधमं परिकीर्तितम्
अष्टहस्तपटं मध्यमुत्तमं नवहस्तकम् १२
आयाममेवमाख्यातं पञ्चभागैकविस्तृतम्
विस्तारेण समं पुच्छं पुच्छार्धं शिखरं भवेत् १३
सुस्थिरं सूक्ष्मसुश्लक्ष्णं पटं कार्पाससंभवम्
वेत्रद्वयसमायुक्तं घण्टानादविभूषितम् १४
दीपचामरछत्राढ्यं वृषभं लेखयेत्क्रमात्
श्वेतं पीतं तथा रक्तं कृष्णं श्याममयं ध्वजम् १५
वृषं श्वेतमयं ख्यातं शृङ्गौ रक्तौ प्रकीर्तितौ
रक्तवर्णाः खुराः सर्वे वालं पीतेन शोभितम् १६
अक्षिणी श्वेतकृष्णौ च कर्णौ रक्तमयौ बुधः
मध्यमे वृषमालिख्य स्थितं वा शयितं तु वा १७
किङ्किणीमालया भूष्य पद्मपीठोपरिस्थितम्
ध्वजं संप्रोक्ष्य वामेन स्थण्डिलोपरि विन्यसेत् १८
पूजयित्वा विधानेन वृषगायत्रिमन्त्रतः
ओं तीक्ष्णशृङ्गाय विद्महे वेदपादाय धीमहि १
तन्नो वृषः प्रचोदयात् २
अभ्यर्च्य लोकपालांश्च परितः स्थण्डिलोपरि १९
तस्याग्रे स्थण्डिलं कुर्याद्वालुकैर्हस्तमात्रकम्
शिवाग्निं जनयेद्धीमानग्निकार्योक्तमार्गतः २०

पञ्चब्रह्मषडङ्गैश्च वृषगायत्रिमन्त्रतः
शतमर्धं तदर्धं वा जुहुयाद्देशिकोत्तमः २१
वृषाधिवासनं प्रोक्तं ध्वजमारोपयेत्ततः २२
इति श्रीदीप्तशास्त्रे प्रतिष्ठातन्त्रे वृषाधिवासनविधिपटलः अशीतितमः

## एकाशीतितमः पटलः
### ध्वजारोहणविधिः

अतः परं प्रवक्ष्यामि ध्वजारोहणमुत्तमम्
सकुम्भं च विकुम्भं च द्विविधारोहणक्रमम् १
ध्वजमूले न्यसेत्कुम्भानष्टौ चैवाष्टदिक्षु च
मध्यमे वृषकुम्भेन युक्तमुक्तं सकुम्भकम् २
आरोप्य केवलं केतुं विकुम्भमिति कीर्तितम्
वृषाधिवासनं रात्रौ प्रभाते रोपयेद्ध्वजम् ३
पूर्वाह्णे ब्राह्मणप्रीतिं मध्याह्ने क्षत्रियस्य तु
रात्रौ तु वैश्यशूद्राणां प्रीतिं कुर्याद्विशेषतः ४
ब्राह्मणस्य ध्वजं श्वेतं रक्तं वै क्षत्रियस्य तु
पीतं स्याद्वैश्यशूद्राणां सर्वेषां श्वेतमेव च ५
ध्वजस्थानमहं वक्ष्ये शृणु वह्ने विशेषतः
पीठगोपुरयोर्मध्ये पीठाग्रे वा वृषाग्रके ६
मर्यादिमध्यमे वाथ महामर्यादिमध्यमे
ध्वजस्थानमिदं प्रोक्तं ध्वजदण्डमथ शृणु ७
चन्दनं क्रमुकं वापि खादिरं वैणवं तथा
स्थम्भको जातिबिल्वं च चम्पको देवदारुकम् ८
त्वक्सारमन्तःसारं वा दण्डं संग्राह्य देशिकः
सवक्रं ग्रन्थिसंयुक्तं कृमिकोटरं वर्जितम् ९
प्रासादस्य समं वापि अध्यर्धद्विगुणं तु वा
त्रिगुणं चतुर्गुणं वापि अल्पप्रासादरूपकम् १०
प्रासादग्रीवमानं वा वृषस्थलसमं तु वा
त्रितलद्वितलान्तं वा गोपुरग्रीवमानकम् ११

विंशद्धस्तप्रमाणं वा द्वादशं दशहस्तकम्
आयामं ध्वजदण्डस्य प्रोक्तं मात्राङ्गुलेन तु १२
सप्तत्रिंशाङ्गुलं नाहं ध्वजदण्डमथोत्तमम्
मध्यमं तु चतुर्विंशद्द्वाविंशत्कन्यसं भवेत् १३
वेणुयष्टिं ततो ग्राह्य षट्तालं पञ्चतालकम्
स्कन्धत्रयं तु दण्डाग्रे हस्तमानमथान्तरे १४
सुषिरद्वयसंयुक्तं मध्यच्छिद्रमथैकतः
अष्टषट्पञ्चमात्रं वा वेणुदण्डस्य नाहकम् १५
स्कन्धत्रयसमायुक्तं तत्संस्थं वेणुदण्डकम्
कृशाने ध्वजयष्ट्यग्रे यन्त्रमेकं निवेशयेत् १६
मध्यमे रज्जुसंयुक्तं द्विगुणं मूलमाश्रितम्
कनिष्ठाङ्गुलिपरीणाहं त्रिवृतं कारयेत्क्रमात् १७
परिचारकमाहूय प्रोक्षयेच्छिववारिणा
शुद्धवासाः पवित्री च सोत्तरीयः सुमालिकः १८
गन्धचन्दनलिप्ताङ्गो हेमाङ्गुलीयशोभितः
ग्रामप्रदक्षिणं कुर्याद् ध्वजं चैवाधिवासितम् १९
प्रधानध्वजमाश्रित्य नानाध्वजसमाकुलम्
वितानच्छत्रसंयुक्तं पिञ्छचामरसंयुतम् २०
शङ्खदुन्दुभिनिर्घोषैर्ब्रह्मघोषसमाकुलम्
नृत्तगेयसमायुक्तं मङ्गलाङ्कुरशोभितम् २१
आचार्यस्त्वग्रतो गच्छेद्यजमानस्तु पृष्ठतः
शनैः प्रदक्षिणीकृत्य ध्वजस्थानं समाश्रयेत् २२
सुमुहूर्ते सुलग्ने तु रज्जुयन्त्रेण रोपयेत्
अथवा ध्वजदण्डेन बध्वा संस्थापयेत्ततः २३
दण्डशुद्धिं पुरा कृत्वा पूजयेद्धृदयेन तु
वृषगायत्रिमन्त्रेण मूले संपूजयेद् वृषम् २४
अर्चयेन्मध्यमे स्कन्दं स्कन्दमन्त्रमनुस्मरन्
अग्रे संपूजयेद्वायुं वायुमन्त्रमुदाहरन् २५
ध्वजारोपणकाले तु नृत्तं कुर्याच्चतुर्दिशि

संग्राह्य स्थापितान्कुम्भान्वृषविद्येश्वरात्मकान् २६
पटध्वजस्य तन्मध्ये वृषबीजं विनिक्षिपेत्
वृषगायत्रिमन्त्रेण प्रोक्षयेत्कलशोदकैः २७
पूजयित्वा यथान्यायं ध्वजमारोपयेत्ततः
प्रासादाभिमुखो भूत्वा स्कन्धान्यत्र विशेषतः २८
दर्भमालासमायुक्तं पुष्पमालाभिरन्वितम्
अध्यर्धं हस्तमात्रं वा बाहुमात्रं बिलक्रमम् २९
हैमकुम्भं क्षिपेन्मध्ये यवशालिसमान्वितम्
तस्योपरि न्यसेद्दण्डं वालुकेन सुपूरितम् ३०
तस्य मूले प्रकुर्वीत वेदिकां लक्षणान्विताम्
षट्तालमुत्तमं प्रोक्तं पञ्चतालं तु मध्यमम् ३१
अधमं तु चतुस्तालं वेदिकायास्तु विस्तरम्
एभिरर्धं समुत्सेधं दर्पणोदरसंनिभम् ३२
सर्वालंकारसंयुक्तं वेदिं कुर्याद्विचक्षणः
स्थण्डिलं कारयेत्तत्र चतुर्द्रोणेन शालिना ३३
तण्डुलैस्तिलदर्भैश्च भूषयेत्तु दलं प्रति
पुण्याहं वाचयेत्तत्र पूजयित्वा यथाविधि ३४
मध्यमे वृषकुम्भं तु वृषमन्त्रेण विन्यसेत्
इन्द्रादीशानपर्यन्तं विन्यसेत्कलशान्क्रमात् ३५
सकूर्चान्सापिधानांश्च सवस्त्रान्वारिपूरितान्
लोकपालाधिदैवत्यान्पूजयित्वा यथाविधि ३६
मुद्गान्नं वृषमन्त्रेण वृषभाय निवेदयेत्
लोकपालान्समाराध्य बलिं दिक्षु विनिक्षिपेत् ३७
नृपलोकहितार्थाय तीर्थान्तं संप्रपूजयेत्
वृषयागादिकं कुर्यात्तत्तत्कर्म समारभेत् ३८
आवेष्ट्याहतवस्त्रेण ध्वजं क्षुद्रध्वजान्वितम्
सकुम्भारोहणं ह्येवं कुम्भहीनं विकुम्भकम् ३९
आचार्यं पूजयित्वा तु वस्त्रहेमाङ्गुलीयकैः
ततो जनेभ्यस्ताम्बूलं दापयेत्तु विशेषतः ४०

इति श्रीमद्दीप्तशास्त्रे प्रतिष्ठातन्त्रे ध्वजारोहणविधिपटलः
एकाशीतितमः

## द्व्यशीतितमः पटलः
## भेरीताडनविधिः

अतः परं प्रवक्ष्यामि भेरीताडनमुत्तमम्
तद्रात्रौ ताडयेद्भेरीं मन्त्रयुक्तक्रमेण तु १
मण्डपस्य तु तन्मध्ये गोमयेनोपलेपिते
स्थण्डिलं शालिभिः कुर्यात्खारित्रयसमन्वितम् २
तन्मध्ये पद्ममालिख्य साष्टपत्रं सकर्णिकम्
तण्डुलैस्तिलदर्भैश्च भूषयेत्तु दलं प्रति ३
आपो हिष्ठेति मन्त्रेण प्रोक्षयित्वा शिवाम्भसा
तस्योर्ध्वे विन्यसेद्भेरीं नववस्त्रेण वेष्टिताम् ४
दक्षिणे रुद्रमभ्यर्च्य विष्णुं वामे प्रपूजयेत्
ब्रह्माणं पूजयेन्मध्ये प्रहारे नन्दिदैवतम् ५
नन्दिमन्त्रं समुच्चार्य आवाह्य नन्दिकेश्वरम्
अर्चयित्वा यथान्यायं भेर्यास्तत्र निवेदयेत् ६
तस्याग्रे स्थण्डिलं कुर्यात्साष्टपत्रं सकर्णिकम्
सर्वदेवमयं शूलं स्थण्डिलोपरि विन्यसेत् ७
मध्यपत्रे भवेद्रुद्रो ब्रह्मा दक्षिणपत्रकः
वामपत्रे ततो विष्णुस्त्रिपत्रस्याधिदैवतम् ८
वामा ज्येष्ठा च रौद्री च शूलमूले प्रकल्पयेत्
फलका स्कन्ददैवत्यं कुम्भं तस्य च वारुणम् ९
आस्यं चैवाग्निदैवत्यं दण्डं चैव सरस्वती
पीठं तु पार्वती प्रोक्तं भूमिभागे वसुन्धरा १०
गन्धादिना समभ्यर्च्य अलंकृत्य विशेषतः
आचार्यं पूजयेत्तत्र वाद्यकं तदनन्तरम् ११
उत्सवं श्रावयेत्पश्चादाचार्यः शिष्य एव वा
अष्टादशगणांश्चैव आदित्यांश्च वसूंस्तथा १२

रुद्रांश्चैकदशांश्चैव लोकपालान्विशेषतः
आहूय सर्वदेवांश्च तीर्थान्तं श्रावयेत्ततः १३
आचार्यो वाममन्त्रं तु वलये चाभिमन्त्रयेत्
भेरीं तु ताडयेत्पश्चाद्बलितालनवक्रमात् १४
कुलोद्भवो विनीतात्मा ताडयेन्नन्दिमन्त्रतः
नन्दिने च नमस्तुभ्यं त्रिनेत्राय नमो नमः १५
चञ्चपुटेन तालेन वाद्यकर्ता सुताडयेत्
शङ्खदुन्दुभिनिर्घोषैर्गीतवाद्यसमाकुलम् १६
नानाध्वजसमायुक्तं नानाछत्रसमायुतम्
अन्नलिङ्गसमायुक्तं त्रिशूलेन समन्वितम् १७
ग्रामप्रदक्षिणं कुर्यादालयावरणान्वितम्
आलयावरणं पूर्वं दिशतालसमन्वितम् १८
महाध्वजं पूजयित्वा वृषगायत्रिमन्त्रतः
शुद्धोदनैर्गुलान्नैर्वा बलिं दत्वा ध्वजाधिपम् १९
दुर्गामातृगणेशेभ्यः स्कन्दाय च बलिं ददेत्
ज्येष्ठायै विष्णुसूर्याभ्यां बलिं दद्यात्स्वनामतः २०
ग्रामप्रदक्षिणं कृत्वा सन्धिदेवान्समर्चयेत्
ब्रह्मादीशानपर्यन्तं बलिं दद्याद्विशेषतः २१
आश्राव्य तीर्थदिवसं ब्रह्मादीशानमन्त्रतः
भेरीं च ताडयेत्तत्र सर्वालंकारसम्युताम् २२
एवं प्रदक्षिणं कृत्वा प्रविशेदालयं प्रति
तदाप्रभृति तीर्थान्तं रात्रौ ग्रामबलिं ददेत् २३
अथवान्यप्रकारेण वक्ष्यते विधिनाधुना
ग्रामाधिदेवानाहूय ध्वजमूले विशेषतः २४
तत्रैव बलिदानं तु कुर्याद्ग्रामबलिं विना
यस्मिन्ग्रामे कृते ह्येवं राजा तत्राप्नुयाज्जयम् २५
इति श्रीमद्दीप्तशास्त्रे प्रतिष्ठातन्त्रे भेरीताडनविधिपटलः द्व्यशीतितमः

## त्र्यशीतितमः पटलः

## अङ्कुरार्पणविधिः

अतः परं प्रवक्ष्यामि मङ्गलाङ्कुरमुत्तमम्
उत्सवे स्नपने चैव स्थापने प्रोक्षणे तथा १
अन्यस्मिन्मङ्गले कार्ये मङ्गलाङ्कुरमुत्तमम्
प्रथमं ध्वजाङ्कुरं प्रोक्तं द्वितीयं चोत्सवाङ्कुरम् २
तीर्थाङ्कुरं तृतीयं स्यादुत्सवस्य विधीयते
शरावं पालिका चैव घटिका च त्रिधा भवेत् ३
सौवर्णं राजतं वापि ताम्रं वा मृण्मयं तु वा
पालिकाष्टादशाङ्गुल्यमुच्चं मात्राङ्गुलेन तु ४
पालिकामुखविस्तारं षोडशाङ्गुलमुच्यते
तदर्धं पादविस्तारं तत्षड्भागैकमोष्ठकम् ५
विस्तारस्य त्रिभागैकं वर्तितं बिलमुच्यते
विस्तारस्य त्रिभागैकं दण्डविस्तारमुच्यते ६
पालिकालक्षणं प्रोक्तं घटिकालक्षणं शृणु
घटिकाघटविस्तारमष्टाङ्गुलमुदाहृतम् ७
तत्र त्रिगुणितं नाहं पञ्चवक्त्रसमन्वितम्
पालिकापादवत्कुर्याद्दण्डं वै चतुरङ्गुलम् ८
शरावमुखविस्तारं षडङ्गुलमुदाहृतम्
तदर्धं पादविस्तारमुत्सेधोऽष्टाङ्गुलो मतः ९
कालं भिन्नं च सुषिरं भेदच्छेदं च वर्जयेत्
शरावं पालिका चैव घटिका च त्रयो मताः १०
ईशो विष्णुर्विरिञ्चश्च पालिकाद्यधिदेवताः
सर्वेषु यागपूर्वेषु नवमे सप्तमेऽथवा ११
पञ्चमेऽह्नि शिवं पूज्य सर्वबीजानि वापयेत्
बीजानामधिपश्चन्द्रस्तस्माद्वै निशि निर्वपेत् १२
वास्तुप्रदक्षिणं कुर्यादुत्सवाद्यङ्कुरे क्रमात्
अन्येषां चैव सर्वेषां वर्जयेत्तु प्रदक्षिणम् १३
प्राङ्मुखोदङ्मुखो वाथ निर्व्रजेत्सह देशिकः

सर्वदेवमयं शूलमलङ्कृत्य विशेषतः १४
सोष्णीषः सोत्तरीयश्च धारयेच्छूलमुत्तमम्
तदन्ते पालिकादीनि धारयित्वा व्रजेदनु १५
सर्वालङ्कारसंयुक्तं सर्वातोद्यसमाकुलम्
नानाध्वजसमायुक्तं नानापिञ्छसमन्वितम् १६
नानाछत्रसमायुक्तं प्रतिमां तदनुव्रजेत्
एवं प्रदक्षिणं कृत्वा शुद्धस्थानं प्रवेशयेत् १७
अभ्यर्च्य भूतलं सम्यग्घृदयेन तु मन्त्रतः
शस्त्रमभ्यर्च्य विधिना गन्धपुष्पादिना बुधः १८
दर्शयेच्छूलमुद्रां च खड्गमुद्रां प्रदर्शयेत्
खानयेदस्त्रमन्त्रेण मृदं संग्राह्य वामतः १९
मृदमभ्यर्च्य विधिना प्रविशेदालयं प्रति
प्रासादस्याग्रतो वाथ दक्षिणे चोत्तरेऽथवा २०
गोमयालेपिते शुद्धे मण्डपे समलङ्कृते
स्थण्डिलं कारयेद्धीमानष्टद्रोणेन शालिना २१
तस्य मध्ये लिखेत्पद्ममष्टपत्रं सकर्णिकम्
षोडशाङ्गुलमात्रेण मध्यमे कर्णिकां लिखेत् २२
परितस्तत्समं भ्राम्य दलाष्टकसमन्वितम्
तन्मात्रं दलमानं स्याद्दलाग्रं स्यात्तथैव हि २३
स्थापयेत्कर्णिकामध्ये चन्द्रकुम्भं नवं शुभम्
सकूर्चं सपिधानं च सवस्त्रं वारिपूरितम् २४
गन्धाद्यैरर्चयित्वा तु नैवेद्यं तु प्रदापयेत्
पालिका विन्यसेदष्टौ केसरेषु विशेषतः २५
तद्बाह्ये घटिकाश्चाष्टौ दलमध्ये तु विन्यसेत्
न्यसेदग्रे शरावाणि पूर्वादिक्रमयोगतः २६
दर्भाग्रैर्वा कुशाग्रैर्वा निश्छिद्रं सुषिरे न्यसेत्
वालुकैर्गोमयैर्मृद्भिः पालिकादीनि पूरयेत् २७
पूजयित्वा यथान्यायं पुण्याहं तत्र कारयेत्
नीवारमुद्गतिलसर्षपमाषशिम्बुकुलस्थनिष्पावकसर्षपाणि

क्षीरेण संक्षाल्य हृदा बुधश्च निर्वापयेत्तान्शिवबीजमन्त्रैः २९
आचार्यो वापयेद्बीजान्प्राङ्मुखोदङ्मुखोऽथवा
चन्द्रकुम्भोदकं ग्राह्य पालिकादीनि सेचयेत् ३०
वातातपविनिर्मुक्ते मूषकादिविवर्जिते
देशे संस्थाप्य संरक्ष्य हरिद्राभ्युक्षणं कुरु ३१
यावद्विसर्जिता देवास्तावत्संपूजयेत्क्रमात्
कृष्णवर्णं भवेद्रोगं रक्तमत्र विशेषतः ३२
धूम्रवर्णं भवेत्तत्र ग्रामस्य तु भयं भवेत्
अपूर्णानि च कुब्जानि तथा तिर्यग्गतानि च ३३
अस्त्रमन्त्रं समुच्चार्य होमयेच्छतसंख्यया
एवं कृते महाशान्तिस्सर्वदोषनिकृन्तनम् ३४
इति श्रीमद्दीप्तशास्त्रे प्रतिष्ठातन्त्रे अङ्कुरार्पणविधिपटलः त्र्यशीतितमः

## चतुरशीतितमः पटलः
## अस्त्रयागविधिः

अस्त्रयागमहं वक्ष्ये शृणु वह्ने विशेषतः
वज्रादिपद्मपर्यन्तं लक्षणोक्तं समाचरेत् १
स्रुक्स्रुवौ चाष्टमङ्गल्यं तत्र कूर्मासनं क्रमात्
कारयित्वा विशेषेण प्रोक्षयेद्धृदयेन तु २
उत्सवस्याधिरात्रौ तु प्रारम्भेदधिवासनम्
शिवं संपूज्य विधिवद्विज्ञाप्योत्सवमुत्तमम् ३
शिवाग्रे स्थण्डिलं कृत्वा पद्ममष्टदलं लिखेत्
नवशक्तिसमोपेतं गन्धपुष्पादिनार्चयेत् ४
सौवर्णं राजतं ताम्रं कांस्यं वा पात्रमुत्तमम्
कर्णिकायां न्यसेत्पात्रं तण्डुलेन सुपूरितम् ५
सौवर्णमूर्णसूत्रं वा क्षौमं कार्पासकं तु वा
पात्रोपरि न्यसेद्धीमान्भस्मयुक्तं हृदा बुधः ६
पूजयित्वा यथान्यायां गन्धपुष्पादिभिः क्रमात्
उत्सवप्रतिमाश्चापि शूलमस्त्रं ध्वजं तथा ७

तत्तन्मन्त्रं समुच्चार्य कौतुकं बन्धयेत्सुधीः
पुरयाहं वाचयित्वा तु स्वस्तिसूक्तसमन्वितम् ८
पूजयित्वा हृदा मन्त्री नैवेद्यं दापयेत्क्रमात्
नित्योत्सवं ततः कुर्यादन्नलिङ्गसमन्वितम् ९
आलयावरणं पूर्वं पश्चाद्ग्रामप्रदक्षिणम्
प्रविश्य भवनं पश्चादालयं तु प्रदक्षिणम् १०
प्रविशेद्गर्भगेहं तु लिङ्गाद्देवं विसर्जयेत्
तदुपहारं चण्डाय चण्डमन्त्रेण दापयेत् ११
अपरेऽह्नि विधानेन अस्त्रयागं समाचरेत्
आचार्यः पुत्रकश्चैव समयी साधकस्तथा १२
स्नानं कृत्वा यथान्यायं विधिदृष्टेन कर्मणा
अङ्कुराण्यर्पयेद्धीमान्पूर्वोक्तविधिना सह १३
ततो यागगृहं गत्वा पदौ हस्तौ च क्षालयेत्
न्यासमार्गक्रमं कृत्वा सृष्टिस्थितिसमन्वितम् १४
प्रोक्षयेत्पञ्चगव्येन यागशालां हृदा बुधः
स्थण्डिलं कारयेद्वेद्यामष्टद्रोणेन शालिना १५
स्थण्डिलं तत्र कुर्वीत कर्णिकाकेसरान्वितम्
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि १६
गन्धादिना समभ्यर्च्य दर्भैरपि परिस्तरेत्
सुदृढान्सुस्वरान्कुम्भान् हैमान्वा राजतानपि १७
ताम्रान्वा मृण्मयान्कुम्भान्निष्कलङ्कान्सुनिर्मलान्
तन्तुना चित्रयेत्कुम्भानेकद्वित्रियवान्तरान् १८
अधिवास्याधिरात्रौ तु यागं कुर्याद्विशेषतः
वस्त्रपूतेन तोयेन पूरयेत्कलशान्बुधः १९
मध्यमे विन्यसेत्कुम्भं शिवाख्यं रत्नसंयुतम्
सकूर्चं सापिधानं च सवस्त्रं साधिदैवतम् २०
त्रिनेत्रं चतुर्भुजं देवं सर्वाभरणभूषितम्
दिव्याम्बरधरं देवं जटामकुटमण्डितम् २१
कृष्णापरशुसंयुक्तं वरदाभयहस्तकम्

एवं ध्यात्वा तु मनसा कुम्भमध्ये शिवं यजेत्  २२
वर्धनीं हेमसंयुक्तां कल्पयेदुत्तरे बुधः
द्विभुजां चारुवदनां सुस्तनां च सुयौवनाम्  २३
शान्तां किञ्चित्प्रहसितां नानाशोभलतान्विताम्
सर्वाभरणसंयुक्तां वर्धनीमध्यमे न्यसेत्  २४
अभितः कलशानष्टौ केसरेषु विनिक्षिपेत्
सकूर्चान्सापिधानांश्च सवस्त्रानस्त्रसंयुतान्  २५
गन्धतोयेन संपूर्णान्लोकपालाधिदैवतान्
वेदिकोपरि मध्ये तु शूलं संस्थाप्य पूजयेत्  २६
अस्त्राणि वज्रकादीनि पद्मबाह्ये तु निक्षिपेत्
पूर्वे तु स्थापयेद्वज्रमाग्नेय्यां शक्तिमेव च  २७
दण्डं तु दक्षिणे स्थाप्य खड्गं निर्ऋृतिगोचरे
पाशं तु पश्चिमे स्थाप्य वायव्यां चाङ्कुशं न्यसेत्  २८
गदां च सौम्यदिग्भागे शूलमीशानगोचरे
चक्रं नैऋृतिदिग्भागे पद्ममीशानगोचरे  २९
पूजयित्वा यथान्यायं गन्धपुष्पादिभिः क्रमात्
अष्टमङ्गलरूपाणि वेदिबाह्ये तु पूजयेत्  ३०
द्वारकुम्भान्समभ्यर्च्य तोरणानि प्रपूजयेत्
दिक्षु चाध्ययनं कुर्याच्चतुरो वेदपारगान्  ३१
बीजमुख्यमघोरास्त्रं हृद्बीजं तु विदिक्षु च
ततो होमं प्रकुर्वीत साधिकारः शिवद्विजः  ३२
सायंप्रातर्हुतं कुर्यात्सर्वद्रव्यसमन्वितम्
होमद्रव्यमहं वक्ष्ये शृणु वह्ने विशेषतः  ३३
समिदाज्यचरुं लाजान्सर्षपांश्च यवांस्तिलान्
वैणवं शालिमाषं च होमयेत्तु विशेषतः  ३४
शिवाग्निं जनयेत्पूर्वमग्निकार्योक्तमार्गतः
अश्वत्थोदुम्बरप्लक्षवटं पूर्वादिदिक्षु च  ३५
शमीखादिरश्रीवृक्षमायूरं च विदिक्षु च
पलाशं तु प्रधाने स्यादिध्ममेवं प्रकीर्तितम्  ३६

शतमर्धं तदर्धं वा होमयेत्तु विशेषतः
पूर्वादिषु चतुर्दिक्षु सद्यादिपुरुषान्तकम्  ३७
जुहुयात्समिधो मन्त्री विदिक्षु हृदयादिभिः
आज्यं हुत्वा विशेषेण मूलमन्त्रमनुस्मरन्  ३८
घृतं मिक्षेति मन्त्रेण होमयेत्तु घृतेन तु
अघोरेण चरुं हुत्वा देवस्य त्वेति मन्त्रतः  ३९
लाजं घोरास्त्रमन्त्रेण येषामीशेति मन्त्रतः
सर्षपान्कवचेनैव अग्न आयाहि मन्त्रतः  ४०
यवं हुत्वा तु शिखया जातवेदेति मन्त्रतः
तिलान्हृदयमन्त्रेण यत्ते यमेति मन्त्रतः  ४१
नेत्रेण वैणवं हुत्वा त्र्यम्बकेनैव मन्त्रतः
शिरसा शालिबीजानि कद्रुद्रायेति मन्त्रतः  ४२
माषं हुत्वास्त्रमन्त्रेण गौरीगायत्रिमन्त्रतः
प्रत्येकं व्याहृतिं हुत्वा शिरसा पूर्णहुतिं हुनेत्  ४३
सर्वद्रव्यसमायुक्तं हव्यवाहं समुच्चरन्
स्विष्टमग्नेति मन्त्रेण जुहुयात्तु विशेषतः  ४४
जयादिरभ्याधानं च राष्ट्रभृत्स्विष्टकृद्धुनेत्
सोपदंशं तु नैवेद्यं दापयेद्यागमूर्तिने  ४५
दापयेदस्त्रराजाय नैवेद्यं सोपदंशकम्
सायंप्रातार्बलिं दद्याद्धोमयेत्तु विशेषतः  ४६
इति श्रीदीप्तशास्त्रे प्रतिष्ठातन्त्रे अस्त्रयागविधिपटलः चतुरशीतितमः

## पञ्चाशीतितमः पटलः
## उत्सवबलिविधिः

अतः परं प्रवक्ष्यामि उतस्वस्य बलिक्रमम्
सायंप्रातर्बलिं दद्याद्ब्रह्मादीशानमन्त्रतः  १
ग्रामे ब्रह्मादिके स्थाने पीठं कृत्वा विशेषतः
हस्तमात्रप्रविस्तारमुत्सेधं स्यात्तदर्धकम्  २
मेखलात्रयसंयुक्तमेकैकं चतुरङ्गुलम्

अथवा यन्त्रपीठं वा सारदारुमयं तथा ३
आलेपनं तु कर्तव्यं पञ्चचूर्णैरलङ्कृतम्
द्रोणद्वयं वा द्रोणं वा तदर्धं तण्डुलं भवेत् ४
बलिपात्रं समादाय प्रक्षाल्यास्त्रेण मन्त्रवित्
अन्नलिङ्गं समादाय शालितण्डुलजं शुभम् ५
द्वादशाङ्गुलमुत्सेधं तन्नाहं द्विगुणं भवेत्
अग्रं च द्व्यङ्गुलं तारमानुपूर्वात्क्षयं भवेत् ६
सूत्रेण वेष्टयित्वा तु दध्ना चालिप्य सर्वतः
त्रिनेत्रं चतुर्भुजं चैव जटामकुटधारिणम् ७
वरदाभयहस्तं च वामे चैवाक्षमालधृक्
दक्षिणे शूलधृक् चैव रौद्रदृष्टिसमन्वितम् ८
नानाभरणसंयुक्तमूर्ध्वकेशमथापि वा
एतत्पाशुपतं दिव्यं लिङ्गमध्ये तु पूजयेत् ९
दशायुधसमायुक्तं त्रिशूलेन समन्वितम्
बलियात्रां प्रकुर्वीताचार्यः शिष्येन संयुतः १०
सर्वाभरणसंयुक्तो भस्मोद्धूलितविग्रहः
सोष्णीषः सोत्तरीयश्च परिचारकसंयुतः ११
प्रदक्षिणं ततः कृत्वा सर्वालङ्कारसंयुतम्
वितानध्वजपताकैश्च मयूरध्वजसंयुतम् १२
धूपदीपसमायुक्तं वृषध्वजसमन्वितम्
तालकाहलझल्लैर्यैर्मर्दलैर्जयघण्टिकैः १३
ब्रह्मघोषसमायुक्तं बलिं दद्याद्विशेषतः
प्रथमं विघ्नरात्रं तु द्वितीयं भूतरात्रकम् १४
तृतीयमृषिरात्रं स्याद्गन्धर्वाणां चतुर्थकम्
पञ्चमं चेन्द्ररात्रं स्यात्षष्ठं वै वैष्णवं भवेत् १५
सप्तमं पार्वतीरात्रमष्टमं राक्षसं तथा
नवमं शिवरात्रं स्याद्दशमं नागरात्रकम् १६
एकादशं तु पैशाचं द्वादशं ब्राह्ममुच्यते
रौद्रं त्रयोदशं रात्रं गुहरात्रं चतुर्दशम् १७

ऐशं पञ्चदशं रात्रमित्येते रात्रिदेवताः
शुद्धान्नं दधिसंमिश्रं लड्डुकापूपसंयुतम् १८
प्रथमेऽहनि दातव्यं विघ्नमन्त्रमनुस्मरन्
तिलोदनं च मुद्गान्नं माषं निष्पावकानि च १९
द्वितयेऽहनि दातव्यं भूतमन्त्रमनुस्मरन्
पञ्चमूलं कुशाग्रं च शाल्यन्नं घृतमिश्रकम् २०
कदलीफलसंयुक्तमृषीणां बलिरुच्यते
हरिद्रान्नं च सक्त्वाज्यं नालिकेरेक्षुसंयुतम् २१
तृतीयेऽहनि दातव्यमृषीणां मन्त्रमुच्चरन्
हरिद्रान्नं च ससर्पिषा नलिकेरफलैर्युतम् २२
लड्डुकापूपसंयुक्तं पिष्टकं च गुलं तिलम्
चतुर्थेऽहनि दातव्यं गान्धर्वं मन्त्रमुच्चरन् २३
हरिद्रान्नं च माषानि लड्डुकांश्च सुपूरिका
इन्द्रवल्लीघृतान्नं च दधिसंमिश्रमेव च २४
पञ्चमेऽहनि दातव्यमैन्द्रमन्त्रमनुस्मरन्
तिलपिण्डकसंयुक्तं पक्वैराम्रफलादिभिः २५
कदलीफलसंयुक्तं पनसस्य फलैर्युतम्
षष्ठे त्वहनि दातव्यं वैष्णवं मन्त्रमुच्चरन् २६
मुद्गान्नं घृतसंयुक्तं कदलीफलसंयुतम्
सप्तमेऽहनि दातव्यं पार्वतीमन्त्रमुच्चरन् २७
माषं शिम्बोदनं लाजं छागमांससमायुतम्
अष्टमेऽहनि दातव्यं राक्षसं मन्त्रमुच्चरन् २८
शुद्धान्नं दधिसंयुक्तं लाजापूपसमायुतम्
नवमेऽहनि दातव्यं शैवमन्त्रमनुस्मरन् २९
क्षीरान्नं शालिपिष्टैश्च पायसं घृतसंयुतम्
दशमेऽहनि दातव्यं नागमन्त्रमनुस्मरन् ३०
शिम्बान्नं गुलसंयुक्तं लाजं तिलसमन्वितम्
एकादशेऽहनि कर्तव्यं पैशाचं मन्त्रमुच्चरन् ३१
पद्मपुष्पं च रजनीपायसं लाजसंयुतम्

द्वादशेऽहनि दातव्यं ब्रह्ममन्त्रमनुस्मरन्  ३२
कृसरान्नं घृतसंयुक्तं लाजतिलसमायुतम्
त्रयोदशेऽहनि कर्तव्यं रौद्रमन्त्रमुदाहरन्  ३३
वेणवन्नं घृतसंयुक्तं पक्वमुद्गसमन्वितम्
चतुर्दशेऽहनि दातव्यं स्कन्दमन्त्रमनुस्मरन्  ३४
शाल्यन्नं दधिसंयुक्तं गुलखण्डसमन्वितम्
दशपञ्चाधिके चाह्नि प्रक्षिपेदैशमन्त्रतः  ३५
कुक्कुटाण्डप्रकारेण बलिरेकत्र कीर्तितः
सर्वेषामपि शुद्धान्नमाज्ययुक्तं दधिप्लुतम्  ३६
दापयेत्तु विशेषेण तत्तन्मन्त्रेण देशिकः
गोस्थाने चण्डरुद्राय वाप्यां कुम्भोदराय च  ३७
कूपे वै शङ्कुकर्णाय स्वनामाद्यैर्बलिं ददेत्
नदीषु दद्याद्गङ्गायै क्षेत्रे वै क्षेत्रमूर्तिने  ३८
सभास्थाने सरस्वत्यै दुर्गायै दुर्गधामके
गोपुरे भीमरुद्राय आर्यायै धामके ददेत्  ३९
एवमेव बलिं दद्यात्सर्वप्राणिसुखावहम्
प्रणवादिचतुर्थ्यन्तं स्वनामपदपूर्वकम्  ४०
स्वाहान्तं बलिनिर्देशं सर्वेभ्य इति योजयेत्
एवं बलिक्रमं कृत्वा बलिपीठे बलिं क्षिपेत्  ४१
अन्नलिङ्गं विसृज्याथ प्रविशेद्यागमण्डपम्
बलिक्रममिदं प्रोक्तं ततो यानक्रमं शृणु  ४२

इति श्रीदीप्तशास्त्रे प्रतिष्ठातन्त्रे बलिविधिपटलः पञ्चाशीतितमः

## षडशीतितमः पटलः

### यात्राविधिः

अतः परं प्रवक्ष्यामि यानं कुर्यात्प्रदक्षिणम्
उत्सवारम्भकाले तु रथादीन्कारयेत्क्रमात्  १
यन्त्रडोलं रथान् रम्यान्यन्त्ररङ्गं तथैव च
अश्वयन्त्रान्हस्तियन्त्रान् सिंहयन्त्रांस्तथैव च  २

यन्त्रदेवालयांश्चैव यन्त्रमण्डपकानपि
यन्त्रशालासभाश्चैव यन्त्रहर्म्यं तथैव च ३
भूतयन्त्रानृषीयन्त्रान् दीपयन्त्रांस्तथैव च
कृत्वा मनोरमं सर्वं नानावर्णैर्विचित्रयेत् ४
देवालयस्य पुरतः प्रपां कृत्वा मनोरमाम्
नानावितानसंयुक्तां नानाध्वजसमाकुलम् ५
चित्रवस्त्रेण सम्बद्ध्वा नानागात्रस्मन्विताम्
नानाछत्रसमायुक्तं पिञ्छचामरसंयुतम् ६
सौवर्णरत्नदामैश्च मुक्तादामैरलङ्कृताम्
ग्रामादीन्विधान्शोध्य निम्नोन्नतविवर्जितम् ७
वालुकास्तरणं कुर्याद्वीथयश्चोपवीथयः
द्वारकुम्भैर्ध्वजैश्चित्रैः क्रमुकैर्नालिकेरकैः ८
दीपमालैः फलैः पुष्पैः भवनं प्रति भूषयेत्
कौतुकैर्बलिदानान्ते कुर्याद्ग्रामप्रदक्षिणम् ९
सर्वाभरणसंयुक्तैर्मकुटैरुपशोभितैः
नानापुष्पसमायुक्तैर्नानागन्धानुलेपनैः १०
नानाहेतिसमायुक्ता व्रजेयुश्चाग्रतो भटाः
तदन्ते तु रथारूढास्तदन्ते गजवाहनाः ११
यन्त्ररङ्गास्तदन्ते तु रुद्रस्त्रीपरिभूषिताः
तुरगमण्डपं यन्त्रं च हस्तिसिंहस्तदन्तरे १२
यन्त्रदेवालयं पश्चान्नृत्तगेयसमाकुलम्
सुखासनं तु प्रथमं वैवाह्यं स्याद्द्वितीयकम् १३
किरातरूपं गौणं स्याद्वृषारूढं चतुर्थकम्
पञ्चमं त्रिपुरारिं स्यान्नृत्तरूपं तु षष्टकम् १४
सप्तमं चन्द्रधारी च अष्टमं चार्धनारिका
नवमं तु हरेरर्धं चण्डेशानुग्रहं परम् १५
कामार्येकादशं प्रोक्तं द्वादशं कालनाशनम्
त्रयोदशं दक्षिणामूर्तिं भिक्षाटनमतः परम् १६
मुखलिङ्गं पञ्चदशं लिङ्गोत्पत्तिस्तु षोडशम्

षोडशप्रतिमा ह्येताः सर्वालङ्कारसंयुताः १७
व्रजेयुश्च क्रमेणैव रङ्गेण शिबिकेन वा
नानाघोषसमायुक्तं नृत्तगेयसमाकुलम् १८
पाशुपतास्तदन्ते तु महाव्रतधरा अपि
महाशैवास्तदन्ते तु तदन्ते ब्राह्मणाः क्रमात् १९
तदन्ते रुद्रगणिकाः सर्वालङ्कारसंयुताः
तदन्ते गायकाः प्रोक्ता तदन्ते नर्तकास्तथा २०
ईश्वरः शक्तिसहितोऽनन्तो गच्छेच्छनैः क्रमात्
योषित्परिवृतो भूत्वा सर्वलक्षणसंयुतः २१
त्रिशूलदीपिकाभिश्च यन्त्रदीपैर्विभूषितः
हस्तदीपैर्यष्टिदीपैः सर्वत्र परिशोभितः २२
नानापिञ्छैर्ध्वजैश्छत्रैर्नानाचामरसंयुतः
वितानैश्च मनोरम्यैः पताकैरुपशोभितः २३
तदन्ते घोषयेत्सम्यक्सर्वातोद्यक्रमेण तु
सर्वेषां पृष्ठतो गच्छेद्देवश्चण्डेश्वरः प्रभुः २४
अनुव्रजेयुर्भक्ताश्च सर्ववर्णसमुद्भवाः
ये देवमनुगच्छन्ति भक्तियुक्ता महाजनाः २५
पदे पदेऽश्वमेधस्य प्राप्नुयन्ति फलं नराः
सम्पदश्चानुरूपेण यात्रां कुर्यात्सुशोभनाम् २६
एवं प्रदक्षिणं कुर्यात्प्रविशेदालयं प्रति
प्रपां गत्वा स्थितो देवः सर्वदेवगणैः सह २७
इति श्रीदीप्तशास्त्रे प्रतिष्ठातन्त्रे उत्सवयात्राविधिपटलः षडशीतितमः

सप्ताशीतितमः पटलः
उत्सवपरिवेष्टनविधिः

अतः परं प्रवक्ष्यामि परिवेषक्रमं क्रमात्
प्रपामध्ये स्थितो देवो देव्या सिंहासनोपरि १
देवस्य दक्षिणे भागे देशिकः सुखमास्थितः
देवस्योत्तरभागे तु नृपतिः सुखमास्थितः २

तयोः पृष्ठप्रदेशे तु परितश्चानुगाः स्थिताः
मृदङ्गादिमहाशब्दाः पूर्वायां दिशि संस्थिताः ३
नर्तको मर्दलश्चैव दक्षिणे तु व्यवस्थिताः
गायका वंशकाश्चैव उत्तरे तु व्यवस्थिताः ४
उभयोः पार्श्वयोश्चैव रुद्रस्य गणिकाः स्थिताः
तद्बाह्ये दक्षिणे शैवा दण्डमात्रे समास्थिताः ५
उत्तरे दण्डमात्रे तु कापाला व्रतधारकाः
देवस्याग्रे विशेषेण नृत्तं कुर्यात्सगेयकम् ६

इति श्रीदीप्तशास्त्रे प्रतिष्ठातन्त्रे उत्सवपरिवेष्टनविधिपटलः सप्ताशीतितमः

## अष्टाशीतितमः पटलः
## नीराजनविधिः

अतः परं प्रवक्ष्यामि नीराजनविधिक्रमम्
सौवर्णं राजतं ताम्रं कांस्यं वा पात्रमुच्यते १
विंशत्यङ्गुलविस्तारमोष्ठमेकाङ्गुलं भवेत्
एकाङ्गुलविवृद्ध्या तु मध्यमं चोत्तमं कुरु २
पञ्चपात्राणि संग्राह्य मण्डलोपरि विन्यसेत्
गन्धपुष्पं तथार्घ्यं च भस्म दीपं च निक्षिपेत् ३
पूजयेदग्निबीजेन शूलमुद्रां प्रदर्शयेत्
वहित्वा रुद्रनारीभिर्ब्राह्मणैर्वा विशेषतः ४
शङ्खभेर्यादिनादैश्च काहलैर्मर्दलैः सह
आलयं तु परिभ्राम्य चास्थानं प्रविशेत्ततः ५
देवस्याग्रे विनिक्षिप्य पूजयेद्देशिकोत्तमः
जयशब्दैः स्वस्तिसूक्तैस्तथा मङ्गलवाचकैः ६
नीराजनं प्रकर्तव्यं देवदेवाय शूलिने
पाद्यं दद्याद्धृदा मन्त्री दद्यादाचमनं तथा ७
अर्घ्यं शिरसि विन्यस्य गन्धं सद्येन दापयेत्
पुष्पं पुरुषेण दातव्यं धूपं तु शिखया ददेत् ८

दीपं नेत्रेण दातव्यं पुनराचमनं ददेत्
पिष्टेषु विन्यसेद्दीपं द्वादशाङ्गुलदैर्घ्यकम्  ९
पात्रेण दीपमादाय देवस्य शिरसोपरि
परिभ्राम्य त्रिधा मन्त्री शिरोमन्त्रमनुस्मरन्  १०
तदन्ते दापयेद्भस्म शिवमन्त्रमनुस्मरन्
दर्पणं दर्शयेत्पश्चात्प्रणम्य विधिपूर्वकम्  ११
ताम्बूलं दापयेत्तत्र पञ्चगन्धसमन्वितम्
गणिकाभिर्वहित्वा तु वाद्यध्वनिसमायुतम्  १२
पीठाग्रे वाथ निक्षिप्य जले वापि विनिक्षिपेत्
पादप्रक्षालनं कृत्वा प्रविशेदालयं प्रति  १३
इति श्रीदीप्तशास्त्रे प्रतिष्ठातन्त्रे नीराजनविधिपटलः अष्टाशीतितमः

## एकोननवतितमः पटलः
### कौतुकबन्धनविधिः

अतः परं प्रवक्ष्यामि शृणु कौतुकबन्धनम्
पूर्वेद्युस्तीर्थदिवसान्मृगयात्रां समारभेत्  १
नृपाणां मृगयात्रा तु युद्धारम्भं प्रभावयेत्
केचिदश्वसमारूढाः केचित्कुञ्जरवाहनाः  २
धनुर्धरास्तथा केचित्केचित्खड्गधराः परे
केचित्पाशधरास्तत्र महाजालधराः परे  ३
केचिद्युद्धे महावीराः केचिद्भीतास्तथैव च
एवं कृत्वा दिवाकाले रात्रौ कौतुकबन्धनम्  ४
हैमैर्वा राजतैर्वापि क्षौमं कार्पासमेव वा
रक्षाबन्धं हृदा कृत्वा शूलयागेशमूर्तिनम्  ५
कौतुकं ध्वजमस्त्राणि बन्धयेद्धृदयेन तु
आलयस्याग्रतः कुर्याद्गोमयालेपनं क्रमात्  ६
स्थण्डिलं कारयेत्तत्र शालिभिश्चतुरङ्गुलम्
तण्डुलैः पूरयेत्पात्रं तन्मध्ये कौतुकं न्यसेत्  ७
शिवगायत्रिमन्त्रेण गन्धपुष्पादिनार्चयेत्

गायकैर्वाद्यकैश्चैव नर्तकैर्गणिकैः सह ८
सर्वलाङ्कारसंयुतं कुर्याद्ग्रामप्रदक्षिणम्
आलयं वा परिभ्राम्य दीपैश्च बहुभिः सह ९
आस्थानमण्डपं गत्वा रक्षासूत्रं तु बन्धयेत्
शूलस्य मध्यपात्रे तु बन्धयेदस्त्रमन्त्रतः १०
यागेशं च ध्वजं चास्त्रं बन्धयेत्स्वस्वमन्त्रतः
भस्म दत्त्वा हृदा मन्त्री यजमानाय दापयेत् ११
इति श्रीदीप्तशास्त्रे प्रतिष्ठातन्त्रे कौतुकबन्धनविधिपटलः
एकोननवतितमः

## नवतितमः पटलः
## उत्सवतीर्थाधिवासविधिः

अतः परं प्रवक्ष्यामि तीर्थसंग्रहणं परम्
मण्डपं मार्जयित्वा तु गोमयालेपनं कुरु १
मण्डपं मण्डयेद्धीमान्पूर्वोक्तविधिना सह
स्थण्डिलं कारयित्वा तु शालिभिर्विमलैस्तथा २
तण्डुलैः शोभितं कृत्वा तिलदर्भैः परिस्तरेत्
मध्यमे तु न्यसेत्कुम्भं शूलं तत्रैव विन्यसेत् ३
स्थापयेत्पाद्यं पूर्वे तु याम्ये चाचमनीयकम्
अर्घ्यं वरुणदिग्भागे पञ्चगव्यं तदुत्तरे ४
आग्नेय्यां पुष्पतोयं स्यान्नैर्ऋत्यां तु कुशोदकम्
वायव्यां गन्धतोयं स्यादैशान्यां मन्त्रतोयकम् ५
स्थापयेत्कलशान् सम्यग्विद्येश्वरशिवात्मकान्
सवस्त्रान् सापिधानांश्च सकूर्चान् हेमसंयुतान् ६
पूजयित्वा यथान्यायं नैवेद्यं तु प्रदापयेत्
शिरसा वाहयित्वा तु कलशं शूलसंयुतम् ७
ग्रामप्रदक्षिणं कृत्वा सर्वातोद्यसमायुतम्
धूपदीपसमायुक्तं तीर्थस्थानं प्रवेशयेत् ८
नद्यां वापि तटाके वा ह्रदे वाप्यामथापि वा

तीरे समतले सम्यक्प्रपां कृत्वा विशेषतः ९
स्थण्डिलद्वितयं कुर्याच्छालिभिर्विमलैस्तथा
कलशस्थापनस्यैकं शूलस्यैकं विधीयते १०
स्थापयित्वा विशेषेण पूजयित्वा यथाविधि
पुण्याहं तत्र कुर्वीत स्वस्तिमङ्गलवाचकैः ११
आहूय सर्वदेवांश्च गन्धाद्यैरर्चयेत्क्रमात्
दिग्बन्धं च ततः कुर्यात्तत्तत्स्थानेऽस्त्रमन्त्रतः १२
साधितैः कलशैस्तत्र शूलं वै स्नापयेत्ततः
तदन्ते तीर्थमारभ्य वारिमध्ये विशेषतः १३
पूजयित्वा यथान्यायं प्रविशेदालयं प्रति १४
इति श्रीदीप्तशास्त्रे प्रतिष्ठातन्त्रे उत्सवतीर्थाधिवासनविधिपटलः नवतितमः

## एकनवतितमः पटलः
### चूर्णोत्सवविधिः

अतः परं प्रवक्ष्यामि चूर्णोत्सवविधिक्रमम्
तीर्थसंग्रहणस्यान्ते प्रभाते समये बुधः १
पूर्वोक्तबलिदानं च प्रदक्षिणमथाचरेत्
पश्चाच्चूर्णोत्सवं कुर्याद्विधिदृष्टेन कर्मणा २
प्रासादस्याग्रतो वापि कौतुकस्याग्रतोऽपि वा
याम्ये वा पावके वाथ गोमयालेपनं कुरु ३
स्थण्डिलं कारयेत्तत्र शालिभिर्विमलैस्तथा
अष्टद्रोणैस्तदर्धैर्वा तदर्धैस्तण्डुलैरपि ४
तन्मध्ये पद्ममालिख्य साष्टपत्रं सकर्णिकम्
तस्याग्रे स्थण्डिलं कुर्यात्पूर्वोक्तविधिना सह ५
शूलं तत्रैव संस्थाप्य अघोरेणासनोपरि
तस्याग्रे स्थण्डिले स्थाप्य लूखलं वस्त्रवेष्टितम् ६
दूर्वया सहदेव्या च बन्धयेल्लूखलं हृदा
यत इन्द्रेति मन्त्रेण पवमानसमन्वितम् ७

लूखलं मुसलं चैव प्रोक्षयेत्तु शिवाम्भसा
गन्धाद्यैरर्चयेन्मन्त्री लूखलं मुसलं ततः ८
शूलस्य दक्षिणे भागे उत्तराभिमुखो गुरुः
गन्धादिभिरथाभ्यर्च्य तत्तन्मन्त्रैः समाहितः ९
घृतं शिरोऽर्पणं कुर्याद्धेमदूर्वाङ्कुराक्षतैः
लूखलस्य तु तन्मध्ये रजनीं निक्षिपेद्धृदा १०
सुशुष्कां रजनीं शुद्धां द्रोणं द्रोणार्धमेव वा
व्योमव्यापिनमुच्चार्य चूर्णयेद्देशिकोत्तमः ११
ततो भक्तजनैः सार्धं चूर्णयेद्गणिकागणैः
ततः शूर्पेण संप्रोट्य गणिकाभिर्विशेषतः १२
चूर्णमादाय तु हृदा मूललिङ्गं नयेद्गुरुः
चूर्णैः संस्नापयेद्देवमाचार्यः शिवमन्त्रतः १३
आस्थानमण्डपं प्राप्य कौतुकाय निवेदयेत्
हस्तयन्त्रोद्भवं तैलं कौतुके शिरसि न्यसेत् १४
चूर्णेन स्नापयेत्पश्चादुत्सवप्रतिमादयः
शूलस्य दापयेच्चूर्णमाचार्योऽस्त्रं समुच्चरन् १५
चूर्णमादाय तु हृदा यजमानाय दापयेत्
दद्याच्चूर्णं तु भक्तेभ्यः पर्यष्टिपरिचारकैः १६
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः
तच्चूर्णं शूलसंयुक्तं सर्वातोद्यसमन्वितम् १७
ग्रामप्रदक्षिणं कुर्याद्दद्याद्ग्रामजनस्य च
दद्याद्वै वास्तुदेवेभ्यो ग्रामादीनां प्रवृद्धये १८
प्रविश्य भवनं पश्चात्तीर्थस्नानं समाचरेत् १९

इति श्रीदीप्तशास्त्रे प्रतिष्ठातन्त्रे चूर्णोत्सवविधिपटलः एकनवतितमः

## द्विनवतितमः पटलः
## उत्सवतीर्थकर्मविधिः

अतः परं प्रवक्ष्यामि तीर्थकर्मविधिक्रमम्
प्रासादस्याग्रतः कुर्यात्स्थण्डिलं शालिकामयम् १

तराडुलैः शोभितं कुर्यात्तिलदर्भैः परिस्तरेत्
नवकुम्भान्समादाय सूत्रेण परिवेष्टयेत् २
पूरयेद्गन्धतोयेन वस्त्रकूर्चसमन्वितान्
स्थापयित्वा विशेषेण विद्येश्वरशिवात्मकान् ३
पूजयित्वा यथान्यायं स्वस्वनाम्ना यथाविधि
संग्राह्य कलशांश्चैव चास्त्राणि चाष्टमङ्गलैः ४
गन्धादिकं ततो ग्राह्य धूपदीपसमायुतम्
ततः शङ्खनिनादैश्च गीतनृत्तसमाकुलम् ५
वितानछत्रसंयुक्तं पिञ्छचामरसंयुतम्
स्वस्तिमङ्गलवाचैश्च ब्रह्मघोषसमायुतम् ६
ग्रामप्रदक्षिणं कृत्वा शूलेन सह कौतुकम्
गच्छेद्भक्तजनैः सार्धं ततस्तीर्थं तु देशिकः ७
समुद्रे वाथ नद्यां वा तटाके वा ह्रदेऽपि वा
तीरे समतले सम्यक्प्रपां कृत्वातिसुन्दराम् ८
तन्मध्ये विन्यसेद्देवं परिवेषक्रमान्वितम्
तस्याग्रे स्थरिडलं कुर्याद्द्विधा वै वालुकामयम् ९
शालिभिस्तराडुलैश्चैव तिलदर्भैः परिस्तरेत्
पश्चिमे स्थरिडले स्थाप्य शूलं वै समलङ्कृतम् १०
तस्याग्रे स्थरिडलं स्थाप्य कलशान्नवसङ्ख्यया
अर्चयेद्गन्धपुष्पाद्यैः शूलं वै कलशांस्ततः ११
गणानाहूय देवांश्च लोकपालांस्तथैव च
गङ्गां च यमुनां चैव नर्मदां च सरस्वतीम् १२
सिन्धुं गोदवरीं चैव कावेरीं च विशेषतः
आवाह्य मध्यमे चैव कलशे देशिकोत्तमः १३
विसृज्य कौतुकं सूत्रं शूलं वै स्नापयेत्ततः
जलक्रीडां प्रकुर्वीत ततो भक्तजनैः सह १४
त्रिशूलेन सहैवात्र तीर्थं कुर्वन्ति ये नराः
मुच्यन्ते सर्वपापेभ्यो रुद्रलोकं प्रयान्ति च १५
पूजयित्वा यथान्यायं गन्धपुष्पादिभिः क्रमात्

ततो देवगृहं गत्वा स्वस्तिमङ्गलवाचकैः १६
यागस्थानं नयेत्पश्चाच्छिरसा पूर्णाहुतिं हुनेत्
अन्ते स्विष्टाहुतिं हुत्वा शिवाग्निं च विसर्जयेत् १७
यागेशं पूजयेत्पश्चाद्गन्धपुष्पादिना बुधः
साधितैर्वेदिकामध्ये कलशैः स्नापयेच्छिवम् १८
स्नपनं कारयेत्तत्र पूर्वोक्तविधिना सह
विशेषपूजनं कृत्वा शूलं वै कौतुकं तथा १९
दिनेष्वेतेषु सर्वेषु सर्वेषां च विभावसः
दीपकैश्च हविर्भिश्च द्विगुणं त्रिगुणं तु वा २०
विशेषपूजनं कुर्याद्विभवस्यानुरूपतः २१
इति श्रीदीप्तशास्त्रे प्रतिष्ठातन्त्रे उत्सवतीर्थविधिपटलः द्विनवतितमः

## त्रिनवतितमः पटलः
## ध्वजावरोहणविधिः

अतः परं प्रवक्ष्यामि ध्वजानामवरोहणम्
कृत्वा तीर्थं दिवाकाले रात्रौ ध्वजविसर्जनम् १
त्रिरात्रे पञ्चरात्रे वा सप्तरात्रेऽथवा पुनः
अवरोहणं प्रकर्तव्यं चण्डयागसमन्वितम् २
चण्डः प्रचण्डो विक्रान्तश्चण्डेशश्च चतुर्विधः
महाबलो महाप्राज्ञो रुद्रो रुद्रसमप्रभः ३
युगे युगे क्रमाद्ब्रह्मे चण्डत्वं प्रापितास्तु मे
तस्मादीशप्रियार्थाय चण्डपूजां समाचरेत् ४
चण्डस्याभिमुखे कुर्यात्स्थण्डिलं शालिकामयम्
कलशान्नव संस्थाप्य स्नापयेच्चण्डमूर्तिनम् ५
नैवेद्यं दापयेत्तस्मात्ताम्बूलं दापयेत्ततः
ध्वजाग्रे स्थण्डिलं कुर्याच्छालिभिश्चतुरङ्गुलम् ६
तण्डुलैः शोभितं कृत्वा तिलदर्भैः परिस्तरेत्
प्रोक्षयेत्पुरुषेणैव कलशान्साधयेन्नव ७
सकूर्चान्सापिधानांश्च सवस्त्रान्वारिपूरितान्

लोकपालाधिदैवत्यान्तन्मध्ये वृषदैवतान् ८
पूजयित्वा यथान्यायं कलशांश्च ध्वजं तथा
वृषभं पूजयित्वा तु नैवेद्यान्तं विचक्षणः ९
ध्वजमूले स्थितान्कुम्भान्शिवश्चेतो विसर्जयेत्
नृत्तगेयसमायुक्तं सर्वातोद्यसमन्वितम् १०
स्नपनं कारयेत्केतुं वृषगायत्रिमन्त्रतः
मुद्गान्नं दापयेत्पश्चाद् वृषबीजमनुस्मरन् ११
दिग्बलिं च ततः कृत्वा दिग्देवांश्च विसर्जयेत्
सर्वाभरणसंपूर्णं ब्रह्मचारिव्रते स्थितम् १२
चण्डेशं साधयेद्धीमानर्चयेच्चण्डमन्त्रतः
अवरोहणं च तेनैव वृषं तत्स्थं विसर्जयेत् १३
अस्त्रेणैव तु मन्त्रेण ध्वजवेदीं विसर्जयेत्
हरिद्रं दधिसंयुक्तं सोपदंशं बलिं ददेत् १४
प्रदक्षिणं ततः कृत्वा ग्रामं शूलसमन्वितम्
सन्धिदेवान्समभ्यर्च्य बलिं दद्यात्स्वनामतः १५
विसर्जनं ततः कुर्याद् ब्रह्मादीन्परितः स्थितान्
प्रविश्य भवनं पश्चाद्बलिपीठे बलिं क्षिपेत् १६
पादप्रक्षालनं कृत्वा गर्भगेहं प्रवेशयेत्
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः १७
भक्तानां परिचाराणां वस्त्रादीनि प्रदापयेत्
एवं यः कुरुते मर्त्यः उत्सवं विधिपूर्वकम् १८
कुलैकविंशत्युत्तार्य रुद्रलोके महीयते १९
इति श्रीदीप्तशास्त्रे प्रतिष्ठातन्त्रे ध्वजावरोहणविधिपटलः त्रिनवतितमः

## चतुर्नवतितमः पटलः
## करणाधिकारविधिः

अतः परं प्रवक्ष्यामि करणानां तु लक्षणम्
ऋते योगोपकरणं कार्यं कर्तुमसम्भवम् १
तस्मात्सर्वप्रयत्नेन कर्तव्यं कारणं तथा

कुण्डानां लक्षणं चैव अरण्याः स्रुक्स्रुवस्य च २
आज्यस्थाल्याः प्रणीतायाः प्रोक्षणीपात्रलक्षणम्
दर्भाणां विष्टराणां च कूर्चानां चैव लक्षणम् ३
पवित्रपरिस्तराणां दर्भमालाप्रमाणकम्
प्रोक्षण्याः समिधश्चैव परिधीनां तु लक्षणम् ४
हविःपात्रविधानं च चरुपात्रस्य लक्षणम्
पाद्यस्याचमनीयार्घ्यपात्राणां लक्षणं तथा ५
गन्धपात्रस्य पुष्पस्य पात्रयोर्धूपदीपयोः
दीपमालाप्रमाणं च धूपघण्टां च लक्षणम् ६
महाघण्टालक्षणं च पाद्यमाचमनार्घ्यकम्
गन्धद्रव्यप्रमाणं च पुष्पाणां चैव लक्षणम् ७
धूपस्य लक्षणं चैव दीपस्य तु विशेषतः
शिवकुम्भस्य वर्धन्याः कलशानां च लक्षणम् ८
शरावस्य पदानां च लक्षणं सविशेषतः
कूर्मासनस्य खट्वायाः शिवज्ञानासनस्य तु ९
रथरङ्गशिबिकानां तु तथा सिंहासनस्य तु
पर्यङ्कस्योपधानानां वस्त्राणां चैव लक्षणम् १०
उष्णीषस्योत्तरीयस्य प्रच्छन्नपटलक्षणम्
आहुतीनां प्रमाणं च तत्तत्स्नानोदकस्य च ११
जलद्रोणीजलावार्त्कुण्डिकानां च लक्षणम्
पिधानछत्रपिच्छानां चामराणां विशेषतः १२
मयूरव्यजनानां च तरङ्गाणां तु वेष्टितम्
ध्वजानां लक्षणं चैव लोकपालास्त्रलक्षणम् १३
स्थलिकानां त्रिपादीनां दर्वीणां चैव लक्षणम्
दर्पणं पादुकस्यैव बलिदानस्य लक्षणम् १४
सन्ध्याया लक्षणं चैव नमस्कारविधिस्ततः
मञ्जूषालक्षणं चैव गोलकायास्तु लक्षणम् १५
स्वर्णपुष्पस्य पट्टानां मकुटानां च लक्षणम्
यन्त्रिकाक्षुरभेरीणां यज्ञोपवीतलक्षणम् १६

एषां हि लक्षणं वक्ष्ये शृणु वह्ने विशेषतः
पूर्वसूत्रं न्यसेत्पूर्वं यावत्कुण्डस्य विस्तृतम् १७
तन्मानेन न्यसेद्धीमान्मध्यादौ दक्षिणोत्तरम्
यमसूत्रं न्यसेत्पश्चात्पुच्छमध्ये विशेषतः १८
चतुरश्रं पुनः कृत्वा चतुष्कोणसमन्वितम्
सर्वेषामपि कुण्डानां योनिः स्याच्चतुरश्रकम् १९
चतुरश्रीकृते क्षेत्रे कुर्यात्कुण्डानि लक्षणैः
क्षेत्रं षोडशधा कृत्वा समकोष्ठं यथा कुरु २०
तत्कर्णार्धं चतुष्कात्तु क्षेत्रार्धं भ्रामयेद्बुधः
क्षेत्रार्धं भ्राम्य तद्वद्वै ह्यन्यं वै देशिकोत्तमः २१
तत्कर्णार्धात्परिग्राह्य क्षेत्रमध्यात्क्षिपेत्तथा
उभयोः सङ्गमं कुर्याद्योन्याकारमजीजनत् २२
कर्णार्धं सुपरिग्राह्य क्षेत्रार्धे तु क्षिपेत्ततः
अधिकं तु द्विधा कृत्वा पूर्वपश्चिमदेशतः २३
एकैकांशं न्यसेद्धीमान् क्षेत्रस्याभ्यन्तरे स्थितः
तन्मानेन भ्रमेद्विद्वानर्धचन्द्राकृतिर्भवेत् २४
क्षेत्रार्धं तु त्रिधा कृत्वा पार्श्वयोरुभयोरपि
एकैकांशं न्यसेत्तत्र मानसूत्रस्य बाह्यतः २५
मानसूत्रं न्यसेद्बाह्ये एकांशं पूर्वतो दिशि
तत्सङ्गमात्त्रयं सूत्रं पातयेद्देशिकोत्तमः २६
तत्कर्णार्धं परिग्राह्य क्षेत्रार्धे तु क्षिपेद्बुधः
अधिकं तु द्विधा कृत्वा एकांशं बाह्यतो न्यसेत् २७
वर्तयेत्तेन मानेन वर्तुलं कुण्डमुच्यते
षड्भागाभिर्भजेत्क्षेत्रमेकभागं बहिर्न्यसेत् २८
वर्तयेद्वर्तुलं तेन पञ्चाश्रस्य विशेषतः
वृत्तविष्कम्भमादाय विभजेद्द्वादशांशकम् २९
सप्तांशेन भुजां कुर्याज्जायते पञ्चकोणकम्
गृहीत्वा क्षेत्रविस्तारं वसुभागेन भाजयेत् ३०
एकैकांशं न्यसेद्दिक्षु चतुर्ष्वपि यथाक्रमम्

तेन मानेन सूत्रार्धं मध्यं कृत्वा विशेषतः ३१
तन्मध्यमाच्चतुष्पत्रं वर्तयेत्तु चतुर्दिशि
चतुष्पत्रमिदं प्रोक्तमष्टपत्रमथ शृणु ३२
अष्टभागमिदं क्षेत्रमेकांशं दिक्षु निक्षिपेत्
क्षेत्रार्धं तेन संग्राह्य मध्यात्कर्णौ तु लक्षयेत् ३३
कर्णान्तादीनि सूत्राणि मध्यं कृत्वा विशेषतः
तन्मध्यमात्समारभ्य वर्तयेदष्टपत्रकम् ३४
आदित्यांशं कृतं क्षेत्रमेकांशार्धं विशेषतः
दिक्षु चाभ्यन्तरे न्यस्त्वा वर्तयेच्चतुरश्रकम् ३५
तत्कर्णार्धं परिग्राह्य मध्यमं दिक्षु निक्षिपेत्
तेन मानेन चाष्टाश्रं वर्तयेल्लक्षणान्वितम् ३६
विकारांशीकृते क्षेत्रे पार्श्वयोरुभयोरपि
एकैकांशं न्यसेद्धीमान्पूर्वपश्चिमदेशतः ३७
मध्यात्कर्णं समादाय क्षेत्रार्धे तु विनिक्षिपेत्
अधिकं तु त्रिधा भज्य द्विभागं दक्षिणे न्यसेत् ३८
तन्मानं चोत्तरे न्यस्त्वा मानसूत्रस्य बाह्यतः
षडश्रं वर्तयेत्पश्चात्तेन मानेन देशिकः ३९
सप्तभागकृतं क्षेत्रमेकभागं बहिर्न्यसेत्
वर्तयेद्वर्तुलं तेन पुनः कुर्याद्भुजानि वै ४०
क्षेत्रं षोडशभागैकं क्षेत्रार्धे तु सुयोजयेत्
जनयेत्तेन मानेन सप्ताश्रमिह चानल ४१
कुण्डस्य यादृशं रूपं मेखला चैव तादृशम्
नाभियोनिः प्रकर्तव्याः पूर्वोक्तविधिना सह ४२
तथा कुण्डानि सर्वाणि कुर्यान्मानाङ्गुलेन तु
आचार्यदक्षिणे हस्ते यत्पर्वे मध्यमाङ्गुलम् ४३
मध्यपर्वे विशेषेण मात्राङ्गुलमिति स्मृतम्
अन्यमानं न कर्तव्यं कर्तव्यं चेत्तु निष्फलम् ४४
योनौ योनिर्न कर्तव्या कृता चेत्सा तु निष्फला
पद्मे नाभिर्न कर्तव्यः कुर्यादेवं विभावसो ४५

कुण्डानां लक्षणं प्रोक्तमरण्या लक्षणं शृणु
शमीपिप्पलगर्भोत्थामरणीं कल्पयेद्दृढाम्  ४६
अष्टाङ्गुलसुविस्तीर्णां षोडशाङ्गुलदैर्घ्यकाम्
षडङ्गुलसमुत्सेधामायताश्रसमन्विताम्  ४७
प्रमन्थं षडङ्गुलं नाहं दैर्घ्यं गायत्रियङ्गुलम्
आयसेन तु सन्नद्धं कीलं स्यादायसेन तु  ४८
मूले कीलं षडङ्गुल्यं दारुणा परिकल्पयेत्
छत्रस्याष्टाङ्गुलं तारं तस्यार्धं तीव्रमुच्यते  ४९
उभयोः पार्श्वयोश्चैव द्विमुष्ट्याष्टाङ्गुलं भवेत्
षडङ्गुलपरीणाहं सर्वत्रैव सुवृत्तकम्  ५०
बाहुमात्रं त्रिवृत्प्रोक्तं गोवालैस्तत्कृतं भवेत्
ऊर्णामयं वा कर्तव्यं कनिष्ठाङ्गुलनाहकम्  ५१
अरणीलक्षणं प्रोक्तं शृणु वह्ने स्त्रुवस्य च
विंशत्यङ्गुलमायामं विस्तारं स्याद्द्वियङ्गुलम्  ५२
द्विधा कृत्वा ततो गर्भं सूत्रेण सुमितं पुनः
चतुरश्रं समं कृत्वा कुर्याल्लक्षणसंयुतम्  ५३
भूताङ्गुलपरीणाहं दण्डमूलं विधीयते
कण्ठनाहं तदर्धं स्यात्पुष्करं मूलवद्भवेत्  ५४
गोवालसदृशं दण्डं स्त्रुवाग्रं नासिकासमम्
पूरितं कर्षकार्धेन घृतेन च पुटद्वयम्  ५५
स्त्रुवस्य लक्षणं प्रोक्तं स्त्रुग्लक्षणमिहोच्यते
द्वात्रिंशदङ्गुलायामं विस्तारं सप्तमाङ्गुलम्  ५६
चतुरङ्गुलमुत्सेधं सूत्रेण सुमितं ततः
आस्यायामं षडङ्गुल्यं विस्तारं तावदेव तु  ५७
आस्याग्रस्य तु विस्तारमश्विन्यङ्गुलमेव च
अध्यर्धाङ्गुलमायामं द्विगुणं कण्ठविस्तृतम्  ५८
वेद्यायामं च विस्तारं धात्वङ्गुलसमन्वितम्
मध्यमे बिलविस्तारमङ्गुलत्रयसंयुतम्  ५९
निम्नं च द्व्यङ्गुलं वृत्तं तद्बाह्ये पट्टिका भवेत्

पट्टिकायास्तु विस्तारं यवद्वयमिति स्मृतम् ६०
पट्टिकायास्तु परितः पद्ममेकाङ्गुलं भवेत्
यवद्वयप्रमाणेन तद्बाह्ये निम्नमाचरेत् ६१
तद्बाह्ये पट्टिकां कुर्यात्कुर्यादर्धाङ्गुलेन तु
वेदिकामध्यतो रन्ध्रं कनिष्ठाङ्गुलमानतः ६२
कारयेत्सुषिरं धीमान्यावद्वै तन्मुखान्तकम्
द्वादशाङ्गुलमानेन दण्डायामं प्रकल्पयेत् ६३
त्र्यङ्गुलैर्गण्डिकां कुर्याद्दण्डाग्रे तु सगण्डिका
चतुरङ्गुलविस्तारं गण्डिका चोर्ध्ववर्तिता ६४
अर्धार्धाङ्गुलहीनं स्याद्गण्डिकाश्चापरे पुनः
षडङ्गुलं परीणाहं तदर्धं स्यात्सुवृत्तकम् ६५
द्वियङ्गुलप्रमाणेन दण्डमूले घटो भवेत्
कुम्भतारं त्रियङ्गुल्यं तुङ्गं स्याच्चार्धमङ्गुलम् ६६
वेद्यधः कारयेत्पद्मं पादं वै कर्णिकाकृतिम्
मात्राङ्गुलविधानेन कारयेद्देशिकोत्तमः ६७
पौष्टिकौ स्रुक्स्रुवौ प्रोक्तौ शान्तिकौ स्रुक्स्रुवौ शृणु
रत्निमात्रं तु चायामं तत्पार्श्वे तुण्डलं भवेत् ६८
मूलं पञ्चाङ्गुलं नाहं तदर्धं कण्ठनाहकम्
धातकीपत्रवच्चाग्रं नाहं वै पञ्चमाङ्गुलम् ६९
कण्ठे वा गण्डिकायुक्तं पुटद्वयसमायुतम्
कर्षार्धेन तु संपूर्णं कापिलेन घृतेन तु ७०
गोवालसदृशं दण्डं सर्वत्रैव सुवृत्तकम्
स्रुवस्य लक्षणं प्रोक्तं स्रुग्लक्षणमिहोच्यते ७१
द्वात्रिंशदङ्गुलायामं भूतभागेन भाजयेत्
विस्तारमेकभागं स्यात्तदर्धं तीव्रमुच्यते ७२
अर्धभागेन तन्मूले कुर्याद्वै गण्डिकात्रयम्
अध्यर्धदण्डमायामं दण्डनाहं षडङ्गुलम् ७३
भागं द्वादशधा भज्य मण्डि स्यादेकभागशः
वेत्रपद्मं द्विभागाभ्यां वै धृक्स्यादेकभागया ७४

कुम्भोत्सेधं चतुर्भागं कण्ठमेकेन कारयेत्
आस्यमेकेन कर्तव्यं पद्ममेकेन कारयेत्  ७५
एकांशं तु द्विधा कृत्वा वेत्रमेकेन कारयेत्
अर्धेन हीनौ कर्तव्यौ पादविस्तारमानतः  ७६
मूलदण्डस्य विस्तारमष्टांशेनाग्रपादकम्
दण्डविस्तारमानेन निर्गतिः परिपठ्यते  ७७
अध्यर्धं मानत्रिगुणं कुम्भविस्तृतमिष्यते
त्रिगुणं मण्डविस्तारं धृक्कण्ठौ पादविस्तृतौ  ७८
भागं स्याद्वेदिविस्तारमायामं परिमाणकम्
वेदिमध्ये बिलं कुर्यादङ्गुलत्रयमानतः  ७९
बिलं वै वर्तुलाकारं गम्भीरं स्याद्द्वयाङ्गुलम्
यवद्वयप्रमाणेन तद्बाह्ये पट्टिका भवेत्  ८०
बाह्ये तु षड्यवं पद्मं बाह्ये निम्नं यवद्वयम्
अर्धाङ्गुलेन तद्बाह्ये पट्टिकां परितः कुरु  ८१
अध्यर्धमङ्गुलं कण्ठं विस्तारं तावदेव तु
आस्यं पञ्चाङ्गुलायामं विस्तारं तावदेव तु  ८२
विस्तारं स्यात्त्रिभागैकमास्याग्रस्य तु विस्तृतम्
बिलादास्याग्रपर्यन्तं सुषिरं स्यात्सुशोभितम्  ८३
वेदिका गण्डिकामूले पादं कुर्यात्सुशोभितम्
पद्मं वा मत्स्यपृष्ठं वा गजोष्ठसदृशं तु वा  ८४
शान्तिकौ स्रुक्स्रुवौ प्रोक्तौ यज्ञकर्मणि निर्मितौ
वैकङ्कतमयं वाथ खादिरं चन्दनामयम्  ८५
पिप्पलं वा पलाशं वा औदुम्बरमयं तु वा
दक्षिणेनैव हस्तेन कुर्याद्वै देशिकोत्तमः  ८६
अनामिका तु वक्रं स्यादङ्गुष्ठं वक्रमेव हि
देशिनी मध्यमा युक्ता उच्छ्रितौ तौ कनिष्ठिकौ  ८७
हस्तेनैकेन मतिमान्स्रुवं सङ्ग्राह्य होमयेत्
उत्तानौ तु करौ कृत्वा मुष्टिं बध्वा विशेषतः  ८८
तर्जन्यौ द्वौ प्रसार्याथ कनिष्ठौ च प्रसारितौ

अङ्गुष्ठौ कुञ्चितौ चैव हस्तयोरुभयोरपि ८९
आभ्यां सङ्ग्राह्य हस्ताभ्यां कुर्यात्पूर्णाहुतिं स्रुचा
शान्तिकस्रुक्स्रुवौ प्रोक्तौ पात्राणां लक्षणं शृणु ९०
सौवर्णमुत्तमं पात्रं मध्यमं ताम्रराजतम्
मृण्मयं चाधमं पात्रं पात्रविस्तारमुच्यते ९१
कौशिकाङ्गुलिविस्तारमुत्सेधं चतुरङ्गुलम्
ओष्ठमर्धाङ्गुलं ज्ञेयमाज्यपात्रस्य चानल ९२
तस्मादर्धाङ्गुलहीनं प्रणीताया महानल
तस्मादर्धाङ्गुलहीनं प्रोक्षण्याश्च विशेषतः ९३
पात्राणां लक्षणं प्रोक्तं दर्भाणां लक्षणं शृणु
स्त्रीपुंनपुंसका दर्भास्त्रिविधाः समुदाहृताः ९४
नार्यः श्यामाश्च विधवो नारीकर्मणि योजयेत्
किंचित्पक्षसमायुक्ता पुंलिङ्गा ऋजवः स्थिताः ९५
पुंलिङ्गाश्चन् पुंस्क्रियायां तु ग्राहयेद्देशिकोत्तमः
नपुंसकास्तु सङ्ग्राह्याः स्थिताः कोमलवर्जिताः ९६
पूर्वाग्रा देवतानां तु पितृणां दक्षिणाग्रकम्
प्रत्यग्रा ब्रह्मचर्यस्य चोत्तराग्रा नृपाय वै ९७
छिन्नाग्राश्चैव भिन्नाग्रा न ग्राह्या खण्डितास्थिता
दर्भाणां लक्षणं प्रोक्तं विष्टराणां शृणुष्व हि ९८
विष्टरं सप्तदर्भाभिर्ग्रन्थिर्दक्षिणमार्गतः
मूलाग्राद्द्वादशाङ्गुल्यं ग्रन्थिरेकाङ्गुलं भवेत् ९९
एकविंशतिदर्भैश्च प्रोच्यते कूर्चमुत्तमम्
एकविंशाङ्गुलायामं ग्रन्थिरेकाङ्गुलं भवेत् १००
दक्षिणावर्तग्रथितं कूर्चाग्रं द्वादशाङ्गुलम्
षोडशाङ्गुलमायामं दर्भैः षोडशभिर्युतम् १०१
ग्रन्थ्यग्रौ पूर्ववत्कुर्यान्मध्यमं तत्प्रकीर्तितम्
द्वादशाङ्गुलमायामं सप्तदर्भैः कनीयसम् १०२
उत्तमं शिवकुम्भस्य वर्धन्यां चैव मध्यमम्
कन्यसं कलशानां तु कल्पयेत्कल्पवित्तमः १०३

अथवान्यप्रकारेण वक्ष्यते कूर्चलक्षणम्
नवदर्भैश्चोत्तमं विद्धि सप्तदर्भैस्तु मध्यमम्  १०४
पञ्चदर्भैः कनिष्ठं स्यादार्द्रं स्याद्ग्राहयेत्ततः
कूर्चानां लक्षणं प्रोक्तं पवित्राणां ततः शृणु  १०५
गोवालैर्दशदर्भाभिः सौवर्णैर्वा पवित्रकम्
पञ्चभिस्त्रिभिर्युग्मैर्वा ग्रन्थिरेकाङ्गुलं भवेत्  १०६
अग्रं द्वियङ्गुलं ज्ञेयमध्यर्धं वलयं स्मृतम्
अनामिकायां न्यस्तव्यं हस्तयोरुभयोरपि  १०७
एकविंशतिभिर्माषैः पवित्रं श्रेष्ठमुच्यते
पादहीनं तु तस्माद्वै मध्यमं समुदाहृतम्  १०८
द्विपादहीनमधममङ्गुलीयं मनोरमम्
अथवान्यप्रकारेण याज्ञिकवृक्षचर्मजम्  १०९
पूर्ववद्ग्रन्थितं कुर्याद्वानप्रस्थं तु भौमतः
स्वयंपतितगोपुच्छं गृहीत्वा करयेत्तु वा  ११०
षड्त्रिंशदङ्गुलायामं त्रिंशद्दर्भैः परिस्तरेत्
द्व्यङ्गुलस्तु भवेद्ग्रन्थिरग्रं स्याच्चतुरङ्गुलम्  १११
वेणिकावेष्टितं वाथ चतुर्दिक्षु च विन्यसेत्
एवं सदाग्निकार्येषु शेषाणां ग्रन्थिवर्जितम्  ११२
लक्षणं दर्भमालायाः शृणु वक्ष्ये विशेषतः
द्विवर्तं दक्षिणावर्तं त्रिचतुःपञ्चदर्भकैः  ११३
अङ्गुलीभिश्च तत्सङ्ख्या एकैकं चान्तरं भवेत्
एवमेवं तु संयोज्य हस्तमानं प्रलम्बितम्  ११४
लम्बमानं तु यद्दर्भं तद्दर्भास्त्रमिति स्मृतम्
तन्मध्ये स्थापितं होमं जपं चैव सुवीर्यकम्  ११५
प्रासादे यज्ञशालायां परिवेष्य च यत्नतः
सप्तविंशतिभिर्दर्भैस्त्रयोविंशतिभिस्तु वा  ११६
दशपञ्चकदर्भैश्च कूर्चं कुर्वीत बुद्धिमान्
एकाङ्गुलं भवेद्ग्रन्थिरग्रं तद्द्विगुणं भवेत्  ११७
नालं दशाङ्गुलं ज्ञेयं दर्भैरावेष्टितं भवेत्

एषा तु प्रोक्षणी प्रोक्ता समिधां लक्षणं शृणु ११८
न स्फुटिता न सुषिरा न स्थूला न कृशा यथा
कनिष्ठाङ्गुलिपरीणाहमेवं कृत्वा समायुतम् ११९
अशुष्का च गृहीता च द्वादशाङ्गुलमानकम्
समिद्भिर्याभिः संभूतं ताभिः परिधिविस्तरैः १२०
द्वात्रिंशदङ्गुलायामं तिसृभिः परिधिस्तथा
मध्यमादिकनिष्ठान्तं नाहं मानं प्रकीर्तितम् १२१
दक्षिणादुत्तरान्तं तु अस्त्रमन्त्रेण विन्यसेत्
परिधेर्लक्षणं प्रोक्तं हविःपात्रं ततः शृणु १२२
कारयेच्छुद्धताम्रेण न मिश्रेणैव कारयेत्
पात्रस्योपरिविस्तारं दशाङ्गुलमुदाहृतम् १२३
तेनैव त्रिगुणं नाहं गम्भीरं स्यात्षडङ्गुलम्
कण्ठमेकाङ्गुलोत्सेधमुपकण्ठं तथैव हि १२४
ओष्ठमेकाङ्गुलं प्रोक्तं कण्ठनाहमिति स्मृतम्
तस्य तारं चतुर्वक्त्रं शेषं युक्त्या प्रकल्पयेत् १२५
तस्मिन्पात्रे पचेद्धीमानाढकं तण्डुलं क्रमात्
यावद्वै तण्डुलं पक्वं तावद्ग्रहणमारभेत् १२६
यावत्पात्रमुखायामं पिधानं तावदेव तु
किंचिन्निम्नं भवेन्मध्ये तन्मध्ये वलयं न्यसेत् १२७
पात्राणां च पिधानानां प्रोक्तं लक्षणमुत्तमम्
चरुपात्रविधिं वक्ष्ये जठरं तु षडङ्गुलम् १२८
अष्टादशाङ्गुलं नाहं गम्भीरं चतुरङ्गुलम्
ओष्ठमेकाङ्गुलं प्रोक्तं कण्ठमेकाङ्गुलोच्छ्रयम् १२९
कण्ठनाहं दशाङ्गुल्यं पिधानं पूर्ववद्भवेत्
एवमेव चरुस्थाली पाद्यपात्रादिकं शृणु १३०
सौवर्णं राजतं ताम्रं मृण्मयं वा विभावतः
तद्विस्तारं दशाङ्गुल्यमुत्सेधं चतुरङ्गुलम् १३१
पादं कुर्यादधोभागे चतुरङ्गुलमानकम्
आस्ये तु नासिकायुक्तमायामं चतुरङ्गुलम् १३२

पाद्यपात्रं समाख्यातं शृणु पाद्यविसर्जनम्
विष्कम्भं षोडशाङ्गुल्यमुत्सेधं स्यात्तदर्धकम् १३३
ओष्ठमेकाङ्गुलं प्रोक्तमाकृतिः स्याच्छराववत्
वलयद्वयसंयुक्तमुभयोः पार्श्वयोरपि १३४
अधोभागे त्रिपादं स्यात्पादं चैव त्रिधा कृता
अस्मिन्पात्रे विशेषेण पाद्यं तु परिवर्जयेत् १३५
पूर्वोक्तैर्धातुभिः कुर्यात्पात्रमाचमनार्थकम्
उदरस्य तु विस्तारं द्वादशाङ्गुलमुच्यते १३६
द्वात्रिंशदङ्गुलं नाहं कण्ठोत्सेधं त्रियङ्गुलम्
ओष्ठमेकाङ्गुलं ज्ञेयमास्यायामं त्रियङ्गुलम् १३७
पार्श्वेन नासिकायुक्तं नासिकाश्च द्विवक्त्रिकाः
पादं कुर्यादधोभागे विंशत्यङ्गुलमानतः १३८
पिधानं मुकुलाकारं युक्तिबुद्ध्या प्रकल्पयेत्
एतदाचमनं पात्रं मृण्मयं वा प्रकल्पयेत् १३९
पात्रस्याचमनोच्छिष्टमाधारस्य तु लक्षणम्
रत्निमात्रसमुत्सेधं धूर्धूरकुसुमोपमम् १४०
तत्पात्रमुखविस्तारं द्वादशाङ्गुलमानतः
कुक्ष्युत्सेधं तथैव स्याद्विस्तारं चाष्टमङ्गुलम् १४१
चतुर्विंशत्यङ्गुलं नाहमोष्ठमेकाङ्गुलं भवेत्
पञ्चाङ्गुलं भवेत्पादं शरावाकृतिवत्तदा १४२
दण्डमष्टाङ्गुलोत्सेधं दण्डाग्रे गण्डिकात्रयम्
दण्डनाहं नवाङ्गुल्यं निच्छिद्रं समलङ्कृतम् १४३
एवमाचमनाधारं पात्रं सम्यक्प्रकीर्तितम्
अर्घ्यपात्रस्य विस्तारमष्टाङ्गुलमुदीरितम् १४४
प्रस्थेन पूरितं पात्रमुत्सेधं चतुरङ्गुलम्
एषामलाभे पात्राणां शङ्खं वा शुक्तिकं तु वा १४५
एवमेवं विशेषेण गन्धपात्रं प्रकल्पयेत्
गन्धपात्रं समाख्यातं पुष्पपात्रमथ शृणु १४६
विंशत्यङ्गुलविस्तारं त्रिगुणं नाहमुच्यते

नालमष्टाङ्गुलोत्सेधं तन्मानं पादविस्तृतम्  १४७
तद्वत्पिधानं कर्तव्यं नालपादविहीनकम्
सप्तधातुमयं वाथ पात्रं वै मृण्मयं तु वा  १४८
पुष्पपात्रं समाख्यातं धूपपात्रमथ शृणु
धूपपात्रस्य विस्तारं भूताङ्गुलमिति स्मृतम्  १४९
एकाङ्गुलप्रवृद्ध्या तु कर्तव्यौ मध्यमोत्तमौ
पात्रोत्सेधं तदर्धं स्यात्पद्मपात्रैर्विचित्रितम्  १५०
पद्मपादं प्रकर्तव्यं वृत्तं वा चतुरश्रकम्
नालं पञ्चाङ्गुलं ज्ञेयं नाहं स्यात्तु त्रियङ्गुलम्  १५१
तस्मादन्यप्रकारेण वक्ष्यते धूपपात्रकम्
विस्तारं पूर्ववद्ग्राह्य द्विपादं खुरसंनिभम्  १५२
दण्डं पञ्चाङ्गुलायामं द्विवक्रं नालं त्र्यङ्गुलम्
पिधानं मुकुलाकारमनेकसुषिरान्वितम्  १५३
धूपपात्रं समाख्यातं दीपपात्रमतः शृणु
धूपपात्रवदाकारं विशेषमधुनोच्यते  १५४
दीपाधारं त्रियङ्गुल्यं गजोष्ठसदृशाकृति
तत्र दीपं समादाय शिवाय विनिवेदयेत्  १५५
दीपपात्रं समाख्यातं दीपदण्डमथ शृणु
एकहस्तं समारभ्य नवहस्तान्तमेव च  १५६
कायमानमिदं प्रोक्तमनुकायमथ शृणु
पञ्चांशं पादविस्तारं घृतधारं तथैव च  १५७
नानापट्टिकया युक्तं नानादलसमन्वितम्
तस्योर्ध्वे मुकुलाकारं नालं ग्रन्थिसमायुतम्  १५८
अनुरूपं कारयेद्दण्डं नानाकुम्भसमावृतम्
नानागण्डिकया युक्तं तारं ताम्रमयं तु वा  १५९
कांस्यं वा पैत्तलं वाथ नानावल्लीसमायुतम्
दीपदण्डमिदं प्रोक्तं दीपमालां ततः शृणु  १६०
ताम्रेण वायसा वापि दारुजं वापि कारयेत्
द्वारे तु द्वारवत् कुर्यात्प्रभावत्पृष्ठदेशतः  १६१

शूलवच्छूलदीपं स्याच्चक्रवच्चक्रदीपकम्
धूर्धूरपुष्पवन्मूर्ध्नि चैकशः करदीपिका १६२
दीपाधारं समाख्यातं धूपघण्टामथ शृणु
शुद्धकांस्येन कर्तव्या धूपघण्टाप्रमाणयुक् १६३
चतुरङ्गुलविस्तारमुत्सेधं तावदेव च
विस्तारत्रिगुणं नाहमोष्ठमर्धाङ्गुलं स्मृतम् १६४
उपपट्टिकया युक्तं शिखरादङ्गुलं स्मृतम्
कण्ठमर्धाङ्गुलं ज्ञेयं जिह्वा च चतुरङ्गुलम् १६५
नालं त्रियङ्गुलोत्सेधं नाहं तस्य त्रियङ्गुलम्
नालाग्रे कल्पयेच्छूलं पद्मं वा वृषभं तु वा १६६
अधमं चतुरुद्दिष्टं पञ्चाङ्गुलं तु मध्यमम्
षडङ्गुलसमुत्सेधमुत्तमं तत्प्रकीर्तितम् १६७
घोषयेद्धूपकले तु धूपघण्टां च सस्वनाम्
घण्टाघोषं ततश्श्रुत्वा गच्छेद्बाह्ये तु राक्षसः १६८
धूपघण्टा समाख्याता महाघण्टामथ शृणु
अष्टाङ्गुलसमुत्सेधं तन्नाहं द्विगुणं भवेत् १६९
जिह्वा तस्य दशाङ्गुल्यं कण्ठोत्सेधं द्वियङ्गुलम्
कण्ठनाहं षडङ्गुल्यं पट्टिकाद्वयसंयुतम् १७०
शिखरं द्व्यङ्गुलोत्सेधं नाहमष्टाङ्गुलं स्मृतम्
शिखरस्य चतुर्दिक्षु नासी च सुषिरान्वितम् १७१
एषा घण्टा महाघण्टा शूलं वापि समन्वितम्
तस्माद्भूताङ्गुलं वृद्धिर्मध्यमस्योत्तमस्य तु १७२
स्नानारम्भे तदन्ते च धूपकाले विशेषतः
निवेद्यकाले तदन्ते वोत्सवादौ तदन्तके १७३
नृत्तान्ते प्रहरेद्धीमानस्त्रमन्त्रं समुच्चरन्
महाघण्टालक्षणं प्रोक्तं पाद्यद्रव्यमथ शृणु १७४
उशीरं चन्दनं दूर्वा सिद्धार्थं कुङ्कमं तिलम्
उदकेन समायुक्तं श्रेष्ठपाद्यमुदाहृतम् १७५
श्वेतसर्षपकं दूर्वा चन्दनं चोशीरसंयुतम्

मध्यमं पाद्यमाख्यातं कन्यसं च ततः शृणु १७६
उशीरं चन्दनोपेतमुदकं चाधमं स्मृतम्
एलालवङ्गकर्पूरं तिम्पुजातीफलं मुरम् १७७
उशीरोदकसंयुक्तं श्रेष्ठमाचमनीयकम्
एलालवङ्गकर्पूरं पालिका मध्यमं स्मृतम् १७८
एलोशीरसमायुक्तं पानीयमधमं स्मृतम्
आपः क्षीरकुशाग्राणि व्रीहिभिर्यवतण्डुलैः १७९
तिलैः सिद्धार्थकैश्चैव अर्घ्यमष्टाङ्गमुच्यते
तण्डुलं यवशालिभ्यां सर्षपेनाक्षतं भवेत् १८०
व्रीहितण्डुलसंयुक्तमधमं तत्प्रकीर्तितम्
अर्घ्यभेदं समाख्यातं गन्धद्रव्यमथ शृणु १८१
चन्दनं कुङ्कमं चैव खड्गपत्रं फलत्रयम्
कर्पूरोशीरलोहैश्च गन्धमुत्तममुच्यते १८२
फलत्रयं च कर्पूरं चन्दनोशीरसंयुतम्
घनखड्गसमायुक्तं मध्यमं गन्धमुच्यते १८३
चन्दनागरूकर्पूरं कन्यसं गन्धमुच्यते
गन्धद्रव्यमिदं प्रोक्तं पुष्पाणि विधिना शृणु १८४
श्वेतं रक्तं तथा पीतं कृष्णं चेति चतुर्विधम्
द्रोणं वै नन्दिकावर्तं ग्रीवावर्तं मल्लिका च १८५
श्वेतार्कमालती चैव पुन्नागं शङ्खपुष्पकम्
श्वेतपुष्पं च मन्दारं द्विकर्णं बहुकर्णिका १८६
असती कुरवं जातिवल्लिभद्राबकं तथा
वकुलं श्वेतलोध्रं च विकासिकुसुमानि च १८७
एतानि श्वेतपुष्पाणि सात्विकानि विनिर्दिशेत्
रक्तपुष्पं तथा श्वेतं धुर्धूरं बृहती तथा १८८
रक्तोत्पलं च पालाशं पाटली करवीरकम्
मौसली वैजिका व्याघ्री रक्तमन्दारपट्टिका १८९
रक्तान्येतानि पुष्पाणि राजसानि विनिर्दिशेत्
कर्णिकं धुर्धूरं चैव चम्पकारग्वधं तथा १९०

सौर्यकं चैव शौणाख्यं कोरण्डं गिरिकर्णिकम्
एतानि मिश्रकान्याहुः कृष्णानि तामसानि वै १९१
सात्विकं मोक्षफलदं राजसं वृद्धिकारणम्
मिश्रं तु कार्यसिद्ध्यर्थं पुत्राणां तु समृद्धिदम् १९२
बिल्वपत्रमपामार्गं कुशदूर्वाशमी सह
तपस्वी धातकीपत्रं हन्ति निःश्रूणिका परा १९३
पञ्चबिल्वं तथा जम्बू तुलसी नागनन्दिका
विष्णुक्रान्ति नृपं चैव एकपत्रारविन्दकम् १९४
ततो नीलोत्पलान्यानि तामसानि विवर्जयेत्
नीलोत्पलसमं पुष्पं नास्ति वह्ने मम प्रियम् १९५
श्वेतपद्मं श्रियावर्तं श्वेतार्कं नन्दिवर्तकम्
पट्टिका मालती चैव पुन्नागमुदये ददेत् १९६
करवीरं पाटली च द्रोणं चोत्पलपङ्कजम्
व्याघातं बृहती व्याघ्रं मध्याह्ने परिकल्पयेत् १९७
मल्लिका धूर्धूरपत्री तथा चम्पकमेव च
वेजिका बहुकर्णी च रात्रौ देयानि चानल १९८
जातीनीलोत्पलं चैव द्विकर्णी च कदम्बकम्
भद्रपाली च बिल्वं च दद्याद्वै चार्धरात्रिके १९९
मासपुष्पमहं वक्ष्ये ज्येष्ठमासादिमासिषु
अर्कबिल्वमपामार्गं द्रोणं चोत्पलपङ्कजम् २००
व्याघातं बृहती व्याघ्रं शमी चम्पकपाटली
निर्गन्धान्युग्रगन्धानि कुसुमानि विसर्जयेत् २०१
करञ्जं दाडिमीपुष्पं शिरीषं केतकी तथा
बन्धूकं चाकुली भीता किंशुका निम्बका जपा २०२
यूथिका मदयन्ती च कुसुमानि विसर्जयेत्
एवं पुष्पं समाख्यातं धूपलक्षणमुच्यते २०३
कर्पूरं कृष्णलोहं च खड्गं कुङ्कुममेव च
तुरुष्कं चैव निर्यासं चन्दनेन समन्वितम् २०४
एकद्वित्रिचतुःपञ्चषट्सप्तांशं समारभेत्

चूर्णयित्वा समाहृत्य मधुना च परिप्लुतम् २०५
एतच्छीतरिधूपः स्याच्छिवप्रीतिकरं भवेत्
कृष्णलोहं भवेदेकं निर्यासं द्विगुणं भवेत् २०६
चन्दनं द्विगुणं प्रोक्तमीषत्कर्पूरमिश्रितम्
उत्तमं धूपमाख्यातं मधुना च परिप्लुतम् २०७
चन्दनोशीरसंयुक्तं लघुयुक्तं मधुप्लुतम्
मध्यमं धूपमाख्यातं चन्दनादि शिवप्रियम् २०८
गुग्गुलुं घृतसंयुक्तमधमं धूपमुच्यते
दीप्ताङ्गारं विधूमं च धूपपात्रे प्रपूरयेत् २०९
शीतारिमत्र निक्षिप्य दक्षिणेन करेण च
सव्येन घण्टामादाय दापयेद्विधिवच्छिवे २१०
धूपमेवं समाख्यातं दीपलक्षणमुच्यते
कपिलाघृतदीपः स्यादजाघृतमथापि वा २११
अजाघृतमलाभे तु वर्तिं तैलेन कारयेत्
गोघृतं चोत्तमं विद्धि सात्त्विकं तद्विशिष्यते २१२
माहिषं मध्यमं ज्ञेयं राजसं समुदाहृतम्
अजाघृतं स्यादधमं तामसं चेति कीर्तितम् २१३
कर्पूरवर्तिना दीपं दापयेत्सर्वसिद्धिदम्
उत्तमा चतुरङ्गुल्या दीपज्वाला विशिष्यते २१४
त्र्यङ्गुलं मध्यमं ज्ञेयं द्व्यङ्गुलं चाधमं स्मृतम्
वृक्षबीजोद्भवैस्तैलैः शिवदीपं न कारयेत् २१५
दीपभेदं समाख्यातं शिवकुम्भं ततः शृणु
धर्मदेवाङ्गुलं तारं नाहं तत्त्रिगुणं भवेत् २१६
निम्नं दशाङ्गुलोत्सेधमास्यं स्याच्चतुरङ्गुलम्
कण्ठमेकाङ्गुलोत्सेधमास्यं पञ्चदशाङ्गुलम् २१७
ओष्ठमेकाङ्गुलं ज्ञेयं निर्गमं तु तथा भवेत्
स्निग्धं कलङ्करहितं कण्ठरेखात्रयान्वितम् २१८
पक्वबिम्बफलाभं वा बन्धूककुसुमप्रभम्
अङ्गुलाङ्गुलवृद्ध्या तु मध्यमस्योत्तमस्य तु २१९

शिवकुम्भमिदं प्रोक्तं वर्धन्या लक्षणं शृणु
वर्धन्युदरविस्तारमधमं स्यान्नवाङ्गुलम्  २२०
सप्तविंशाङ्गुलं नाहं गम्भीरं सप्तमाङ्गुलम्
ओष्ठद्वयसमायुक्तमास्यतारं त्र्याङ्गुलम्  २२१
पार्श्वे सुषिरसंयुक्तमध्यर्धाङ्गुलमावृतम्
पद्मपुष्पवदाकारं मध्ये तु सुषिरान्वितम्  २२२
कण्ठमर्धाङ्गुलोत्सेधं कण्ठनाहं दशाङ्गुलम्
अङ्गुलाङ्गुलवृद्ध्या तु कर्तव्यौ मध्यमोत्तमौ  २२३
वर्धन्या लक्षणं प्रोक्तं कलशलक्षणं शृणु
कलशोदरविस्तारं रुद्राङ्गुलमिति स्मृतम्  २२४
मध्यमं तन्नवाङ्गुल्यं कन्यसं चाष्टकाङ्गुलम्
तेषामर्धेन संवर्त्य सर्वेषां नाहमुच्यते  २२५
सप्ताङ्ङ्गुलसमुत्सेधमुत्तमस्य विधीयते
अर्धार्धाङ्गुलहीनं स्यान्मध्यमस्याधमस्य तु  २२६
कण्ठमेकाङ्गुलोत्सेधमोष्ठमेकाङ्गुलेन तु
आस्यतारं त्र्याङ्गुल्यं कण्ठनाहं दशाङ्गुलम्  २२७
जपाकुसुमसङ्काशं शेषं वृद्ध्या प्रकल्पयेत्
सौवर्णं राजतं ताम्रं मृण्मयं वा प्रकल्पयेत्  २२८
पात्राण्येतानि सर्वाणि कुर्यान्मात्राङ्गुलेन तु
शरावमुखविस्तारं पञ्चाङ्गुलमुदीरितम्  २२९
द्व्यङ्गुलं स्यात्तदुत्सेधमोष्ठमर्धाङ्गुलं भवेत्
एवं शरावमाख्यातं पादलक्षणमुच्यते  २३०
षोडशाङ्गुलविस्तारमुत्तमं पादमुच्यते
मध्यमं द्वादशाङ्गुल्यमधमं तु दशाङ्गुलम्  २३१
प्रोक्तं पादप्रमाणं तु कूर्मासनमथ शृणु
द्वादशाङ्गुलविस्तारं तदर्धेन सुवर्तितम्  २३२
उत्सेधं चतुरङ्गुल्यं कञ्चुकं पञ्च चाङ्गुलम्
षडङ्गुलपरीणाहं दण्डं कूर्मसानस्य तु  २३३
कूर्मासनविधिः प्रोक्तः खट्वाया लक्षणं शृणु

पादायामं तु खट्वाया द्वितलं मानाङ्गुलेन तु  २३४
मध्यमं विंशदङ्गुल्यं षोडशं चाधमं भवेत्
तस्यास्तारं त्रितलं स्याद्विस्तारद्विगुणायतम्  २३५
ईलितारं षडङ्गुल्यमुत्सेधं स्यात्तदर्धकम्
मध्ये पट्टिकया युक्तं विस्तारस्य त्रिभागया  २३६
भागं कपोतवत्कार्यमधः पट्टं तु भागया
दन्तैर्वाथ सुवर्णैर्वा राजतैर्वापि वेष्टयेत्  २३७
नानारत्नसमायुक्तं वेणिकाभिरलङ्कृतम्
खरपादं गजपादं सिंहपादमथापि वा  २३८
एवं प्रोक्तं हि खट्वायाः शिवज्ञानासनं शृणु
सारदारुमयं दण्डं दैर्घ्यमष्टादशाङ्गुलम्  २३९
द्व्यङ्गुलं च परीणाहं सर्वत्र चतुरश्रकम्
सौवर्णै राजतैर्वापि ताम्रैर्वारकूटैरपि  २४०
दण्डाग्रे मुकुलं कुर्यात्पद्मपत्रविचित्रितम्
पञ्चधा विभजेद्दण्डमेकांशं चोर्ध्वतस्त्यजेत्  २४१
तन्मानं विसृजेत्पादं त्रिभागै रज्जुमण्डलम्
सुषिरत्रयसंयुक्तं विवरे रज्जुनिर्गमम्  २४२
नानातन्तुसमायुक्तं नानाग्रन्थिसमायुतम्
एवं तन्त्रासनं प्रोक्तं स्यन्दनं शृणु चानल  २४३
चतुष्कचक्रसंयुक्तमक्षदण्डद्वयं भवेत्
तदूर्ध्वे पोतिकाबन्धं तस्योर्ध्वे चोत्तरं न्यसेत्  २४४
पादानि विन्यसेदूर्ध्वे तदूर्ध्वे चोत्तरं न्यसेत्
रथप्रस्तरवत्कुर्यादुत्तरे ब्राह्मणान्वितम्  २४५
नानागण्डिकया युक्तं नानाकुम्भलतान्वितम्
दारुसारैरिभदन्तैर्धातुभिर्वाप्यलङ्कृतम्  २४६
दारुभिश्छादयेदूर्ध्वे निश्छिद्रं शिखरं यथा
रथस्य लक्षणं प्रोक्तं शृणु रङ्गं विशेषतः  २४७
रथवत्कारयेत्सर्वं विशेषमधुनोच्यते
कुर्याद्वै मण्डपं चोर्ध्वे तथा प्रासादवद्भवेत्  २४८

दारुणा द्वितलं कृत्वा तदूर्ध्वे तुरगभ्रमम्
दिशो वाजिगजमध्ये वृषसिंहभ्रमं तु वा  २४९
तदूर्ध्वे यन्त्रडोला च अन्यदूर्ध्वे तु कारयेत्
एतद्रङ्गं समाख्यातं शिबिकायास्ततः शृणु  २५०
अशोकार्जुनको निम्बं मधूकपनसासना
शिंशुपाखादिरश्चाम्रं चन्दनाश्चम्पकाः शुभाः  २५१
शिबिकाशिखरिमौण्डिस्त्रिविधाः समुदाहृताः
उत्तमं पञ्चतालं स्याच्चतुस्तालं तु मध्यमम्  २५२
त्रितालमधमं ज्ञेयं त्रिधा तारं विधीयते
विस्तारद्विगुणायामं पादोनद्विगुणं तु वा  २५३
दन्तैर्वा दारुसरैर्वा काञ्चनाद्यैरलङ्कृतम्
पद्मपट्टिकया युक्तं फलकाभिर्व्यवस्थितम्  २५४
भित्त्युत्सेधमथैकांशमायामं चाष्टधाकृते
चतुरंशं शिरस्तस्य सामान्यमिदमीरितम्  २५५
विस्तारमीलिकायास्तु श्रेष्ठं सप्ताङ्गुलं स्मृतम्
अङ्गुलाङ्गुलहीनं तु शेषाणां तु विशेषतः  २५६
तत्तदर्धं तु बाहुल्यमीलिकायां विशेषतः
ईलिकायां त्रिभागैकं मध्ये पट्टं विधीयते  २५७
तत्पादं पट्टविस्तारं आयताष्टांशमेव च
भित्तिपादाश्रयं कुर्यादायसेन सुनिश्चितम्  २५८
कुम्भं च वलयं चैव वृत्तं चैवात्र हीनकम्
ईलिकाहस्तयोर्मध्ये चतुरश्रीकृता तथा  २५९
एकैकांशेन चोर्ध्वाधः पट्टिकाद्वयमेव च
मध्यमे तु द्वयांशेन फलका चक्रशोभितम्  २६०
ईलिकैर्जालकैर्वापि फलकैर्गुलिकैरपि
व्यालविद्याधरैर्नृत्तैश्चक्रवाकैश्च शोभितैः  २६१
तत्पूर्वभित्तिरुत्सेधमष्टाङ्गुलमुदाहृतम्
सिंहद्वारसमायुक्तं तदूर्ध्वे मकरास्यकम्  २६२
पालिकासदृशी तत्र सप्ताङ्गुलोन्नतं ततः

अयःपट्टैश्च नाराचैर्दृढं कुर्याद्विचक्षणः २६३
एवं वै शिबिका प्रोक्ता मौण्डिं वै शेखरीं शृणु
विस्तारं तु समुत्सेधं मौण्डिकायां च भित्तिका २६४
शालाकृतिं यथा कुर्यादनुनासिभिरन्वितम्
शेखरी शिखरोपेता कपोतैः पादसंयुतम् २६५
पालिकासदृशं पादं अष्टसप्ताङ्गुलोन्नतम्
एवं तु शेखरी प्रोक्ता सिंहासनमथ शृणु २६६
चतुःसिंहसमायुक्तं षोडशाङ्गुलमुच्छ्रयम्
विस्तारं रत्निमात्रं स्याच्चतुरश्रं वृत्तमेव च २६७
फलकाभिः समाच्छाद्य निवृत्तं सुदृढं क्रमात्
कपोतनासिकायुक्तं नानारत्नैर्विभूषितम् २६८
हाटकौ राजतौ वापि भूषयेत्तु विशेषतः
गजपादं भूतपादं हंसपादमथापि वा २६९
करणानीह सर्वाणि कुर्यान्मानाङ्गुलेन तु
सिंहासनमिदं प्रोक्तं पर्यङ्कं च ततह् शृणु २७०
अण्डजं मुण्डजं चैव रोमजं चर्मजं तथा
एभिर्द्रव्यविशेषेण तल्पं सम्यक्प्रकल्पयेत् २७१
खट्वायामसमं दैर्घ्यं विस्तारं स्यात्तदर्धकम्
हस्तमात्रसमुत्सेधं वस्त्रेण प्रहितं ततः २७२
हंसरोम्णा च संपूर्णमण्डजं तल्पमुच्यते
व्यासायामं तथा कुर्यान्मुण्डजं तूलपूरितम् २७३
एवं मुण्डजमाख्यातं रोमजं च ततः शृणु
आधारं पूर्ववत्कृत्वा रोमजं च मृगोद्भवम् २७४
पूरितं रोमजं ज्ञेयं चर्मजं पौण्डरीकजम्
शाल्मलीतूलजं वाथ कार्पासोत्तममेव च २७५
यथा लभं तथा कुर्यादुपधानमिहोच्यते
त्रितलमात्रमायामं नाहं तद्द्विगुणं भवेत् २७६
सूक्ष्मवस्त्रेण तत्कुर्यात्तूलेन परिपूरितम्
दुकूलैः पट्टदेवाङ्गैः क्षौमैश्चैवोपवेष्टितम् २७७

पादोपधानं हस्ताभ्यां बुद्ध्या सम्यक्प्रकल्पयेत्
उपधानं समाख्यातं वस्त्रलक्षणमुच्यते २७८
क्षौमं कार्पासजं वस्त्रं देवाङ्गं नेत्रसंभवम्
अष्टहस्तायतं चैव विस्तारं च द्विहस्तकम् २७९
सूक्ष्मं मनोरमं श्लक्ष्णं वस्त्रमुत्तममुच्यते
पीठोत्सेधस्य चाध्यर्धं वस्त्रविस्तारमुच्यते २८०
विस्ताराष्टगुणायामं सदशं तु सलक्षणम्
आखुदष्टाग्निदग्धांश्च जीर्णितांश्च विवर्जयेत् २८१
वस्त्राणां लक्षणं प्रोक्तं शृणूष्णीषोत्तरीयकम्
स्थापने प्रोक्षणे यागे वह्निकार्ये जपे ततः २८२
उष्णीषमुत्तरीयं च धारयेत्तु शिवद्विजः
सितं सूक्ष्मं च सुश्लक्ष्णं सदशं चाष्टहस्तकम् २८३
पञ्चभागैकविस्तारं सप्तभागमथापि वा
वामकर्णेऽपि पुच्छं स्याद्द्वौ कर्णौ वेष्टयेत्क्रमात् २८४
अधोभागे च मूर्धादि विन्यसेच्छैवसत्तमः
एकद्वित्रिक्रमाद्बद्ध्वे परितः परिवेष्टयेत् २८५
तस्याग्रं दक्षिणे कर्णे बन्धयेत्तु विशेषतः
उष्णीषमेवं कुर्वीत उत्तरीयमथ शृणु २८६
उष्णीषार्धं परिग्राह्य द्वौ पुच्छौ बन्धयेत्क्रमात्
यज्ञोपवीतवद्धार्यमुत्तरीयं विचक्षणैः २८७
अग्निदग्धं ततो जीर्णं छिन्नं तत्र तु वर्जयेत्
उत्तरीयमिति ख्यातं प्रच्छन्नपटमुच्यते २८८
द्वारस्याध्यर्धविस्तारं विस्तारद्विगुणायतम्
चतुर्हस्तप्रमाणेन प्रच्छन्नाधारदण्डकम् २८९
पिशुनैः पातकैः कुष्ठैर्नास्तिकैः श्रुतिदूषकैः
अदृश्यार्थं प्रकर्तव्यं दृश्यार्थे निष्फलं भवेत् २९०
पुष्पालंकारकारणे नैवेद्ये च विशेषतः
उत्सवान्ते च कर्तव्यं प्रच्छन्नं हि विशेषतः २९१
प्रच्छन्नलक्षणं प्रोक्तं शृणु द्रव्यप्रमाणकम्

गव्यं घृतं तथा श्रेष्ठं स्त्रुवपूर्णप्रमाणतः २९२
अन्नमक्षप्रमाणं स्यात्करपूर्णं तु धान्यकम्
सर्षपस्य तिलस्यैव प्रमाणं शुक्तिमात्रकम् २९३
तदर्धं स्यात्कुलत्थस्य यववैणवयोस्तथा
निष्पावमष्टकं प्रोक्तं विंशतिर्माषमुद्गयोः २९४
अष्टाङ्गं गवतिलवत्तण्डुलैश्च तथा भवेत्
सक्तुमुष्टिप्रमाणं स्याच्छालयः शुक्तिरुच्यते २९५
पृथुकं मुष्टिमात्रं स्यात्पत्रं वै चिबुकं हुनेत्
प्रियङ्गु कोद्रवं चैव तिलमात्रेण होमयेत् २९६
सक्तुना गुलमिश्रेण तिलचूर्णेन संयुतम्
एकैकं तिलपिण्डं च होमयेद्देशिकोत्तमः २९७
मूलमक्षप्रमाणेन खण्डयित्वा तु होमयेत्
फलानां स्वप्रमाणेन पनसं षोडशांशकम् २९८
अपूपमेकमेवं स्याल्लड्डुकं च तथा भवेत्
पुष्पं चैकैकहोमं स्यान्मूलवन्मांसमेव च २९९
पायसं कृसरं गौल्यं वह्नौ च जुहुयाच्चरुम्
स्त्रुचा पूर्णाहुतिं दद्याद्द्विपलेन घृतेन च ३००
पूर्णाहुत्यानया सर्वं यत्किंचित्कुहुतं भवेत्
हीनं यद्द्रव्यमन्त्राभ्यां तत्सर्वं सुहुतं भवेत् ३०१
तदर्धं स्विष्टकृच्चोक्तं स्नानोदकमथ शृणु
गन्धवर्णरसैर्जुष्टं शुद्धिस्नानं समाश्रितम् ३०२
कलुषं कल्मषं तोयं शैवलाकृतिसंयुतम्
पङ्काश्मदूषितं चैव क्षारोदं पल्वलोदकम् ३०३
अग्राह्यमुदकं ग्राह्यमेभिर्दोषैर्विवर्जितम्
स्नानं षड्भारसंयुक्तमुत्तमं चेति कीर्तितम् ३०४
मध्यमं च चतुर्भारं द्विभारं कन्यसं भवेत्
अभिषेकोदकं प्रोक्तं जलद्रोणीं ततः शृणु ३०५
हेम्ना वा रजतैर्वापि ताम्रैर्वा मृण्मयं तु वा
जलद्रोणी प्रकर्तव्या वृत्तं वा चतुरश्रकम् ३०६

विंशद्द्रोणैस्तथाद्भिस्तु पूरितं ग्राह्यवर्जितम्
उभाभ्यामपि पार्श्वाभ्यां वलयैरुपशोभितम् ३०७
एवमुक्ता जलद्रोणी जलावर्तमथ शृणु
उदरस्य तु विस्तारं चतुर्विंशाङ्गुलं भवेत् ३०८
विस्तारत्रिगुणं नाहं गम्भीरं विंशदङ्गुलम्
तदास्यं षोडशाङ्गुल्यं तस्योष्ठं नयनाङ्गुलम् ३०९
जलावर्तमिति प्रोक्तं शृणु वह्ने कमण्डलुम्
उदरस्य तु विस्तारं भूताङ्गुलमिति स्मृतम् ३१०
अर्धेन वर्तितं नाहं गम्भीरं स्याद्गुणाङ्गुलम्
अध्यर्धमास्यविस्तारमोष्ठमेकाङ्गुलेन तु ३११
कण्ठोत्सेधं द्वियङ्गुल्यं कण्ठनाहं षडङ्गुलम्
पार्श्वे नासिकया युक्तं नास्यायामं त्रियङ्गुलम् ३१२
एकाङ्गुलप्रमाणेन पृष्ठे पादं प्रकल्पयेत्
पात्राण्येतानि सर्वाणि कुर्यान्मात्राङ्गुलेन तु ३१३
प्रोक्तं कमण्डलूनां च वितानानामतः शृणु
क्षौमपट्टदुकूलैर्वा कार्पासैर्वापि कारयेत् ३१४
विस्तारं पटमानं स्याद्दैर्घ्यं तन्मानमेव तु
वितानं चित्रसंयुक्तं नानाशोभैः समन्वितम् ३१५
बलिकर्माणि च प्रोक्तं वितानं दण्डकैर्युतम्
आयामं षट्करं विद्धि विस्तारं तु चतुष्करम् ३१६
तद्दण्डानीह चत्वारि त्रिकराणि सुयोजयेत्
दण्डाग्रे वलयं कुर्यादायसं सुदृढं शुभम् ३१७
वितानलक्षणं प्रोक्तं छत्रलक्षणमुच्यते
छत्रतारं चतुस्तालमुत्तमं तत्प्रकीर्तितम् ३१८
अर्धाधिकत्रयं तालमधमं चेति कीर्तितम्
उत्तमाधमयोर्मध्ये मध्यमं चेति कीर्तितम् ३१९
नववेणुं समादाय तक्षयित्वा यथाविधि
सर्वत्र तन्तुभिर्बध्वा वस्त्रेण बर्हिणां ततः ३२०
मुक्तादामैः स्वरत्नैश्च भूषयेत्परितो बुधः

अधोमुखं भवेच्छत्रं सौवर्णमकुटं तथा ३२१
मध्यमं वस्त्रसंभूतं तालपत्रैश्च कन्यसम्
पञ्चषट्सप्ततालेन नालायामं प्रकल्पयेत् ३२२
एवं छत्रं समाख्यातं पिञ्छलक्षणमुच्यते
मयूरपिञ्छैः कर्तव्यं विस्तारं तु त्रितालकम् ३२३
वस्त्रेण वेष्टितं पूर्वं पश्चात्पिच्छैरलङ्कृतम्
अधोमुखं तु कर्तव्यमर्धं चोर्ध्वमुखं तु वा ३२४
पिञ्छैरन्तर्बहिर्वेष्ट्य मकुटेन समन्वितम्
मकुटेनैव कर्तव्यं छत्रस्योर्ध्वमुखस्य वा ३२५
अयसाधारसंयुक्तं दण्डं छत्रवदेव तु
एवं पिञ्छं समाख्यातं चामरस्य ततः शृणु ३२६
चामरैश्चामरं कुर्यात्पिञ्छैर्वापि मयूरजैः
लभेद्धिरण्मयं दण्डं रौप्यं ताम्रमयं तु वा ३२७
दन्तदारुमयं दण्डं चामरस्य विधीयते
दण्डं हस्तप्रमाणं स्यान्नाहं पञ्चाङ्गुलं स्मृतम् ३२८
नानागण्डिकया युक्तं नानाकुम्भलतान्वितम्
नानामण्डसमायुक्तं नानाकण्ठसमन्वितम् ३२९
चामराणां समाख्यातं तरङ्गाणां विधिं शृणु
नवभिर्द्वादशैर्वापि वस्त्रैर्वा दशपञ्चकैः ३३०
सूच्या वै प्रोतरज्ज्वा च प्रोत्योपान्तं परस्परम्
दुकूलपट्टदेवाङ्गैः कार्पसैर्वापि कारयेत् ३३१
आद्यं रज्जुसमायुक्तं तरङ्गमिति कथ्यते
स्तम्भायामसमं दैर्घ्यं स्तम्भवेष्टनमुच्यते ३३२
क्षौमनेत्रदुकूलैर्वा कुर्यात्कार्पाससंभवैः
स्तम्भानां वेष्टनं प्रोक्तं ध्वजानां लक्षणं शृणु ३३३
पूर्वोक्तवस्त्रैः कर्तव्यं ध्वजं लक्षणसंयुतम्
विंशमङ्गुलविस्तारमायामं द्विगुणं भवेत् ३३४
शिखरं दशाङ्गुलोत्सेधं पुच्छविस्तारसंमितम्
त्रिपुच्छं वा चतुःपुच्छं पुच्छद्वयमथापि वा ३३५

वेत्रद्वयसमायुक्तं पार्श्वैकदलसंयुतम्
तस्माच्चतुर्गुणं दैर्घ्यं पताकाया विधीयते ३३६
कारयेद्ध्वजवच्छेषं दण्डमष्टकरं भवेत्
ध्वजानां लक्षणं प्रोक्तं पुष्पाधारमथ शृणु ३३७
पनसाम्रमधूकैर्वा सालचम्पकपाटली
फलकां कारयेद्धीमान्सम्पादं सुदृढं यथा ३३८
द्विरत्निमात्रविस्तारमायामं द्विगुणं भवेत्
घनमष्टाङ्गुलं प्रोक्तं पादं वै षोडशाङ्गुलम् ३३९
परितः कल्पयेद्भित्तिमङ्गुलत्रयसुवृत्तम्
पुष्पाधारं समाख्यातं शैलं वा लोहजं तु वा ३४०
सौवर्णमुत्तमं पात्रं राजतं मध्यमं भवेत्
कन्यसं कांस्यसंभूतं पात्रलक्षणसंयुतम् ३४१
स्थलिका पादरहिता रत्निमात्रप्रविस्तरम्
पूर्णचन्द्रसमाकारा ह्योष्ठमेकाङ्गुलं भवेत् ३४२
स्थलिकालक्षणं प्रोक्तं त्रिपादीनामतः शृणु
त्रिपादी चतुर्विधा ज्ञेया शङ्खपादत्रिपादिका ३४३
खगपादि च कर्तव्या स्थलिकापाद एव च
चतुरङ्गुलमुत्सेधं तदर्धमुखविस्तृतम् ३४४
त्रिपादं वक्रसंयुक्तं शङ्खपादमिति स्मृतम्
अष्टाङ्गुलसमुत्सेधं विस्तारं पञ्चमाङ्गुलम् ३४५
पादत्रयसमायुक्तं त्रिवक्राङ्गुष्ठनाहका
शरावाकृतिमूले तु शेषं बुद्ध्या प्रकल्पयेत् ३४६
चतुस्त्रिंशाङ्गुलोत्सेधं बकपादं प्रकीर्तितम्
आस्यं षडङ्गुलं तारं नाहमङ्गुष्ठमात्रकम् ३४७
किंचित्त्रिभागिकं पादं मूलं वै सिंहपादवत्
बकपादमिदं प्रोक्तं स्थलिकायां शृणुष्व हि ३४८
यावत्पीठसमुत्सेधं तावदुत्सेधमुच्यते
शेषं पूर्वोक्तवत्कुर्याद्दर्व्या वै लक्षणं शृणु ३४९
अरत्निमात्रमायामं नालं तारद्वयाङ्गुलम्

अग्रं षडङ्गुलं तारं पुच्छं तस्यार्धविस्तृतम् ३५०
अङ्गुलाङ्गुलवृद्ध्या तु कर्तव्यौ मध्यमोत्तमौ
दर्वीणां लक्षणं प्रोक्तं शृणु दर्पणलक्षणम् ३५१
शुद्धकांस्येन कर्तव्यं रत्निमात्रसमुच्छ्रयम्
वितस्तिमात्रविस्तारं दर्पणं पूर्णचन्द्रवत् ३५२
नालमष्टाङ्गुलं ज्ञेयं नानागण्डिकयान्वितम्
पादं वेदाङ्गुलोत्सेधं विस्तारं तावदेव तु ३५३
नानालतासमायुक्तं नानापट्टिकयान्वितम्
दर्पणं चाब्रवं तत्र शृणु पादुकालक्षणम् ३५४
पादुकाद्वादशाङ्गुल्यं विस्तारं पञ्चमाङ्गुलम्
अङ्गुष्ठकं ततः कुर्यादङ्गुलद्वयमानतः ३५५
सौवर्णै राजतैर्वापि ताम्रैर्वा दारुभिः कुरु
स्वाङ्गुलैः परिमाणं तु कुर्यात्तां लक्षणैर्बुधः ३५६
लक्षणं पादुकस्योक्तं बलिदानमतः शृणु
ग्रामे तु ब्राह्मिके स्थाने दद्याद्बलिमथोत्सवे ३५७
कपित्थफलमात्रेण बलिरेकत्र कीर्तितम्
द्विगुणं त्रिगुणं वात्र बलिदानमिहोच्यते ३५८
प्रोक्तं बलिप्रमाणं तु सन्ध्याविधिमतः शृणु
कालाश्च द्विविधा ज्ञेयाः स्थूलसूक्ष्मोपलक्षिताः ३५९
स्थूलश्च लौकिको ज्ञेयः सूक्ष्मश्चाध्यात्मिको मतः
स्वस्थनराक्षनिमिषं चतुर्भागं त्रुटिः स्मृतम् ३६०
त्रुटिद्वयं लवं ज्ञेयं लवद्वयं निमेषकम्
निमेषपञ्चदशा काष्ठा काष्ठपञ्चदशा कला ३६१
त्रिंशत्कला मुहूर्तं तु मुहूर्तं घटिकाद्वयम्
घटिकार्धाधिका सप्त तद्यामं सन्धिरुच्यते ३६२
सन्धिरष्ट समाख्याता ह्यहोरात्रं महानल
पूजयेत्प्रतियामं तु उत्तमं तु विनिर्दिशेत् ३६३
उदये चैव मध्याह्ने प्रदोषे चार्धरात्रिके
पूर्ववत्सन्धिमाश्रित्य उत्तमं मध्यमं तु वा ३६४

उदये चैव मध्याह्ने चास्तमे चाधमं स्मृतम्
घटिके द्वे भवेत्स्नानं घटिकैकार्चनं भवेत् ३६५
नैवेद्यं तत्त्रिपादं स्यादग्निकार्यं त्रिपादिका
अतः परं त्रिघटिका बलिभ्रमणकाय च ३६६
पूर्वाह्णे चापराह्णे च प्रदोषे बलिमाचरेत्
अर्धरात्रौ बलिं कुर्यात् काम्यर्थं तु विशेषतः ३६७
अन्येषामपि सन्धीनां नाचरेत्तु बलिभ्रमम्
हविष्यात्पूजयेत्तासु अग्निकार्यं विधानतः ३६८
आदित्योदयमारभ्य यावद्वै दशनाडिका
पूर्वाह्णमिति विज्ञेयं प्रातःकालमतः शृणु ३६९
आदित्योदयमारभ्य मुहूर्तद्वयनाडिका
प्रतःकालमिति ज्ञेयं ज्ञात्वा कर्म समारभेत् ३७०
उदयादिसमारभ्य यावद्विंशतिनाडिकाः
प्रभातेति समाख्याता स्थापनारोहणेषु च ३७१
एवं सन्ध्याक्रमः प्रोक्तो नमस्कारविधिं शृणु
सव्यापसव्यमार्गेण त्रीन्कृत्वा तु प्रदक्षिणम् ३७२
प्रणम्य दण्डवद्भूमावाष्टाङ्गेन समन्वितम्
शिरो हस्तौ च कर्णौ च चिबुकं बाहुकौ तथा ३७३
अष्टाङ्गं च नमस्कारं पञ्चाङ्गं च ततः शृणु
शिरो हस्तौ द्विजानू च कृत्वा जानुव्यवस्थितौ ३७४
इदं पञ्चाङ्गमेवं तु त्रियङ्गं च ततः शृणु
मुद्रां बध्वा तु मुकुलीं मूर्धदेशे निवेशयेत् ३७५
त्र्यङ्गमेवं नमस्कारं सर्वपापहरं परम्
नमस्कारविधिः प्रोक्तः शृणु मञ्जूषलक्षणम् ३७६
मधूकपनसाम्रैश्च वकुलार्जुनकिंशुकैः
मञ्जूषं कारयेद्धीमान् द्रव्यक्षेपार्थमुत्तमम् ३७७
त्रितालं तस्य विस्तारमायामं त्रिगुणं भवेत्
विस्तारस्य समोत्सेधं भित्तितारं त्रियङ्गुलम् ३७८
दारुणा कल्पयेद्भित्तिमूर्ध्वच्छदनसंयुतम्

चतुरङ्घ्रिसमायुक्तं कवाटार्गलसंयुतम् ३७९
अयःपट्टैश्च नाराचैः स्निग्धं कृत्वा समन्ततः
मञ्जूषलक्षणं प्रोक्तं गोलकालक्षणं शृणु ३८०
यावल्लिङ्गस्य विस्तारं पूजाभागोच्छ्रयं तथा
अर्धाङ्गुलप्रवृद्ध्या तु कुर्यान्मानेन गोलकाम् ३८१
कुर्यात्पूर्वोक्तवत्सूत्रं सूत्राग्रे सुषिरत्रयम्
नानारत्नसमायुक्ता गोलका लिङ्गवत्कृता ३८२
गोलकालक्षणं प्रोक्तं सौवर्णं पुष्पमुच्यते
वस्वङ्गुलं तु विस्तारं तस्याप्यर्धार्धमेव वा ३८३
मध्यमे कर्णिकायुक्तं दलाष्टकसमन्वितम्
नानारन्तसमायुक्तं सौवर्णं पुष्पमेव च ३८४
पट्टं पञ्चाङ्गुलं तारं लिङ्गनाहं च दैर्घ्यकम्
किरीटं कर्णमकुटं हारकेयूरकं तथा ३८५
कटकं कटिसूत्रं च पादं वै नूपुरं तथा
कुर्यादुदरबन्धं च छन्नवीरं च मेखलाम् ३८६
कर्णपूरं कर्णपुष्पं प्रतिमानां यथावहम्
कृतेष्वेतेषु जुहुयात्पञ्चब्रह्मषडङ्गकैः ३८७
क्षुरिकाबीजमुख्यैश्च समिदाज्यादिभिस्तथा
शतं शतद्वयं वाथ स्पृष्ट्वा स्पृष्ट्वा तु होमयेत् ३८८
सद्येन सर्वं सङ्ग्राह्य वामदेवेन रोपयेत्
एवमाभरणं प्रोक्तं यन्त्रिकालक्षणं शृणु ३८९
अयसा कारयेद्यन्त्रीं द्विवक्रां वलयान्विताम्
अर्धाङ्गुलपरीणाहमर्गलस्याहितं तथा ३९०
यन्त्रिकालक्षणं प्रोक्तं क्षुराणां लक्षणं शृणु
षडङ्गुलसमायामं तदर्धं विस्तृतं भवेत् ३९१
आयसेन तु कर्तव्यं तन्नालं चतुरङ्गुलम्
क्षुरस्य लक्षणं प्रोक्तं भेर्याश्च लक्षणं शृणु ३९२
आयामं तु चतुस्तालं तन्नाहं पञ्चतालकम्
आदित्याङ्गुलविस्तारं वक्त्रतारं विधीयते ३९३

मध्यमं सुषिरं तस्य आमुखान्तं विशेषतः
घनमर्धाङ्गुलं तस्य आमुखान्तं सुवृत्तकम्  ३९४
नवकीलसमायुक्तमयःपट्टेन वेष्टितम्
मध्याङ्गुलपरीणाहं वलयं रज्जुवेष्टितम्  ३९५
गोचर्मणा तु संछाद्य नीरोम्णा वलयद्वयम्
बन्धयेत्तु विशेषेण गोचर्मकृतरज्जुभिः  ३९६
भेर्याश्च लक्षणं प्रोक्तं ततः तालं विधीयते
शुद्धकांस्येन कर्तव्यौ तालौ वै तालविस्तृतौ  ३९७
मध्ये बुद्बुदवत्कुर्यात् तन्मध्ये सुषिरं नयेत्
तन्मध्ये रज्जुसंबद्धौ कुर्यादम्बुजपत्रवत्  ३९८
अत्रोपकरणं सर्वं कुर्यान्मत्राङ्गुलेन तु
रथाङ्गशिबिकाश्चैव खट्वा सिंहासनं ततः  ३९९
कुर्यान्मानाङ्गुलेनैव लक्षणेन समन्वितम्
मृत्पात्राणीह सर्वाणि क्रियान्ते वर्जयेद्बुधः  ४००
लोहदारुमयं सर्वं तत्क्रियान्तं परिग्रहेत्
शुद्धिं कृत्वा क्रियादौ तु यथोक्तं देशिकोत्तमः  ४०१
स्वर्णं रजनिचूर्णेन लवणेनैव राजतम्
ताम्रमाम्लेन शुद्धं स्यात्कांस्यं वै भस्मना तथा  ४०२
मृत्पात्रं दारुजं तत्र क्षालनादेव शुद्ध्यति
क्षीरं दधि घृतं चैव प्रोक्षणादेव शुद्ध्यति  ४०३
एवं समासतः प्रोक्तं करणानां तु लक्षणम्  ४०४

इति श्रीदीप्तशास्त्रे प्रतिष्ठातन्त्रे करणाधिकारनाविधिपटलः
चतुर्नवतितमः

## पञ्चनवतितमः पटलः
### मूर्धेष्टकाविधिः

अतः परं प्रवक्ष्यामि मूर्ध्नि शैलेष्टकाक्रमम्
नपुंसकेन शिलया कारयेल्लक्षणान्वितम्  १
षोडशाङ्गुलमायामं शैलं तस्यार्धविस्तृतम्

तस्यार्धं नीव्रसंयुक्तं चतस्त्रश्चैकभूमिके २
तलं प्रत्यङ्गुलं वृद्धिराद्वादशतलान्तकम्
शैलजे तु शिला कार्या चैष्टके चेष्टका तथा ३
द्वादशाङ्गुलमायामः तदर्धे तु प्रविस्तृतम्
तदर्धं नीव्रसंयुक्ता सुदग्धा निर्वृणा दृढाः ४
मूलमग्रं विदित्वा तु विन्यसेत्प्रथमेष्टकाम्
निम्नमग्रं भवेत्किञ्चिन्मूलं वै किञ्चिदुन्नतम् ५
ऊर्ध्वभागं मुखं ज्ञेयं पृष्ठं स्याद्भूगतांशकम्
पञ्चभिर्योषितां कन्यामलङ्कृत्य विशेषतः ६
तया संस्पर्शयेच्छैलं तदग्रमिति कीर्तितम्
एवं ज्ञात्वा विशेषेण मूर्ध्नि विन्यस्य मन्त्रतः ७
सर्वेषां लम्बयेदग्रं तेषां पृष्ठं समुत्थितम्
प्रासादस्याग्रतो वाथ कौबेर्यां वा विशेषतः ८
मण्डपं वा प्रपां वापि कारयेल्लक्षणान्वितम्
नवहस्तं सप्तहस्तं मण्डपं पञ्चहस्तकम् ९
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्
दर्भमालासमायुक्तं वितानध्वजशोभितम् १०
पुष्पमालासमायुक्तं मुक्तादामैरलङ्कृतम्
तन्मध्ये वेदिकां कुर्यात्तत्त्रिभागैकभागया ११
द्वादशाङ्गुलमुत्सेधं दर्पणोदरसन्निभम्
तन्मध्ये स्थण्डिलं कृत्वा दशद्रोणेन शालिना १२
तदर्धतण्डुलैर्भूष्यं तदर्धतिलसंयुतम्
लाजदर्भैः समास्तीर्य नवशक्तिं च विन्यसेत् १३
गन्धपुष्पादिभिः पूज्य शक्तिमन्त्रमनुस्मरन्
तस्य मध्ये न्यसेद्धीमान् शिला वै चेष्टकास्तथा १४
शिलासु शालिपिष्टेन विलिखेदक्षराणि तु
शिलायां पूर्वे ह्रींकारं श्रींकारं दक्षिणे ततः १५
क्लींकारं पश्चिमे न्यस्य त्रींकारं चोत्तरे तथा
शिलायामेवमेवं स्यादिष्टकायां ततः शृणु १६

यकारं पूर्वतो लिख्य रकारं दक्षिणे तथा
लकारं पश्चिमे स्थाप्य वकारं चोत्तरे तथा १७
बिन्दुनादसमायुक्तमोंकारेणाभिवेष्टयेत्
नन्दा पूर्णा जया रिक्ता शैलानामधिदेवताः १८
गन्धपुष्पादिना पूज्य स्वनाम्ना देशिकोत्तमः
सौवर्णं राजतं सूत्रं कार्पासकमथापि वा १९
कौतुकं बन्धयेद्धीमान्स्वस्वबीजमनुस्मरन्
नैवेद्यं दापयेत्तेषां ताम्बूलं च निवेदयेत् २०
आच्छाद्य हतवस्त्रेण प्रत्येकं कुशया सह
एवमेव क्रमः प्रोक्त इष्टकानां विशेषतः २१
दारुजं लोहजं वाथ स्थूपिमुत्तरतो न्यसेत्
आसनं खदिरं वापि तिन्त्रिणी दारुमेव तु २२
मधूकं पद्ममण्डूकं षडेते दारवस्ततः
पादायामसमं दीर्घं विस्तारं पादसंमितम् २३
अग्रमङ्गुलविस्तारमानुपूर्वात्कृशं तथा
तस्य मूलं तु वेदाश्रं त्रिभागैकमधस्ततः २४
ऊर्ध्वभागं तु वृत्तं स्याच्छिखिपादं न्यसेदधः
विस्तारं त्रिगुणायामं विस्तारं समविस्तृतम् २५
मूले द्वयं यथा सम्यक् तद्द्वयेनैव योजयेत्
गन्धाद्यैरर्चयित्वा तु पञ्चमूर्तिसमन्वितम् २६
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः
एतान्संपूज्य तस्मिंस्तु नववस्त्रेण वेष्टयेत् २७
अभितः कलशानष्टौ वेदिकोपरि विन्यसेत्
सकूर्चान्सापिधानांश्च सवस्त्रान्वारिपूरितान् २८
गन्धपुष्पादिना पूज्य लोकेशानधिदैवतम्
पूर्वेद्युरेव कर्तव्यं प्रभाते विमले बुधः २९
पूर्वादिषु महादिक्षु स्थण्डिलं वालुकात्मकम्
पूर्वोक्तविधिना धीमान् गर्भाधानादिकं कुरु ३०
समिदाज्यचरून्लाजान्यवाः सद्यादिभिस्ततः

शताष्टकं तदर्धं वा स्पृष्ट्वा प्रत्येकशो हुतम् ३१
विद्याङ्गैश्च षडङ्गैश्च क्षुरिकाबीजमुख्यखैः
घृतेन जुहुयाद्धीमान्प्रत्येकं शतसङ्ख्यया ३२
जयादिरभ्याधानं च स्विष्टान्तं होममाचरेत्
नववस्त्रपरिच्छन्नौ नवमाल्यानुलेपनौ ३३
हेमाङ्गुलीयकैः युक्तौ कुण्डलाद्यैरलङ्कृतौ
स्थपतिस्थापकौ चैव विन्यसेच्चेष्टकाः क्रमात् ३४
पञ्चब्रह्माण्यथाङ्गानि प्रासादं च स्मरेद्गुरुः
अनन्यमनसो भूत्वा स्थपतिः स्थापयेत्क्रमात् ३५
नासिकायां समो वाथ शक्तिध्वजसमोऽपि वा
नृत्तगेयसमायुक्तं सर्वालङ्कारसंयुतम् ३६
स्थपतिः प्राङ्मुखासीनः ब्राह्मणः पश्चिमामुखः
सुमुहूर्ते सुलग्ने च नक्षत्रकरणान्विते ३७
मूर्ध्नि शैलान्न्यसेद्धीमान् चतुरः प्राग्दिशादितः
इष्टकां वा तथा स्थाप्य प्रोक्षयेत्कलशाम्भसा ३८
मरकतं चैव वैडूर्यमिन्द्रनीलं च मौक्तिकम्
स्फटिकं पद्मरागं च प्रवालं वज्रमेव च ३९
पूर्वादिषु क्रमान्न्यस्त्वा माणिक्कं मध्यमे न्यसेत्
नवबीजसमायुक्तं नवरत्नानि विन्यसेत् ४०
तन्मध्ये स्थापयेत्स्तूपिमीशानेन तु मन्त्रतः
त्रिभागैकं भवेद्दृश्यं शेषभागं तु बन्धयेत् ४१
काञ्चनालङ्कृतां धेनुमाचार्यस्य प्रदापयेत्
मूर्धेष्टकाविधिः प्रोक्तः प्रासादप्रोक्षणं शृणु ४२

इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे मूर्धेष्टकाविधिपटलः पञ्चनवतितमः

## षण्णवतितमः पटलः

## चललिङ्गप्रतिष्ठाविधिः

चललिङ्गप्रतिष्ठां च विधिवद्देशिकोत्तमः
नदीसमुद्रतीरे च तटाके च समाचरेत् १

चलनं च महालिङ्गं स्थाप्यमन्यत्स्थलं भवेत्
ऐन्द्रे वापि कौबेरे वा ऐशान्ये तस्य पूर्वतः २
यागशालां प्रकल्पयेत शास्त्रोक्तलक्षणान्विताम्
कुण्डमण्डलवेदिं च ऐशान्यां वाहनं तथा ३
कुम्भं च घटिकां चैव शिवशक्त्यावाहनं तथा
स्वर्णं च राजतं चैव ताम्रं च तन्तुमूलके ४
त्रिपद्यां शक्तिमावाह्य सूत्रं चैव तु बुद्धिमान्
धूपदीपोपचारं च विघ्नेश्वरं सुपूजयेत् ५
तस्य सूत्रं वृषशृङ्गं लिङ्गं चैव तु बुद्धिमान्
पञ्चशान्तिं च नमकं चमकं च त्रयोन्नतम् ६
संवत्सरदिनं पादं पूर्वं चैव समाचरेत्
षट्त्रिंशत्तत्त्वहस्तं च उत्तरं स्थाप्यमेव च ७
अष्टबन्धनविधिवल्लिङ्गादिदेवता भवेत्
यागशालामलङ्कृत्य गोमयालिप्य शुद्धितम् ८
पञ्चगव्येषु संस्नाप्य संकल्पं देशिकोत्तमः
पुण्याहं चैव विधिवद्वास्तुपूजा विधीयते ९
मृत्पल्लवैश्च त्वङ्कुम्भमावाहनार्चनं तथा
नवग्रहेण शान्तिश्च यागमण्डपमेव च १०
अस्त्रेण प्रोक्षयेत्सर्वं व्रीहिं च तिलतण्डुले
तन्तुवस्त्रं च कूर्चं च चूतपत्रं तथैव च ११
नालीकेरं प्रतिमा + आचार्यहस्तमात्रकैः
कण्ठमात्रं च वस्त्रं च उष्णीषं चोत्तरीयकम् १२
आचार्य उध्यतं न्यासं मन्त्रतन्त्रज्ञतप्रभू
शिवाय प्रोक्षणं चैव कुम्भस्थापनमेव च १३
वेदिकादीशद्भागे देवतामण्डलं भवेत्
मण्डपं पूजनीयं च अर्चयेन्मण्डलं भवेत् १४
पञ्चब्राह्मैश्च दिक्पालसूर्यचन्द्रषडङ्गकैः
अग्निकार्यार्थविधिवत्समिधानाञ्च विद्यते १५
पलाशाश्वत्थमेवं स्यादौदुम्बरं समाचरेत्

नवधान्यं च लाजं च अन्नपुष्प अपूपकैः १६
घृतेनैवाहुतिं चैव सहस्राष्टं तथैव च
संहिता च षडङ्गैश्च स्वधा स्वाहा च संयुतम् १७
ओंकारादिनमोऽन्तं च इति मन्त्रं च सर्वदा
अन्ते जयादिहोमं च हेमपुष्पं च योजयेत् १८
धूपदीपोपचारं च लिङ्गादिविग्रहं तथा
प्रतिमा शुद्धितं चैव पञ्चगव्याभिषेचनम् १९
तैलादिसर्वाभिषेकं च पूर्णकुम्भाभिषेचनम्
सर्वालङ्कारसंयुक्तं प्राणप्रतिष्ठिता भवेत् २०
जीवन्याससमाख्यातं षडध्वार्चनमेव च
तिथिपूजार्चनं चैव साङ्गोपाङ्गार्चनं तथा २१
घृतसूपान्ननैवेद्यं विवाहं च समाचरेत्
सान्निध्यार्चनं चैव महानैवेद्यं च २२
पूर्णाहुतिं च ताम्बूलं सुप्रसन्नार्चनं भवेत्
बलिभ्रमणसंयुक्तं धूपदीपोपचारकैः २३
दर्शयेद्यजमानं च चुलुकोदकमेव च
आचार्यप्रियकरं चैव दशदानं समाचरेत् २४
ब्राह्मणान्भोजयित्वा तु उत्सवस्य तु विग्रहैः
ग्रामप्रदक्षिणं चैव इष्टकाम्यार्थं सिद्धयेत् २५
भुक्तिमुक्तिलभं चैव सर्वेषां विजयं भवेत् २६
इति दीप्तागमे चललिङ्गप्रतिष्ठाविधिपटलः षण्णवतितमः

## सप्तनवतितमः पटलः
## पूजास्थलप्रमादलिङ्गप्रतिष्ठाविधिः

पूजास्थलप्रमादा च लिङ्गस्थापनं विधीयते
वत्सरे चैव मासे च पक्षे च यत्र यत्र यत् १
शुभवारे शुभलग्ने शुभऋक्षे शुभे दिने
सुमुहूर्ते तद्दिने पूर्वमङ्कुरार्पणमेव च २
सस्वधानं च आधारं अष्टबन्धनमेव च

ऐशान्यामग्निवायुं च यागशाला प्रशस्यते ३
रसहस्तं चतुर्दिक्षु रविपादं तथैव च
उच्छ्रयं पञ्चहस्तं च एकाशीति पदं तथा ४
वेदिं च पञ्चकुरडं च वेदिकाग्निं च मरडलम्
द्वयाङ्गुलोच्छ्रयं चैव हस्तमात्रं च दीर्घयेत् ५
यागमरडलं कृत्वा गोमया शुद्धिरेव च
यवं च तराडुलतिलं कूर्चं तन्तुं तथैव च ६
चूतपत्रं नालिकेरं प्रतिमा नववस्त्रकम्
पालाशः समिधः सर्वमश्वत्थं च समाचरेत् ७
तिलसर्षपमुद्गं च माषनिष्पावकं तथा
पञ्चगव्यादि सर्वाणि प्रायश्चित्तार्थमेव च ८
शिवाष्टाक्षरमन्त्रेण शतक्रियाः समाचरेत्
हेमपुष्पं च कुम्भेषु योजयेद्देशिकोत्तमः ९
पश्चाच्छैलं च बेरं च तैलं गव्याभिषेचनम्
सर्वाभिषेकं विधिवत्पूर्णकुम्भाभिषेचनम् १०
धूपदीपादिवस्त्रं च सर्वालङ्कारमेव च
प्राणप्रतिष्ठितं चैव जीवन्यासं तथैव च ११
षडध्वा चार्चनं चैव पञ्चावरणमर्चयेत्
महानैवेद्यं विधिवत्पूर्णाहुतिं समाचरेत् १२
बलिभ्रमणमेवोक्तं यजमानस्य दर्शने
धूपदीपोपचारैश्च चुलुकोदकमेव च १३
आचार्यप्रियकरं चैव दशदानं तथैव च
ब्राह्मणान्भोजनैश्चैव स्वग्रामराजराष्ट्रके १४
अभिवृद्धिर्सर्वं विजयमिष्टकाम्यार्थं सिद्धयेत् १५
इति दीप्तागमे पूजास्थलप्रमादलिङ्गप्रतिष्ठाविधिपटलः सप्तनवतितमः

## अष्टनवतितमः पटलः
## शङ्खाभिषेकविधिः

शङ्खाभिषेचनं वक्ष्ये शृणु वह्ने विशेषतः

आयुःश्रीकीर्तिजयदं व्याधिनाशं रिपुक्षयम् १
धर्मार्थकाममोक्षार्थं पुत्रपौत्रविवर्धनम्
शान्तिकं पौष्टिकं प्रोक्तं सर्वपापविनाशनम् २
यजमानेप्सिते काले कुर्याच्छङ्खाभिषेचनम्
नानारोगनिवृत्त्यर्थं सिद्धयोगे तु कारयेत् ३
रोहिण्या शनिसंयुक्ते गुरुपुष्पे तथैव च
आदित्यहस्तसंयुक्ते भृगुरेवतिसंयुते ४
कुजेऽश्विनीसमायुक्ते बुधानूराधके तथा
सोमे वैष्णवसंयुक्ते यजमानानुकूलके ५
कुर्याच्छङ्खाभिषेकं तु पुष्ट्यर्थं सर्वकालके
अष्टम्यां च चतुर्दश्याममायां चैव सङ्क्रमे ६
यजमानस्य नक्षत्रे कुर्याच्छङ्खाभिषेचनम्
शङ्खं त्रिविधमित्युक्तं पुमान्नारी नपुंसकम् ७
मूलस्थूलं भवेन्नारी अग्रस्थूलं नपुंसकम्
मूलमग्रं समं चेत्तु पुंशङ्खमिति कीर्तितम् ८
शङ्खं चतुर्विधं ज्ञेयं ब्राह्मणादिक्रमेण तु
लाघवायतसद्भावं दीर्घाग्रं पृष्ठतः समम् ९
उदरं पूर्णमित्युक्तं ब्रह्मशङ्खमिहोच्यते
क्षत्रियं शङ्खमेवं तु ईषत्पीतनिभं तथा १०
मूलदीर्घं लघुप्रोक्तं वैश्यशङ्खमिति स्मृतम्
शूद्रशङ्खं लघुप्रोक्तं दीर्घाग्रं ह्रस्वपृष्ठकम् ११
ताम्रपर्णीनदीशङ्खं मध्यमं परिकीर्तितम्
गङ्गासागरजं शङ्खमुत्तमं तु प्रशस्यते १२
नर्मदासिन्धुसङ्गे तु अधमं शङ्खमुद्भवम्
दक्षिणावर्तकं शङ्खं जातिश्रेष्ठमिति स्मृतम् १३
तच्छङ्खं मध्यमे स्थाप्य शङ्खानि परितो न्यसेत्
पृष्ठे ब्रह्मादिदैवत्यं कुक्षौ वरुणमेव च १४
मुखे तु जाह्नवी प्रोक्तं शङ्खं चेन्द्राधिदैवतम्
शङ्खं वा शुक्तिकं वापि स्वप्रमाणैः प्रपूरयेत् १५

सौवर्णं राजतं कांस्यं मृण्मयं वाथ कारयेत्
पूर्वोक्तलक्षणे चैव जलेनाढकपूरितम्  १६
तदर्धं मध्यमं चैव तदर्धमधमं भवेत्
दक्षिणावर्तकं शङ्खं कारयेल्लक्षणान्वितम्  १७
पृष्ठाग्रं हेमरत्नादिभूषितं चातिसुन्दरम्
शङ्खस्नानं त्रिधा प्रोक्तं सामुद्रं साङ्गसाम्बुजम्  १८
सहस्रशङ्खं सङ्गाह्य स्नपनोक्तवदर्चयेत्
संस्नाप्य परमेशानं सामुद्रं चेति कीर्तितम्  १९
शङ्खं मध्ये तु संस्थाप्य कलशान्परितो न्यसेत्
पूर्ववत्स्नापयेच्छम्भुं शङ्खोदैः कलशोदकैः  २०
साङ्गं शङ्खाभिषेकं तु उदयाद्युदयान्तकम्
उदयास्तमनान्तं च शङ्खोदैरभिषेचयेत्  २१
शतं सहस्रमयुतं नियुतं शङ्खसंख्यया
कर्तुरिच्छावसाने वा शङ्खतोयाभिषेचनम्  २२
जलभाण्डे समापूर्य गङ्गामन्त्रैः समर्चयेत्
शङ्खेन स्नापयेच्छम्भुं साम्बुजं चेति कीर्तितम्  २३
सामुद्रे चैव साङ्गे च अयुतेनैव हावयेत्
हुत्वा शङ्खाभिषेकान्ते शान्तिहोमं तु कारयेत्  २४
मण्डपं कारयेद्धीमान्पूर्वोक्तविधिना सह
निर्दिष्टदिवसात्पूर्वं रात्रौ क्षीराभिषेचनम्  २५
नैवेद्यं दापयेच्छम्भोर्धूपदीपादिकं ददेत्
कौतुकं बन्धयेद्धीमानार्द्रवस्त्रेण वेष्टयेत्  २६
शङ्खाभिषेकं विज्ञाप्य पुष्पाञ्जल्या तु सन्निधौ
प्रातः स्नात्वा शुचिर्भूत्वा देशिकः शिष्यसंयुतः  २७
गोमयालेपनं कृत्वा पुण्याहप्रोक्षणं ततः
जलभाण्डं च शङ्खं च क्षालयेदस्त्रमन्त्रतः  २८
दर्भासनोपरि न्यस्य दिग्बन्धं चास्त्रमन्त्रतः
वस्त्रपूतोदकं चैव जलभाण्डे तु सङ्ग्रहेत्  २९
उदयादेव कर्तव्यं रात्र्यन्ते वा जलं ग्रहेत्

एलालवङ्गकर्पूरगन्धपुष्पैः प्रपूरयेत् ३०
अङ्गन्यासादिकं कृत्वा चान्तर्यागमथाचरेत्
त्रिपाद्याश्चोपरि स्थाप्य शङ्खं सर्वत्र देशिकः ३१
दारुणा यन्त्रपीठं वा शङ्खं तत्रैव विन्यसेत्
शालिभिः स्थण्डिलं कृत्वा सहस्रकलशोक्तवत् ३२
मण्डपं तु समभ्यर्च्य द्वारान्द्वाराधिपान्क्रमात्
स्थण्डिलस्य पुरोभागे गोमयालेपनं कुरु ३३
गन्धपुष्पाक्षतं कूर्चं तोयं दक्षे निधापयेत्
दीपाधारयुतं दीपं वामभागे निधाय च ३४
चतुरश्रं त्रिकोणं च षडश्रं वृत्तमेव च
पीतं रक्तं च कृष्णं च धूम्राभं मण्डलप्रभुम् ३५
प्रोक्षयेदस्त्रमन्त्रेण दिक्पालान्सम्प्रपूजयेत्
पश्चात्त्रिकोणे चाभ्यर्च्य मध्यमे वह्निमण्डलम् ३६
रुद्रविष्णुविरिञ्चांश्च त्रिकोणाग्रे समर्चयेत्
पात्राधारं न्यसेन्मध्ये चात्मतत्वं समर्चयेत् ३७
पश्चाच्छङ्खं समादाय क्षालयेदस्त्रमन्त्रतः
सन्धूप्य वाममन्त्रेण विद्यातत्वं च विन्यसेत् ३८
रागो नियति विद्या च कला कालश्च मोहिनी
तत्तन्नाम्ना समभ्यर्च्य पात्रं वै भानुमण्डलम् ३९
कूर्चं निक्षिप्य गायत्र्या वारुणं मन्त्रमुच्चरन्
गन्धपुष्पाक्षतान्यस्य गन्धद्वारेति मन्त्रतः ४०
विद्या चेश्वरसादाख्या शक्तिः शिव इति स्मृतम्
शिवतत्वं न्यसेन्मध्ये जपेद्भागीरथीमनुम् ४१
दिग्बन्धं चास्त्रमन्त्रेण कवचेनावकुण्ठयेत्
शक्त्यादिशक्तिपर्यन्तं तन्मानं सम्प्रपूजयेत् ४२
ध्यात्वा भागीरथीं मध्ये अर्धाङ्गीं च तरङ्गिकाम्
कृताञ्जलिपुटो भूत्वा सर्वाभरणभूषिताम् ४३
तरङ्गवस्त्रसंयुक्तां पीनोरुजघनस्तनाम्
ध्यायेद्गङ्गाम्बु विन्यस्य धूपदीपादिकं ददेत् ४४

मन्त्रशङ्खं समादाय स्थण्डिलोर्ध्वे तु विन्यसेत्
एवं क्रमेण चाभ्यर्च्य शङ्खं प्रति विशेषतः  ४५
अथवान्यप्रकारेण ब्रह्मशङ्खं प्रपूरयेत्
शङ्खं संस्थाप्य सर्वैश्च रुद्रसाहस्रनामभिः  ४६
अर्चयेद्गन्धपुष्पाद्यैर्धूपदीपदिकं ददेत्
पश्चाद्धोमं प्रकुर्वीत कुण्डे वा स्थण्डिलेऽपि वा  ४७
आधानादिविवाहान्तमग्निकार्योक्तमार्गतः
समिदाज्यान्नलाजैश्च शालिमुद्गगुलैस्तिलैः  ४८
नालिकेरफलापूपैर्हुत्वा जाह्नविमन्त्रतः
प्रत्येकं षोडशं हुत्वा मूलेनैव शतं हुनेत्  ४९
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत्
ऋगाद्यध्ययनं कुर्युर्ब्राह्मणा रुद्रसङ्ख्यकाः  ५०
पश्चाल्लिङ्गान्तिकं गत्वा द्वारपूजां समाचरेत्
पञ्चगव्यामृतैः स्नाप्य पायसान्नं निवेदयेत्  ५१
पश्चाच्छङ्खं समादाय वाहयेच्छिष्यमूर्धनि
सर्ववाद्यसमायुक्तं बाह्ये धामप्रदक्षिणम्  ५२
गर्भगेहं प्रविश्याथ स्नात्वा मन्त्रोदकं गुरुः
पश्चान्नीराजनं कृत्वा ब्रह्मशङ्खाभिषेचनम्  ५३
दशाक्षरं समुच्चार्य पश्चाद्गङ्गामनुं जपेत्
श्रीसूक्तं शिवसङ्कल्पं स्नानकाले जपेद्बुधः  ५४
पश्चात्साहस्रधाराभिः स्नापयेल्लिङ्गमूर्धनि
शङ्खं तोयैः समापूर्य स्रावयेल्लिङ्गमूर्धनि  ५५
सहस्रधाराभिषेकं तूक्तमन्त्रैः शनैः शनैः
सहस्रसुषिरं चक्रं गङ्गाजलमुदीरयन्  ५६
स्नानान्ते तु विशेषेण प्रभूतहविषं ददेत्
शान्तिहोमं ततः कृत्वा धूपदीपादिकं ददेत्  ५७
वेदैः स्तोत्रैश्च नृत्तैश्च संतोष्य परमेश्वरम्
पश्चात्साध्यं समाहूय रागशान्त्यर्थकारणम्  ५८
स्नानतोयं समादाय स्थाण्डिले साध्यसन्निधौ

हस्तन्यासादिकं कृत्वा ब्रह्माङ्गं विन्यसेत्ततः ५९
धाराचक्रं समादाय साध्यस्य शिरसोपरि
विन्यस्य शङ्खमादाय स्नानतोयेन पूरयेत् ६०
पूर्ववन्मन्त्रमुच्चार्य सर्वाङ्गं सेचयेद्बुधः
शङ्खं वै तावत्संख्यं च तज्जलेनैव सेचयेत् ६१
भस्मन्यासादिकं सर्वं पूर्वोक्तविधिना कुरु
नीराजनं ततो दत्त्वा विन्यसेत्तु चतुष्पथे ६२
बृहत्सामेतिमन्त्रेण भस्मोद्धूल्य विचक्षणः
सर्वरोगविनिर्मुक्तः सर्वपापाद्विमुच्यते ६३
एवं यः कुरुते भक्त्या स पुण्यां गतिमाप्नुयात् ६४
इति दीप्तागमे शङ्खाभिषेकविधिपटलः अष्टनवतितमः

## नवनवतितमः पटलः

### प्रयाश्चित्तविषयाः

वेदविक्रयको वापि ग्रन्थविक्रयकोऽपि वा
पापी रोगी परिभ्रष्टो नास्तिकः श्रुतिदूषकः १
अङ्गहीनस्तथा कुब्जो बधिरः पङ्गुकस्तथा
कुष्ठादिव्याधिसंयुक्तः शिवद्रव्यापहारकः २
गुरुद्रव्यापहारी च गुरुद्रोही च पातकः
एतैर्दृष्टिर्न कर्तव्या दृष्टा पूजा तु निष्फला ३
त्रिकाले तु पटं नीत्वा स्नाने गन्धाक्षतार्चने
धूपे दीपे च नैवेद्ये पटमाच्छादयेत्तदा ४
शेषकालेषु सर्वेषु ततो न परिवेष्टयेत्
प्राणप्रतिष्ठासु तथाष्टबन्धे बलिप्रदाने च बहिर्गतेऽपि ५
नैवेद्यकालेऽपि यथा क्रमेण द्वारं तु कुर्याच्च कवाटबन्धनम्
प्रासादविस्तारसमानसूत्रं सोमस्य सूत्रं दिशि सोमसूत्रकम् ६
सूत्राद्बहिर्लङ्घनतो न दोषः सदोषमभ्यन्तरलङ्घने च
अश्वात्थोदुम्बरप्लक्ष ++वैष्णवतोरणाः ७
प्लक्षोदुम्बरन्यग्रोधपिप्पलाः शैवतोरणाः

अष्टबन्धविशीर्णे तु महेशं नार्चयेत्सुधीः ८
आगमे धीमतस्तस्मात्क्षिप्रं तं निक्षिपेद्बुधः
तद्विभिन्ने कृता पूजा विकला सा भवेद्यतः ९
राजराष्ट्रप्रभूणां च विनाशमवधीयते
कृमिकीटादि तन्नाले जाले यदि महद्भयम् १०
अष्टबन्धं विना देविदेवत्वं च न विद्यते
तद्देवं पूजयेद्यस्तु सा पूजा निष्फला भवेत् ११
विना दर्शनमात्रेण पैशचत्वं प्रपद्यते
तस्मिन्पिशाचरक्षांसि प्रविशन्ति न संशयः १२
एवं ज्ञात्वा ततो मन्त्री अष्टबन्धं प्रकल्पयेत्
सिकताबलकार्पसलाक्षाचूर्णसमं स्मृतम् १३
एषामेव द्विभागे तु हरीतक्यास्तु चूर्णकम्
हरीतक्या द्विभागं तु चूर्णं सर्जरसस्य तु १४
न तिथिर्न च नक्षत्रं न मूढं गुरुशुक्रयोः
अष्टबन्धविशीर्णे तु सद्य एव तु निष्कृतिः १५
तस्मात्सर्वप्रयत्नेन विशीर्णे क्षिप्तमञ्जसा
संवत्सरोत्सवे हीने सुदिने कारयेद्बुधः १६
पौर्णम्यां दर्शे सङ्क्रान्त्यामुत्सवं कारयेद्गुरुः
मासे मासे तु कर्तव्यमष्टमासमथापि वा १७
षण्मासे वा प्रयत्नेन उत्सवं तु करोति यः
सर्वपापविनिर्मुक्तः शिवसायुज्यमाप्नुयात् १८
आरम्भे सुदिनं ज्ञात्वा उत्सवं कारयेद्गुरुः
अस्तंगते भृगौ जीवे प्रारम्भं चोत्सवं त्यजेत् १९
ग्रस्तोत्पातादिसंप्राप्ते प्रतिष्ठामुत्सवं त्यजेत्
कारयेद्यदि मूढात्मा राजा राष्ट्रं विनश्यति २०
वत्सरे वत्सरे चैव उत्सवं तु करोति यः
तस्य पापानि नश्यन्ति वर्धन्ते सर्वसंपदः २१
एवं यो विधिना कुर्यादुत्सवं भक्तिमान्नरः
सर्वान्कामानवाप्नोति इह लोके परत्र च २२

ये पश्यन्ति रथारूढमुमया सहितं शिवम्
ते सर्वे पापनिर्मुक्ता शिवसायुज्यमाप्नुयात्  २३
रथदर्शनमात्रेण सर्वपापैः प्रमुच्यते
रथस्य चक्रिणं दृष्ट्व पुनर्जन्म न विद्यते  २४
इति दीप्तागमे प्रयाश्चित्तविषयपटलः नवनवतितमः

शततमः पटलः
नालिकेरप्रायश्चित्तविधिः

एवं यौवनं कर्तव्यं बालवृद्धं न कारयेत्
भग्नं वा नेत्रहीनं वा स्थूलसूक्ष्मविहीनकम्  १
जलवर्जितहीनं वा कषायं विकटं भवेत्
यौवनं नालिकेरं च गृहीत्वा देशिकोत्तमः  २
सर्वकार्यार्थसिद्ध्यर्थं प्रथमं गुरुपूजितम्
शिरस्ताडनमेवोक्तं तार्तीयं च विनायकम्  ३
क्रियां ब्रह्मविशेषेण पाद्यमाचमनं ददेत्
केशादिसर्वदोषैश्च क्षालनं नालिकेरकम्  ४
प्रादेशमुन्नघ्नं टाडयेत्तु त्रियम्बकम्
द्विखण्डं सर्वसिद्धिः स्यात्सर्वकार्यार्थसाधकम्  ५
नालिकेरजले हीने क्रमेण कार्यसिद्धिदम्
प्रधानचक्षुरेखायां देशिको नाशनं भवेत्  ६
++ण चक्षुरेखायां कर्ता भर्ता विनश्यति
छिन्नं चेज्जीर्णसंयुक्तं सर्वकार्यार्थभिन्नकम्  ७
एवं रहस्यमित्युक्तं देवदेवेन प्रार्थयेत्
द्विगुणं नालिकेरं तु नैवेद्यं तु प्रदापयेत्  ८
तद्दोषशान्तये तस्माद्गणेश + ++++  ९
इति दीप्ते नालिकेरप्रायश्चित्तविधिपटलः शततमः

# एकाधिकशततमः पटलः

## रथोत्सवविधिः

अथातः संप्रवक्ष्यामि शिवोत्सवविधिं परम्
सर्वपापहरं दिव्यं शृणु वह्ने विशेषतः १
पञ्चधा प्रोच्यते सोऽपि शैवं गौनादिभेदम्
एकाहं शैवमुद्दिष्टं त्र्यहं गौणमिति स्मृतम् २
पञ्चाहं भौतिकं प्रोक्तं सप्ताहं भौवनं तथा
नवाहं दैविकं प्रोक्तमेतेषां विधिरुच्यते ३
शैवोत्सवं बलिद्वन्द्वं गौणे षड्बलिमाचरेत्
भौतिके भौवने चैव बलिर्दश चतुर्दश ४
अष्टादशबलिः कार्यो दैविके तु हुताशन
ध्वजारोहणपूर्वश्च भेरीताडनपूर्वकः ५
अङ्कुरार्पणपूर्वं च त्रिविधास्ते भवन्ति हि
ध्वजमारोपयित्वाग्नि भेरीं रात्रौ तु ताडयेत् ६
उत्सवस्य तु रात्रौ तु बीजनिर्वाप उच्यते
ध्वजारोपणमन्ते तु कर्तव्यं प्रथमे निशि ७
एवं समासतः प्रोक्तमङ्कुरार्पणपूर्वकम्
आध्येषु त्रितयेष्वेषु न ध्वजारोपणक्रिया ८
भौवने दैविके चापि ध्वजारोपणमाचरेत्
नवाहत्रितये चापि सप्ताहत्रितयेऽपि वा ९
मार्गशीर्षे च मासे तु आर्द्रान्तं तु शिवोत्सवम्
पुष्यमासे तु पुष्यान्तं मघान्तं माघमासके १०
फाल्गुने चोत्तरान्तं तु चैत्रे चित्रान्तमुच्यते
वैशाखे तु विशाखान्तं मूलान्तं ज्येष्ठमासके ११
आशाढे चोत्तराषाढा श्रवणे श्रवणान्तकम्
पूर्वभाद्रा तथाश्लेषा पूर्वभाद्रान्तमुच्यते १२
अश्वान्तमश्वयुग्मासे कार्तिके कृत्तिकान्तकम्
शैवादि चोत्सवादीनां यावत्सङ्ख्या विधीयते १३
तत्पूर्वरात्रिमारभ्य कारयेदुत्सवं बुधः

प्रतिष्ठायामुत्सवे वा सायादिदिनमारभेत् १४
निशि सायं दिवा प्रात इति शास्त्रस्य निश्चयः
ध्वजे ध्वजं न कर्तव्यं कर्तव्यं वृषभध्वजम् १५
पुनरारब्धदेवानामुत्सवं न च दोषभाक्
सम्यक्शिवोत्सवं मध्ये प्रारब्धे सर्वदोषहृत् १६
शिवयागं चान्ययागमेककाले कृतं यदि
न फलं तदेवाप्नोति चैकस्मिन्नेकवस्तुनि १७
उत्सवारम्भकाले तु रथादीन्कारयेत्क्रमात्
यन्त्रडोलान्दृधान्मुक्तान् यन्त्ररङ्गांस्तथैव च १८
अश्वयन्त्रान् सिंययन्त्रान् हस्तियन्त्रांस्तथैव च
यन्त्रदेवालयांश्चैव यन्त्रमण्डपिकानपि १९
भूतयन्त्रान् ऋषियन्त्रान् दीपयन्त्रांस्तथैव च
कृत्वा मनोहरान्सर्वान्नानावस्त्रैर्विभूषितान् २०
नानावितानसंयुक्तान्नानाध्वजसमकुलान्
चित्रवस्त्रेण संबधान्नानागात्रेण संयुतान् २१
स्वर्णदाम्ना पुष्पदाम्ना मुक्तादाम्ना त्वलङ्कृतम्
एतान्सर्वांश्च कृत्वा तु ततः कर्म समारभेत् २२
वृषयागमहं वक्ष्ये शृणु वह्ने विशेषतः
ध्वजाङ्कुरो ध्वजाङ्गं स्याद् ध्वजात्पूर्वदिनं नयेत् २३
नवाहे वाथ सप्ताहे पञ्चाहे त्रिदिनेऽपि वा
सद्योऽङ्कुरार्पणं वापि शिवं संपूज्य चारभेत् २४
तिष्यर्क्षे मासि निश्चित्य तत्पूर्वे त्रिगुणेऽपि वा
द्विगुणे तद्दिने वापि ध्वजारोपणमारभेत् २५
सप्तहस्तं ध्वजपटं कन्यासं परिकीर्तितम्
अष्टहस्तपटं मध्यमुत्तमं नवहस्तकम् २६
आयामं चैवमाख्यातं पञ्चभागैकविस्तरम्
विस्तारेण समं पुच्छं पुच्छार्धं शिखरं भवेत् २७
सितं सूक्ष्मं च संश्लक्ष्णं पटं कार्पाससंभवम्
वेत्रद्वयसमायुक्तं घण्टानादविभूषितम् २८

दीपचामरछत्राढ्यं वृषभं लेखयेद्बुधः
ब्राह्मणस्य ध्वजं श्वेतं रक्तं स्यात्क्षत्रियस्य वा २९
चित्रं विलेखितं शूद्रे सर्वेषां श्वेतमेव वा
ध्वजस्थानमहं वक्ष्ये शृणु वह्ने विशेषतः ३०
पीठगोपुरयोर्मध्ये पीथाग्रे वृषभाग्रके
ध्वजस्थानमिदं प्रोक्तं ध्वजदण्डमथ शृणु ३१
चन्दनं क्रमुकं वापि देवदारुं च वेणुजम्
त्वक्सारमन्तःसारं वा दण्डं संग्रह्य देशिकः ३२
वक्रं बालत्वसत्त्वं च कृमिकोटरवर्जितम्
प्रासादस्य समं वापि गोपुरस्य समं तु वा ३३
प्रासादग्रीवमानं वा वृषभस्थलमीरितम्
द्वितायान्तं त्रितायान्तं गोपुरग्रीवकान्तकम् ३४
विंशद्धस्तप्रमाणं वा द्वादशं दशहस्तकम्
आयामं ध्वजदण्डस्य प्रोक्तं मात्राङ्गुलेन तु ३५
सप्तविंशाङ्गुलं नाहं ध्वजदण्डमथोत्तमम्
मध्यमं तु चतुर्विंशं द्वाविंशं कन्यसं भवेत् ३६
अष्टषट्पञ्चमात्रं वा वेणुदण्डस्य नाहकम्
पञ्चशद्द्वादशान्तान्तं मूलनाहं विधीयते ३७
एकांशेनोनमग्रं स्यात्तथा दण्डाग्रमिष्यते
उभयोर्योगसिद्ध्यर्थं स्कन्धत्रयमथारभेत् ३८
स्कन्धद्वयं वा तद्दैर्घ्यं द्वादशाङ्गुलमायमः
षट्त्रिंशन्मात्रपर्यन्तं स्कन्धदैर्घ्यं प्रकल्पयेत् ३९
सप्ताङ्गुलात्समारभ्य गायत्रीनाङ्गुलावधिः
स्कन्धविस्तारमुद्दिष्टं मूलेऽग्रे तत्त्रिभागतः ४०
अर्धेन वा त्रिपादेन दर्व्याकारो यथातथा
मूलेऽग्रे सुषिरोपेतो दण्डयष्ट्यानुरूपतः ४१
अर्धच्छिद्रं द्वयस्कन्धं प्रान्ते यष्ट्याग्रदेशके
दण्डप्रान्ते विधेयं स्याद्वलयं स्कन्ध एव च ४२
दण्डं चात्र प्रमाणान्तं दण्डाग्राद्वलयस्थितिः

तदर्धं वलयादूर्ध्वं यष्ट्यग्रं परिकीर्तितम् ४३
कृते प्रासादपुरतो मण्डपे संस्कृते शुभे
ध्वजारोहणपूर्वेद्युर्निशायामधिवासयेत् ४४
शिवं संपूज्य विधिवद्विज्ञाप्योत्सवमुत्तमम्
वृषस्थानमलङ्कृत्य वितानध्वजचामरैः ४५
फलपुष्पादिभिश्चैव धूपदीपैरलङ्कृतम्
उत्तराभिमुखो भूत्वा सुखासीनस्तु देशिकः ४६
अङ्गन्यासं करन्यासं पूर्वोक्तविधिना चरेत्
ततो नवपदं कृत्वा कलशांस्तत्र विन्यसेत् ४७
ससूत्रकूर्चवस्त्रेषु कलशेषु यथाक्रमम्
विद्येशान्पूजयेदष्टौ मध्यमे कलशे तथा ४८
वृषमुक्षं गोपतिं च शृङ्गिणं नन्दिनं तथा
ततो वृषपतिं चैव वृषभं शङ्कुकर्णकम् ४९
महोदरं यजेत्तत्र मध्यपूर्वादिषु क्रमात्
तस्याग्रे स्थण्डिलं कुर्याद्वालुकैर्हस्तमात्रकम् ५०
शिवाग्निं जनयेद्धीमानग्निकार्योक्तमार्गतः
तत्रावाह्य वृषं साङ्गमुपचारैश्च पूजयेत् ५१
बिल्वदारुसमित्सर्पिश्चरुलाजयवान् गुरुः
वृषमूलेन हुत्वाथा कुर्याद्रक्षां समन्ततः ५२
वृषाधिवासनं प्रोक्तं ध्वजस्यारोहणं शृणु
प्रातःकाले पटं पूज्य कलशांश्च यथाविधि ५३
हुत्वा वसुशतं चाग्नौ पूर्णहुतिमथाचरेत्
परिचारकमाहूय प्रोक्षयेदस्त्रवारिणा ५४
एकवासापरीतं च सोत्तरीयांशुमालिनः
पात्रे तण्डुलपूर्णे तु विन्यस्य ग्राहयेत्पटम् ५५
शिबिकायां तमारोप्य कूर्याद्ग्रामप्रदक्षिणम्
शूलमग्रे नयेत्तत्र सर्वालङ्करसंयुतम् ५६
आचार्यश्चाग्रतो गच्छेद्यजमानस्तु पृष्ठतः
एवं प्रदक्षिणीकृत्य ध्वजस्थानमथा नयेत् ५७

ध्वजं संप्रोक्ष्य मूलेन स्थण्डिलोपरि संस्थितम्
पूजयित्वा विधानेन वृषगायत्रिमन्त्रतः  ५८
ग्राह्याधिवास्य कलशान् वृषविद्येश्वरात्मकान्
घटाद् ध्वजस्य तन्मध्ये वृषबीजं विनिक्षिपेत्  ५९
वृषगायत्रिमन्त्रेण प्रोक्षयेत्कलशोदकैः
पूजयित्वा यथान्यायं नैवेद्यान्तं विचक्षणः  ६०
ततो ध्वजं समुद्धृत्य यन्त्ररज्ज्वा तु देशिकः
वृषमारोपयेत्पश्चात्सर्ववाद्यसमन्वितः  ६१
ब्राह्मणेभ्यस्तदा दद्याद्दक्षिणां च विशेषतः
पटं बद्ध्वा विधानेन रज्जुमूलान्तमेव च  ६२
प्रदक्षिणाक्रमेणैव वेष्टयेद्रज्जु वस्त्रकैः
ब्राह्मणेभ्यस्तदा दद्याद्दक्षिणांश्च विशेषतः  ६३
वृषध्वजावरोहान्तं द्विकालं पूजयेद्गुरुः
दिक्ष्वष्टसु बलिं दद्याद् ध्वजमूले यथाविधि  ६४
ध्वजस्य स्थापनं प्रोक्तं सर्वशान्तिकरं परम्
अतः परं प्रवक्ष्यामि भेरीताडनमुत्तमम्  ६५
स्थण्डिलं द्वितयं कुर्याद्ध्वजस्य पुरतो गुरुः
त्रिशूलं तत्र विन्यस्य भेरीं वस्त्रेण वेष्टिताम्  ६६
तदग्रे स्थण्डिलं स्थाप्य त्रिशूलं पूजयेत्क्रमात्
रुद्रं च मध्यमे पत्रे ब्रह्माणं दक्षिणे तथा  ६७
विष्णुं च वामपत्रे तु दण्डमध्यमे प्रभञ्जनम्
रौद्रीं ज्येष्ठां तथा वामां मूलभागे प्रपूजयेत्  ६८
भेरीं मध्यमे यजेद्रुद्रं ब्रह्माणं प्रपूजयेत्
विष्णुं च वामवक्त्रे तु वलये वामदक्षिणे  ६९
चन्द्रादित्यौ यजेन्मन्त्री मातुः किलेषु सप्तसु
नवैकादशकिलेषु ग्राहान् रुद्रान्यथाक्रमम्  ७०
वासुकिं चर्मतन्तौ तु प्रहारे चार्चयेद्गुरुः
नैवेद्यान्तं समभ्यर्च्य प्रथमं देशिकः स्वयम्  ७१
बिन्दुरूपमपि ध्यायेत्त्रिधा चास्त्रेण ताडयेत्

नादतत्त्वं परं ध्यात्वा तत्क्षणाद्गतकल्मषाः ७२
भवन्ति प्राणिनः सर्वे वाद्यादीन्विनिधाय च
पश्चाद्वादकमाहूय वादयेत्तु विशेषतः ७३
सर्वान्देवान्समाहूय तालभेदेन देशिकः
देवानां हर्षसिद्ध्यर्थं कुर्याद्भूतबलिं तथा ७४
भेरीसंताडनं प्रोक्तं हुताशन समासतः
अतः परं प्रवक्ष्यामि मङ्गलाङ्कुरमुत्तमम् ७५
उत्सवे स्नपने चैव स्थापने प्रोक्षणे तथा
अन्ये च मङ्गले कार्ये मङ्गलाङ्कुरमुच्यते ७६
ध्वजाङ्कुरं तु प्रथमं द्वितीयं चोत्सवाङ्कुरम्
तीर्थाङ्कुरं तृतीयं स्यादुत्सवस्य विधीयते ७७
मृत्तिकामाहरेत्पूर्वं बीजनिर्वापणाय च
आचार्यः पुरतो गच्छेत्सर्वालङ्कारभूषितः ७८
नानाध्वजसमायुक्तं सर्ववाद्यसमन्वितम्
नानाच्छत्रसमायुक्तं बिम्बं च तदनुव्रजेत् ७९
प्राङ्मुखोदङ्मुखो वापि पश्चिमे वा विशेषतः
गत्वा पुष्पवनं वापि नदीतीरमथापि वा ८०
तटाकं वाथ वापी वा उद्धृत्य मृदमाहरेत्
यथाविधि समनीय बीजनिर्वापमाचरेत् ८१
शरावाः पालिकाः स्युश्च घटिकास्त्रिविधास्तथा
सौवर्णा राजता वापि ताम्रजा मृण्मयास्तु वा ८२
ईशविष्णुविरिञ्चाश्च पालिकाद्यधिदेवताः ८३
नीवारमुद्गतिलमाषकमुद्गशिम्ब कुद्गुकुलत्थनिष्पावकसर्षपाणि
संक्षाल्य धीमान्पयसा हृदा च संवाप्य विद्वान् शिवबीजमन्त्रैः ८४
तिलाश्चापि तथा मुद्गा सर्षपा शाल्यस्तथा
प्रियङ्गुशिम्बनिष्पावमाषश्यामकुलस्थकाः ८५
बीजवापे समुद्दिष्टाः शैवद्रव्याश्च जातयः
द्रव्याण्येतानि पात्रेषु कृत्वा प्रक्षालयेत्पृथक् ८६
निवेद्यान्तं समभ्यर्च्य बलिकर्म समाचरेत्

शुक्लाः पीताश्चोर्ध्वमुखा अङ्कुराः स्युः शुभप्रदाः  ८७
श्रेयोविघ्नकरा धूम्रा वक्राश्चापि तथैव च
एवं ज्ञात्वा फलं सम्यगशुभे शान्तिमाचरेत्  ८८
अतः परं प्रवक्ष्यामि यागमण्डपलक्षणम्
गेहस्य पुरतः कुर्याद्याम्ये वा वारुणे तथा  ८९
सौम्यायामीशदिग्भागे कुर्यादाग्नेयगोचरे
त्रिंशद्धस्तप्रमाणं वा एकविंशतिहस्तकम्  ९०
सप्तोत्तरदशं हस्तं प्रमाणं नवहस्तकम्
सप्तहस्तप्रमाणं वा कारयेन्मण्डपं शुद्धिः  ९१
चतुरश्रसमायुक्तं निम्नोन्नतविवर्जितम्
चतुर्द्वारसमायुक्तं तोरनैरुपशोभितम्  ९२
नानावितानसंयुक्तं पताकाभिरलङ्कृतम्
मध्ये वेदिं प्रकुर्वीत श्लक्ष्णां दृष्टिमनोहरम्  ९३
कुण्डान्यलिन्ददेशे तु दिग्विदिक्षु यथाक्रमम्
चतुरश्राणि वृत्तानि कुर्यात्प्रागुक्तवर्त्मना  ९४
आचार्यकुण्डं मध्ये तु सलिलेशसमीरयोः
कृत्वैवं विधिवत्सर्वं संस्कारं मण्डपस्य च  ९५
पूर्वोक्तमण्डपे रम्ये ह्यधिवासनमारभेत्
अतः परं प्रवक्ष्यामि अस्त्रयागविधिक्रमम्  ९६
आचार्यः पुत्रकश्चैव समयी साधकस्तु वा
स्नानं कृत्वा विशेषेण पूर्वोक्तविधिना सह  ९७
देवाग्रे स्थण्डिलं कृत्वा अस्त्रमन्त्रेण प्रोक्षयेत्
सुस्निग्धान्सुदृढान्कुम्भान्हैमकान् राजतानपि  ९८
ताम्रजान्मृण्मयांश्चापि निष्कलङ्कान्मनोहरान्
सकूर्चान्सपिधानांश्च सवस्त्रान्सफलान्वितान्  ९९
पूरयेद्गन्धतोयेन स्थण्डिलोपरि विन्यसेत्
वर्धनीमुत्तरे स्थाप्य परितोऽष्टघटांस्ततः  १००
शिवकुम्भे शिवं कल्प्य वर्धन्यां मनोन्मनीम्
अनन्तप्रमुखानष्टौ घटेषु परितो न्यसेत्  १०१

शिष्याणां परिचाराणां शिरसा वाहयेद् घटान्
त्रिशूलाद्यायुधान्सर्वान्कृत्वा तु पुरतो व्रजेत् १०२
शङ्खदुन्दुभिनिर्घोषैः ब्रह्मघोषैः समाकुलम्
धामप्रदक्षिणं कृत्वा प्रविशेद्यागमण्डपम् १०३
वेदिकामध्यतश्चैव कुर्वीत स्थण्डिलं सुधीः
अष्टद्रोणमिति व्रीहिं तदर्धमिति तण्डुलैः १०४
द्रोणद्वयतिलैर्लाजैरलङ्कृत्य यथाक्रमम्
शिवादिकलशांस्तत्र विन्यसेद्देशिकोत्तमः १०५
त्रिणेत्रं च चतुर्बाहुं सर्वाभरणभूषितम्
दिव्याम्बरधरं देवं जतामकुटमण्डितम् १०६
कृष्णापरशुसंयुक्तं वरदाभयहस्तकम्
एवं ध्यात्वा तु मनसा कुम्भमध्ये शिवं यजेत् १०७
वर्धनीं हेमसंयुक्तां कल्पयेदुत्तरे विभो
द्विभुजां चरुवदनां सुस्तनां तु सुयौवनाम् १०८
दुकूलवसनां शान्तां किञ्चित्प्रहसिताननाम्
सर्वाभरणसंयुक्तां वर्धनीमध्यमे न्यसेत् १०९
अभितः कलशानष्टौ केसरे तु विनिक्षिपेत्
वेदिकोपरि मध्ये तु शूलं संस्थाप्य पूजयेत् ११०
अस्त्राणि वज्रकादीनि पद्मबाह्ये विनिक्षिपेत्
गन्धचन्दनतोयेन लोकपालाधिदेवतान् १११
पूर्वस्यां स्थापयेद्वज्रमाग्नेय्यां शक्तिमेव च
दण्डं तु दक्षिणे स्थाप्य खड्गं निर्ऋतिगोचरे ११२
पाशं तु पश्चिमे स्थाप्य वायव्यां त्वङ्कुशं न्यसेत्
गदास्त्रं सौम्यदिग्भागे शूलमीशानगोचरे ११३
पद्ममीशानदिग्भागे चक्रं निर्ऋतिगोचरे
पूजयित्वा यथान्यायं गन्धपुष्पादिभिस्तथा ११४
दर्पणं पूर्णकुम्भं च वृषभं युग्मचामरम्
श्रीवत्सं स्वस्तिकं शङ्खं दीपं चैवाष्टमङ्गलम् ११५
अष्टमङ्गलरूपाणि वेदिबाह्ये तु पूजयेत्

एवं संपूज्य विधिना गच्छेत्कुण्डान्तिकं ततः  ११६
आचार्यकुण्डे प्रथमं शिवाग्निं जनयेद्गुरुः
तदग्निं सर्वकुण्डेषु निधायाग्निमुखं चरेत्  ११७
अग्निकार्योक्तमार्गेण पञ्चब्रह्मषडङ्गकैः
द्रव्याणि समिदादीनि हुत्वा होमं समापयेत्  ११८
होमान्ते च बलिं कुर्याच्छृणु वह्ने समासतः
त्रिशूलं च समादाय बलिकर्म समाचरेत्  ११९
नानावाद्यरवोपेतं छत्रचामरसंयुक्तम्
पताकाध्वजसंयुक्तं नृत्तगीतसमन्वितम्  १२०
बलिं कृत्वा यथान्यायं प्रविशेद्यागमण्डपम्
एवं सायं दिवा कुर्याद्बल्यन्ते चोत्सवं तथा  १२१
बलिक्रममिति प्रोक्तं ततो यानक्रमं शृणु
प्रथमं शिबिकायानं मयूरं तु द्वितीयकम्  १२२
डोलायन्त्रं तृतीयं स्याद्वाजियन्त्रं चतुर्थकम्
पञ्चमं वृषयन्त्रं स्यात्सिंहयन्त्रं तु षष्ठकम्  १२३
सप्तमं गजयन्त्रं स्याद्यानक्रम इतीरितम्
एवं प्रतिदिनं कुर्यादेकैकं यानमुत्तमम्  १२४
महारथोत्सवं कुर्यात्तदन्त्यदिवसे तथा
तद्विधिं च प्रवक्ष्यामि सर्वपापहरं शुभम्  १२५
सुलक्षणसमोपेतं कारयित्वा महारथम्
निपुणैः शिल्पिभिस्तज्ज्ञैरुत्सवार्थं हुताशन  १२६
कारुं संतोष्य विविधैर्वस्त्रादिपरिभूषणैः
रथस्थितिं शिल्पिमुखाज्ज्ञात्वा देशिकसत्तमः  १२७
विघ्नेशं पूजयेदादौ मधुरैर्मोदकादिभिः
ततो नान्दीमुखं कृत्वा पुण्याहं वाचयेद्गुरुः  १२८
स्यन्दनस्याथ संस्कारं कुर्यात्प्रागुक्तमार्गतः
वास्तुं संपूज्य विधिवत्कलशैः स्नापयेद्रथम्  १२९
सहस्रैर्वा तदर्धैर्वा तदर्धार्धैरथापि वा
सकूर्चैः साधितं सम्यग्वस्त्रादिभिरलङ्कृतैः  १३०

अघोरास्त्रं जपेन्मन्त्री स्यन्दनं स्पृश्य पाणिना
प्रायश्चित्ताख्यहोमं च कुर्वीत रथदक्षिणे १३१
दिशाहोमं ततः कुर्यात्प्राच्यादि यथाक्रमम्
तत्तद्दिक्पालवर्णाशा बद्ध्वा तद्दिक्षु पूजयेत् १३२
बलिं दद्यात्ततो ध्यायेत् कलात्मानं रथं तदा
तत्र देवान्समावाह्य रथस्याङ्गेषु देशिकः १३३
अक्षेषु माया चन्द्रार्कौ चक्रेषु परिपूजयेत्
कीलकेषु ऋतुंश्चैव रन्ध्रेष्वाकाशमेव च १३४
महादण्डद्वये शक्तिमाधाराख्ये यथाविधि
पट्टिकासु तथा रुद्रान् गात्रतद्बन्धकेषु च १३५
धर्मादीनर्चयेन्मन्त्री वायुं गात्रान्तमन्तरे
अरेषु द्वादशादित्यान्शलाकानचलानपि १३६
रथप्रासादिशिखरे स्तूपिकायां सदाशिवम्
तत्पार्श्वेषु चतुर्दिक्षु पूजयेच्च यथाक्रमम् १३७
षण्मुखं दक्षिणामूर्तिं हरिं च चतुराननम्
शूलपाणिं परशुपाणिं द्वारेषु परिपूजयेत् १३८
रथाप्रान्तेषु दिक्पालान्पूजयेच्च विशेषतः
दलेषु पूजयेदष्ट विन्यसेत्परितः क्रमात् १३९
जयं च विजयं चैव तदग्रे पार्श्वयोस्तथा
दिक्ष्वष्टसु वसूनष्टौ स्तम्भेषु परिपूजयेत् १४०
चतुर्दिक्षु चतुर्वेदान् स्यन्दनस्य यथाक्रमम्
ब्रह्माणं सारथिस्थाने हर्येषु मरुतः पुनः १४१
मुखे वरुणमभ्यर्च्य रथस्यारोहणं प्रति
जठरेन्दुपदे नीलं + + + + + + + + १४२
देवानेतान्पृथङ्मन्त्री स्नापयेत्कलशोदकैः
गन्धपुष्पाक्षतैर्धूपैः दीपैश्च परितोषयेत् १४३
गुलान्नैः कृसरान्नैश्च फलैर्नानाविधैरपि
भक्ष्यैर्भोज्यैश्च विविधैरुपहारैः प्रतोषयेत् १४४
भूतक्रूरेण हविषा बलिं दद्याद्विशेषतः

कृत्वैवं विधिवत्सर्वं रात्रौ तमधिवासयेत्  १४५
अथ प्रातर्विशुद्धात्मा होमं कृत्वा बलिं हरेत्
महेश्वरं समभ्यर्च्य रथस्यारोहणं प्रति  १४६
प्रार्थयेत्परया भक्त्या पार्वतीसहितं प्रभुम्
देवदेवजगन्नाथ भक्तानामभयप्रद  १४७
रथस्यारोहणं कर्तुमागच्छ परमेश्वर
इति संप्रार्थ्य गौरीशं सर्वाभरणभूषितम्  १४८
दिव्याम्बरधरं दिव्यपुष्पमालाभिरञ्जितम्
शिबिकायां समारोप्य गिरिजासहितं शिवम्  १४९
यानान्तरेऽपि वारम्भे चित्रवस्त्रैरलंकृते
सर्वातोद्यसमायुक्तमानयेत्स्यन्दनान्तिकम्  १५०
गच्छन्तमनुगच्छन्ति सेन्द्रा देवा महाबलाः
तत्प्रियाः ++ यश्चैव पार्वति यान्ति वै  १५१
त्रिशः प्रदक्षिणीकृत्य रथं वाद्यरवैः सह
वल्लिकाभिः पताकाभिः पुष्पमालाविभूषितम्  १५२
इक्षुभिः कदलीभिश्च दर्पणैः पूर्णकुम्भकैः
तोरणैश्च वितानैश्च छत्रैः सम्यगलङ्कृतम्  १५३
चन्दनागरुकर्पूररसैः सिक्तं समन्ततः
घण्टाभिः किङ्किणीभिश्च ध्वजैश्च परिभूषितम्  १५४
फलैर्नानाविधैश्चैव मुक्तामालाभिरेव च
धूपैर्गुग्गुलसंभूतैः धूपितं च समन्ततः  १५५
बीजाङ्कुरैः स्वर्णदर्भैः चित्रवस्त्रैश्च चामरैः
हिमांबुकणिकाभिश्च समन्ताच्च करम्बितम्  १५६
आरोपयेद्रथं पश्चात्स्वस्तिसूक्तमनुस्मरन्
पार्वतीसहितं देवं त्रिशूलं च विभूषितम्  १५७
अन्नं नानाविधं तत्र रथाय च निवेदयेत्
ततो विप्रान्समभ्यर्च्य दक्षिणाभिश्च तोषयेत्  १५८
आचार्यं पूजयेद्भक्त्या गोभूवासोहिरण्यकैः
आङ्गुलीभिः फलैस्तांश्च स्वर्णादीनि किरेत्तथा  १५९

वासुक्यादिमहानागान् रज्जुष्वावाहयेद्गुरुः
चतुर्वेदान्वदन् रज्जुं ग्राहयेद्देशिकः तदा १६०
राज्ञां शस्तं रज्जुमूले रज्जुमध्येऽपि मन्त्रिणाम्
तयोर्मध्ये भूसुराणां तदग्रे सर्वदेहिनाम् १६१
राज्ञां राज्यप्रदं मूलं तन्मध्यं धनदं नृणाम्
विद्याप्रदं तयोर्मध्ये तदग्रं तु सुखप्रदम् १६२
नृत्तगीतसमायुक्तं यात्रामारम्भयेत्ततः
रथस्य गमने वाद्यान्वादयेत्तु विशेषतः १६३
पटहान्मर्दलान्भेरीं दुन्दुभीनपि काहलान्
वीणां वेणुस्तथा कुर्याच्छङ्खानपि महास्वनान् १६४
अग्रे पृष्ठे च मध्ये च तत्र तत्र प्रघोषयेत्
यन्त्रडोलादिकांश्चापि क्रमेण पुरतो नयेत् १६५
ग्रामादिवीथयः कुर्यान्निम्नोन्नतविवर्जिताः
वालुकास्तरणं कुर्याद्वीथिकां चोपवीथिकाम् १६६
अलङ्कुर्यात्तथा वीथीं कदलीक्रमुकादिभिः
ये देवमनुगच्छन्ति गच्छन्तं स्यन्दनेन हि १६७
पदे पदेऽश्वमेधस्य फलं तेषां न संशयः
ये पश्यन्ति रथारूढमुमया सहितं शिवम् १६८
ते सर्वे पापनिर्मुक्ताः शिवसायुज्यमाप्नुयुः
एवं रथोत्सवे वह्ने यः कारयति भक्तितः १६९
इह लोके बहून्भोगान्भुक्त्वा च मनसेप्सितान्
देहान्ते मत्प्रसादेन शिवलोके महीयते १७०
रथोत्सवं प्रपश्यन्ति बाला वापि स्त्रियोऽपि वा
तेऽपि पापैः प्रमुच्यन्ते निर्भीका इव पन्नगाः १७१
ग्रामं प्रदक्षिणीकृत्य नगरं वापि भूषितम्
निवर्तयेद्रथं पश्चान्नीत्वा वीथिमथापि वा १७२

इति श्रीदीप्तागमे रथोत्सवविधिपटल एकाधिकशततमः

## द्व्यधिकशततमः पटलः
## उत्सवप्रायश्चित्तविधिः

अतः परं प्रवक्ष्यामि प्रायश्चित्तमथोत्सवे
वृषयागविहीने च ध्वजोत्थापनहीनके १
भेरीताडनहीने च हीने वै चाङ्कुरार्पणे
यागशालाविहीने च अस्त्रयागविहीनके २
बलिदानविहीने तु यानक्रमविहीनके
कुम्भस्थापनहीने तु यागदीपविहीनके ३
नैवेद्यादिविहीने तु दिनाधिके विहीनके
एषां दोषनिवृत्त्यर्थं प्रायश्चित्तं विधीयते ४
वृषयागविहीने तु नश्यन्ति पशवोऽनल
वृषभस्नपनं कृत्वा पृषमन्त्रमनुस्मरन् ५
गन्धादिभिः समभ्यर्च्य मुद्गान्नं निवेदयेत्
शान्तिहोमं तु कर्तव्यं कर्तव्या शिवपूजना ६
ध्वजोत्थापनहीने तु वेदिकायाः प्रमाणकम्
ध्वजस्थापनकाले दण्डछेदे विशेषतः ७
ध्वजोत्थापनवेलायां रज्जुछेदे विशेषतः
ध्वजपटे च पतिते ध्वजघण्टां तथैव च ८
परचक्रभयं भूमौ भविष्यति न संशयः
लक्षणोक्तं समारोप्य जप्त्वा शान्तिद्वयं ततः ९
वृषगायत्रिमन्त्रेण स्पृष्ट्वा स्पृष्ट्वा तु होमयेत्
भेरीताडनकाले तु कीलछेदे तथैव च १०
घोषकाले तु पतिते चर्मछेदे विशेषतः
बधिरत्वमवाप्नोति वर्धन्ते राक्षसादयः ११
नन्दिमन्त्रं समुच्चार्य हुत्वा जप्त्वा विशेषतः
पूर्ववत्स्थापयित्वा तु संपूज्य ताडयेद्बुधः १२
यागशालाविहीने तु कुण्डवेदिविहीनके
तोरणे स्रुक्स्रुवे हीने होमद्रव्यविहीनके १३
महामारी प्रवर्तते तस्कराद्भयमादिशेत्

कृत्वा सलक्षणं पश्चाच्छान्तिहोमं समाचरेत् १४
अस्त्रयागविहीने तु कुम्भस्थापनहीनके
यागदीपविहीने तु नैवेद्यादिविहीनके १५
शिवं संपूज्य विधिवत्प्रणिपत्य क्षमापयेत्
अस्त्रयागं पुनः कृत्वा शान्तिहोमं समाचरेत् १६
अघोरास्त्रेण मन्त्रेण शतमष्टोत्तरं हुनेत्
बलिदानविहीने तु बलिद्रव्यविहीनके १७
बलिभ्रमणवेलायां शूलादि पतिते तथा
बलिलिङ्गे तु पतिते हीने भग्ने तथैव च १८
बलिद्रव्ये तु पतिते सस्यनाशं विनिर्दिशेत्
द्विगुणं बलिमापाद्य शान्तिहोमं समाचरेत् १९
शूलादिपतिते चैव लिङ्गे चान्नमये तथा
तत्तन्मन्त्रं शतं जप्त्वा पूज्य गन्धादिना बुधः २०
शेषस्थाने बलिं दद्यात्प्रासादं प्रविशेत्ततः
तत्तन्मन्त्रं समुच्चार्य शतमष्टोत्तरं हुनेत् २१
महोत्सवे यानहीने तत्काले कलहे सति
ग्रामप्रदक्षिणकाले प्रतिमापतिते तथा २२
तन्मण्डलाधिपो राजा मोहमाप्नोति दुर्जयः
स्नपनं तत्र कुर्वीत पुण्याहं तत्र कारयेत् २३
पञ्चब्रह्मषडङ्गैश्च मूलमन्त्रेण देशिकः
तत्काले तु विशेषेण शान्तिहोमं समाचरेत् २४
उपाङ्गहीने सन्ध्यायां कुर्याद्वै निष्कृतिं पुनः
पुण्याहं तत्र कुर्वीत मूर्तिहोमं समाचरेत् २५
स्नपनं कारयेदन्ते विभवस्यानुरूपकम्
नवकर्माङ्गुलौ हीने पुनः सन्धानमाचरेत् २६
प्रतिष्ठामारभेद्विद्वान्मूर्तिहोमं समाचरेत्
शिरोबाहू तथा पादौ हीने स्यात्परिवर्जयेत् २७
बिम्बमन्यं परिग्राह्य करयेदुत्सवं बुधः
परिवेषक्रमे हीने चोरोन्मत्ता विशन्ति च २८

लिङ्गं सम्पूज्य विधिवच्छान्तिहोमं समाचरेत्
नीराजनविहीने तु वह्निना च भयं भवेत् २९
अग्निबीजेन हुत्वा तु पुण्याहं तत्र कारयेत्
कौतुकबन्धने हीने अवग्रहकरं भवेत् ३०
शान्तिहोमं ततः कृत्वा कौतुकं बन्धयेत्ततः
तीर्थसङ्ग्रहणे हीने अनावृष्टिर्भविष्यति ३१
शान्तिद्वयं जपित्वा तु शान्तिहोमं समाचरेत्
प्रासादेन तु मन्त्रेण घृतेनाष्टशतं हुनेत् ३२
चूर्णोत्सवविहीने तु महामारी प्रवर्तते
बीजमुख्येन मन्त्रेण शतमष्टोत्तरं हुनेत् ३३
पुण्याहं तत्र कुर्यात्तु चूर्णकर्म समाचरेत्
तीर्थहीने भवेच्छोकं भवेद्राष्ट्रस्य निश्चयम् ३४
पुनरुत्सवमारभ्य शान्तिहोमं समाचरेत्
अपरेऽह्नि समारभ्य पूर्वसङ्ख्याक्रमेण तु ३५
उत्सवं कारयेद्धीमान्ध्वजभेरीं विना बुधः
एकाहमुत्सवं वाथ कुर्याद्वित्तानुसारतः ३६
ध्वजावरोहणे हीने तत्स्थाने तु भयं भवेत्
मूर्तिहोमं ततः कृत्वा ध्वजस्यात्रावरोहणम् ३७
शुद्धस्नपनहीने तु ग्रामदूषणमादिशेत्
पञ्चकादिसहस्रान्तकलशैरभिषेचयेत् ३८
विभवस्यानुरूपेण महास्नपनमाचरेत्
उक्तानुक्तविधिं ज्ञेयमनुक्तं यद्भवेदिह ३९
अनुक्तेषु च दोषेषु शान्तिहोमं समाचरेत्
एवं कृते तु विधिना सर्वशान्तिकरं भवेत् ४०

इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे प्रायश्चित्तविधिपटलः एकोनशततमः

## अनुबन्धः

## उत्सवप्रायश्चित्तविधिः

प्रायश्चित्तविधिं वक्ष्ये उत्सवाङ्गं समासतः

प्रमादाद् वृद्धिवैषम्याद् राजक्षोभादसंभवात् १
संवत्सरोत्सवे हीने ध्वजारोहणहीनके
नक्षत्रातिशये हीने भेरीताडनहीनके २
अङ्कुरार्पणहीने तु सोमकुम्भविहीनके
यागमण्डपहीने च छिन्ने नष्टे तथैव च ३
ध्वजछिन्ने तथा हीने हीने च पतितेऽथवा
यागे च रुषिते स्पृष्टे पतिते चान्त्यजातिभिः ४
सूतकैः प्रेतकैः स्पृष्टे स्पृष्टे तस्करैर्तथा
श्वसृगालवराहैश्च कुक्कुटैर्वायसैस्तथा ५
अग्निकुण्डे तथा यागे वह्निदीपविहीनके
साधिते कलशे भिन्ने छिन्ने नष्टे तथैव च ६
अग्निदग्धे तथा कुम्भे होमद्रव्यविहीनके
काले च बलिहीने तु बलिद्रव्यविहीनके ७
आयुधे तु विहीने तु भिन्ने दग्धे तथैव च
कौतुकानां विहीने तु भिन्ने नष्टे तथैव च ८
परिवेषक्रमे हीने चूर्णोत्सवविहीनके
तीर्थक्रियाविहीने तु रक्षाबन्धनविहीनके ९
स्नपने च विहीने च ध्वजस्यैवावरोहणे
चण्डयागविहीने तु प्रायश्चित्तं विधीयते १०
संवत्सरोत्सवे हीने शान्तिहोमं तु कारयेत्
तदन्ते स्नपनं कुर्यात्प्रारम्भेदुत्सवं ततः ११
ध्वजारोहणकाले तु पतिते छिन्नभिन्नके
पूर्वोक्तविधिना कुर्याद् ध्वजोत्थानक्रमेण तु १२
शान्तिहोमं ततः कृत्वा वृषमन्त्रं शतं जपेत्
अघोरास्त्रेण मन्त्रेण शतं हुत्वा विशेषतः १३
सन्धिदेवान्यजेत्पश्चाद्गन्धपुष्पादिभिः क्रमात्
नक्षत्रातिशये प्राप्ते निरीक्ष्य कौतुकबन्धनम् १४
तद्रात्रौ स्नपनं चैव अधिके दिनमाचरेत्
अधिवासं ततः कृत्वा पूर्वोक्तविधिना सह १५

बलिकर्मक्रमं कृत्वा होमकर्म समाचरेत्
शान्तिहोमं ततः कृत्वा तीर्थस्नानं समाचरेत् १६
दिने प्राप्ते तु यस्मात्तु तस्माद्धोमं समाचरेत्
बलियागक्रमं सर्वं शैवाख्यं हि समाचरेत् १७
ततस्तीर्थं समादाय विधिपूर्वं समाचरेत्
भेरीताडनकाले तु भिन्ने छिन्ने तथैव च १८
तालं वितालं हीनं यन्नन्दिमन्त्रेण होमयेत्
भेरीं तु चर्मणा बध्वा पुण्याहं तत्र कारयेत् १९
मङ्गिण्यादि समावाद्य सन्धिदेवान्समर्चयेत्
पालिका छिन्ना भिन्ना वा चाङ्कुरेष्वशुभेषु च २०
पूर्वाङ्कुराणि संवृज्य शालिभिश्चैव पूरिताम्
पुण्याहं कारयित्वा तु शान्तिहोमं समाचरेत् २१
भिन्ने छिन्ने तथा नष्टे सोमकुम्भे तु संभवे
तदान्यकुम्भं संस्थाप्य पुण्याहं तत्र कारयेत् २२
क्षीरेण घृतसंयुक्तं स्वमन्त्रेण शतं हुनेत्
अतिवृष्टौ महापाते शत्रुभिश्चलितेऽपि वा २३
पूर्वोक्तविधिना कुर्याद्यागशालां विभावतः
पुण्याहं कारयित्वा तु शान्तिहोमं समाचरेत् २४
लक्षणोनाग्निकुण्डे तु साधितं चाग्निसंग्रहे
लक्षणेन समाहृत्य चतुरश्रादि निश्चितम् २५
अग्न्यागारं संप्रोक्ष्य संग्राह्याग्निं विनिक्षिपेत्
अग्निकार्योक्तमाहूय तन्मन्त्रेण शतं जपेत् २६
ध्वजो वा पतिते भिन्ने छिन्ने नष्टेऽथवा पुनः
ब्राह्मणान्भोजयित्वा तु पुण्याहं तत्र कारयेत् २७
स्नपनं तत्र कर्तव्यं चण्डयागं च कारयेत्
ध्वजमुत्थापयेदन्यद्ध्वजोत्थानक्रमेण तु २८
अथ ब्रह्मशिवाङ्गैश्च विद्याङ्गैश्च शिवेन तु
हुत्वाघोरेण मन्त्रज्ञो जुहुयात्तु शताहुतिः २९
शान्तिहोममिति ख्यातं सर्वदोषनिकृन्तनम्

यागे च दूषिते स्पृष्टे प्रोक्षयेत्पञ्चगव्यकैः ३०
पुरायाहं तत्र कुर्वीत प्रोक्षयेत्तु शिवाम्भसा
यागे च तस्करैः स्पृष्टे मृद्भाराडानि विसर्जयेत् ३१
पञ्चमृत्पञ्चगव्यैश्च प्रोक्षयेद्व्योममन्त्रकैः
सूतकैः प्रेतकैः स्पृष्टे स्पृष्टे तु पतिते तु वा ३२
हीनचराडालकैश्चैव श्वभिः कुक्कुटगर्दभैः
सूकरैर्वानरैश्चैव कुक्कुटैश्च विशेषतः ३३
एतैः प्रवेशिते यागे मृद्भाराडानि व्यपोह्य च
पञ्चमृत्पञ्चगव्यैश्च शुद्धिं कृत्वा विशेषतः ३४
अन्यागारं तु संप्रोक्ष्य पुरायाहं तत्र कारयेत्
स्थरिडलं तत्र संकल्प्य तिलदर्भैः परिस्तरेत् ३५
स्नपनं कारयेल्लिङ्गे गन्धपुष्पादिभिर्यजेत्
आवाह्य तु घटे लिङ्गात्पूर्ववत्पूजयेद्बुधः ३६
मूर्तिहोमं ततः कृत्वा शान्तिहोमं समाचरेत्
तत्र देवान्समुद्धृत्य अष्टमङ्गलसंयुतम् ३७
नृत्तगेयसमायुक्तं पिञ्छचामरसंयुतम्
यागस्थानं ततो गत्वा यात्राहोमं समाचरेत् ३८
पूर्ववत्स्थापयित्वा तु अग्निकार्योक्तमाचरेत्
अन्नाज्यचरुभिर्हुत्वा द्विगुणं होममाचरेत् ३९
शेषं तु पूर्ववत्कृत्वा बलिकर्मादिका क्रमात्
श्वसृगालादिभिः स्पृष्टे यागे पात्रं व्यपोह्य च ४०
पञ्चमृपञ्चगव्यैश्च प्रोक्षयेच्छुद्धिरुच्यते
पुरायाहं तत्र कुर्वीत शान्तिहोमं समाचरेत् ४१
अग्निदग्धे तथा यागे पूर्ववल्लक्षणान्वितम्
पूर्वे तु साधिते कुम्भे भिन्ने दग्धे तथैव च ४२
वास्तुहोमं ततः कृत्वा पुरायाहं तत्र कारयेत्
स्नपनं कारयेल्लिङ्गे गन्धद्रव्येण लेपयेत् ४३
सुश्वेतनवसूक्ष्मेण वारिणा सेचितेन च
वस्त्रद्वयेन संवेष्ट्य लिङ्गं पिरिडकया सह ४४

कुशकूर्चैर्समावेष्ट्य संप्रोक्ष्य पुरुषेण तु
शान्तमुद्रां समाबद्ध्य प्रासादं तु शतं जपेत् ४५
ध्यात्वा तत्र महादेवं त्र्यक्षं दशभुजं क्रमात्
पञ्चावरणमार्गेण यजेद्गन्धादिना बुधः ४६
मूर्तिहोमं ततः कृत्वा आचार्यः शुद्धविग्रहः
आवाह्य देवदेवेशं शक्तिविद्येश्वरैः सह ४७
अस्त्रराजेन संयुक्तमष्टमङ्गलसंयुतम्
नृत्तगेयसमायुक्तं यागशालां प्रवेशयेत् ४८
स्थापयेद्विधिना सर्वमग्निकार्योक्तमाचरेत्
ब्राह्मणान्भोजयित्वा तु शेषं पूर्ववदेव तु ४९
यत्क्रियान्ते संप्राप्ते तदादौ तु समाचरेत्
उत्सवे बलियागे च गर्भदीपं विनश्यति ५०
पुण्याहं तत्र कर्तव्यं नेत्रमन्त्रं जपेत्पुनः
द्विगुणं दीपमुद्धृत्य पुनः कर्म समाचरेत् ५१
साधिते कलशे भिन्ने तत्स्थाने साधयेन्नवम्
तन्मन्त्रं तु शतं जप्त्वा हुत्वाज्येन शताहुतिः ५२
छिन्ने नष्टे तथा दग्धे तद्वदेव समाचरेत्
होमद्रव्यविहीने तु तद्वदाज्येन होमयेत् ५३
पूर्णाहुतिं ततः कृत्वा व्योममन्त्रं शतं जपेत्
काले बलिविहीने तु लोकपालान्समर्चयेत् ५४
ब्रह्मादीशानपर्यन्तमैन्द्रे चैन्द्रादिकं यजेत्
वित्तेशं मध्यमे यष्ट्वा शेषं वै पूर्ववत्क्रमात् ५५
बलिद्रव्यविहीने तु दध्याज्येन परिप्लुतम्
केवलं ग्रासमात्रं तु स्वनाम्ना तु निवेदयेत् ५६
आयुधे चैव विछिन्ने तद्रूपं कारयेत्ततः
हुत्वा तदस्त्रमन्त्रेण पूर्ववत्कारयेत्ततः ५७
बलिलिङ्गे च पतिते मूर्तिहोमं समाचरेत्
स्नपनं च ततः कृत्वा बलिभ्रमणमाचरेत् ५८
कौतुके पतिते वापि स्नपनं तत्र कारयेत्

मूर्तिहोमं ततः कृत्वा पुण्याहं तत्र कारयेत् ५९
ब्राह्मणान्भोजयित्वा तु पुनः पूर्ववदाचरेत्
कौतुके स्फुटिते भिन्ने छिन्ने वापि विशेषतः ६०
घटे चावाहनं कुर्यान्महालोहेन बन्धयेत्
शिल्पिकर्मक्रियान्ते तु पुनः प्रोक्षणमाचरेत् ६१
उत्सवं तु ततः कुर्यात्पूर्वोक्तविधिना सह
परिवेषभ्रमे प्राप्ते अस्त्रराजानमर्चयेत् ६२
चूर्णोत्सवविहीने तु घृतशिरोर्पणमारभेत्
रक्षाबन्धक्रियाहीने पञ्चब्रह्मं शतं जपेत् ६३
रक्षाबन्धं ततः कृत्वा ह्यधिवासनमारभेत्
अधिवासनक्रियाहीने सद्यः कुम्भानि साधयेत् ६४
शान्तिमन्त्रं जपित्वा तु पुण्याहं तत्र कारयेत्
तीर्थक्रियाहीने तु मूर्तिहोमं समाचरेत् ६५
तीर्थतीरे समावाह्य सर्वदेवान्समर्चयेत्
पुण्याहं तत्र कर्तव्यं पुनस्तीर्थं समाचरेत् ६६
स्नपनाङ्गविहीने तु पुरुषमन्त्रं शतं जपेत्
स्नापयेत्पञ्चगव्येन व्योममन्त्रेण मन्त्रवित् ६७
स्नपनं च विना यत्र वस्त्रपूतेन वारिणा
कुशैश्च बिल्वपत्रैश्च सरोजकरवीरकैः ६८
गन्धचन्दनसंयुक्तं सहाक्रान्त्यैकपत्रकैः
महाव्योमेति मन्त्रेण अभिषिच्य पुनः पुनः ६९
अर्चयित्वा विधानेन क्रियाशेषं समाचरेत्
ध्वजावरोहणे हीने पुण्याहं तत्र कारयेत् ७०
स्नपनं तत्र कर्तव्यं पञ्चाहादूर्ध्वमेव तु
चण्डयागविहीने तु चण्डमन्त्रेण हूयते ७१
स्नपनं च ततः कृत्वा चण्डेशं स्नापयेत्पुनः
उक्तानुक्तविधिज्ञेयमनुक्तं यद्भवेदिह ७२
अनुक्तेषु च दोषेषु शान्तिहोमं समाचरेत्
एवं कृते तु विधिना सर्वशान्तिकरं भवेत् ७३

इति दीप्तागमे प्रतिष्ठातन्त्रे उत्सवप्रायश्चित्तविधिपटलः
पटलानुबन्धः समाप्तः

## त्र्यधिकशततमः पटलः
## उत्सवयागमण्डपलक्षणम्

अतः परं प्रवक्ष्यामि यागमण्डपलक्षणम्
गेहस्य पुरतः कुर्याद्याम्ये वा वरुणेऽथवा १
सौम्यायां दिशि दिग्भागे कुर्यादाग्नेयगोचरे
शुद्धिं पुनः पुनः कृत्वा प्रोक्षयेत्पुरुषेण तु २
दशद्वादशहस्तं वा नवहस्ताष्टहस्तकम्
षोडशस्तम्भसंयुक्तं चतुस्तोरणभूषितम् ३
मुक्तास्रग्दामसंयुक्तं दर्भमालाभिरावृतम्
कारयेन्मण्डपं सम्यगष्टमङ्गलसंयुतम् ४
तस्य मध्ये न्यसेद्वेदीं त्रिहस्तं वा द्विहस्तकम्
रत्निमात्रसमुत्सेधं दर्पणोदरसन्निभम् ५
चतुर्दिक्षु चतुष्कुण्डं कुर्यात्पूर्वादितः क्रमात्
कोणेषु वृत्तकुण्डं स्याद्रत्निमात्रमधः क्रमात् ६
तन्मानं विस्तृतं कुर्यान्मेखलात्रयसंयुतम्
चतुस्त्रिद्व्यङ्गुलोत्सेधं विस्तृतं तावदेव तु ७
नाभियोनिं प्रकर्तव्यं पूर्वोक्तविधिना सह
प्राक्कुण्डवेदिकामध्ये कुण्डं प्राधानिकं कुरु ८
नवहोमक्रमं प्रोक्तं पञ्चहोमक्रमं शृणु
ऐन्द्रादिषु चतुर्दिक्षु चतुरश्रं कुण्डमालभेत् ९
ईशान इन्द्रयोर्मध्ये वृत्तं प्राधानिकं कुरु
पञ्चहोमक्रमं प्रोक्तमेकहोमक्रमं शृणु १०
पूर्वे वा दक्षिणे भागे पश्चिमे चोत्तरे तथा
यथेष्टस्थाने कर्तव्यं कुण्डं वेदाश्रकं बुधः ११
मण्डपमाञ्चयित्वा तु गोमयालेपनं क्रमात्
पर्यग्निकरणं कृत्वा पुण्याहं तत्र कारयेत् १२

इति दीप्तशास्त्रे प्रतिष्ठायामुत्सवप्रकरणयागमण्डपलक्षणपटलः त्र्यधिकशततमः

## चतुरधिकशततमः पटलः
## भक्तोत्सवविधिः

अतः परं प्रवक्ष्यामि परिभ्रमणयोरपि
ध्वजावरोहणाच्चेत्तु विधिना वै परिभ्रमे १
सुखासनं सहितं वापि तग्रीवमुत्सवोत्सवम्
तद्रूपं भ्रमणं कुर्यात्सर्वालङ्कारशोभितम् २
वितानध्वजसंकीर्णं पिञ्छचामरसंयुतम्
सर्वातोद्यसमायुक्तं नृत्तगेयसमाकुलम् ३
विधिवच्च त्रिभिर्गत्वा तृतीयसनमक्रमैः
सर्वसंपत्करं नृणां राजराष्ट्रविवर्धनम् ४
भवतीभ्रमणान्ते तु प्रविशेदालयस्य तु
भवानीभ्रमणान्ते तु सर्वभक्तोत्सवं कुरु ५
इति दीप्तशास्त्रे प्रतिष्ठायां भक्तोत्सवविधिपटलः चतुरधिकशततमः

## पञ्चाधिकशततमः पटलः
## देवीरथोत्सवः

स्वस्तिमङ्गलवादैश्च देवीमारोपयेद्रथम्
रथमध्ये तु विन्यस्य देवीं सावरणां यजेत् १
तामभ्यर्च्य रथस्याथ प्रदक्षिणनमस्क्रियाम्
कृत्वा रत्नसुवर्णानि रथोपरि विकीर्य च २
नयेद्वसुपदं मन्त्री तत्काले तद्रथं गुरुः
भुक्तान्ते सूर्यसंतापे शान्ततागमिते सति ३
सर्वभक्तजनैः सार्धं ध्रुववस्त्रविभूषणैः
जनकोलाहलैः पश्चाद्देव्यारुढं विलासतः ४
ग्रामान्तं नगरान्तं वा रथं नीत्वोत्सवं चरेत्
अनुव्रजन्ति ये मर्त्यास्तदा देवीं पदे पदे ५

हयमेधसहस्राणि लभन्ते नात्र संशयः ६
इति दीप्तागमे देवीरथोत्सवपटलः पञ्चाधिकशततमः

षडधिकशततमः पटलः
वसन्तोत्सवविधिः

अथातः संप्रवक्ष्यामि वसन्तोत्सवविधिक्रमम्
शोभनानां जयार्थं च सर्वसौख्यकरं नृणाम् १
चैत्रे वैशाखमासे तु फाल्गुने वा विशेषतः
सासभे शुक्लपक्षे तूत्तमोत्तममीरितम् २
एकाहं च त्रियाहं च सप्ताहं च नवाहकम्
कारयेत्तु विशेषेण यथाविभवविस्तरैः ३
कर्तुर्जन्मदिने वापि आर्द्रान्तं वापि कारयेत्
सद्योऽङ्कुरार्पणं वापि तत्पूर्वे वा विशेषतः ४
यथोक्तमङ्कुरं कुर्याद्रक्षाबन्धं तु कारयेत्
शिवाग्रे वाथ पार्श्वे वा नदीतीरे विशेषतः ५
उद्याने वा प्रकर्तव्यं नानालङ्कारसंयुतम्
षोडशस्तम्भमारभ्य यावदष्टोत्तरं शतम् ६
स्तम्भमानमिदं प्रोक्तं चतुर्द्वारसमन्वितम्
वातायनं च परितः पताकातोरणादिभिः ७
मुक्तादामैरलङ्कृत्य रम्भास्तम्भसमन्वितैः
नानाविचित्रसंयुक्तैर्नानालीलासमन्वितैः ८
नानापक्षिसमूहैश्च पद्मपत्रोत्पलैः सह
मण्डपं वा प्रपां वापि कारयेत्तु विशेषतः ९
हस्तद्वादशमानेन चतुरश्रसमन्वितम्
जलयन्त्रं समापाद्य सुगन्धसलिलान्वितम् १०
पद्मचम्पकजातेश्च सौगन्धिकसुशीतलैः
द्रुतिं च वेणुदण्डं च हस्तलीलार्थमाहरेत् ११
एवं वसन्तलीलार्थमग्रे वापि प्रकल्पयेत्
विज्ञाप्य मूलदेवेशमुपचारपुरःसरम् १२

देवं देवीमलङ्कृत्य विनोदार्थविभूषणैः
चन्दनं कुङ्कुमं चैव कस्तूरीरोचनान्वितम् १३
कर्पूरं हिमतोयैश्च लेपयेत्तु विशेषतः
नानासुगन्धकुसुमैर्वस्त्राद्यैश्च विभूषयेत् १४
नानावाद्यसमायुक्तं गीतनृत्तसमाकुलम्
वसन्तलीलाप्रीत्यर्थं मण्डपं संप्रविश्य च १५
श्रमनिर्हरणार्थाया अपूपं च फलत्रयम्
नालिकेरं च लाजं च पानीयमतिशीतलम् १६
तम्बूलं च निवेद्याथ धूपदीपादिकं ददेत्
पञ्चपञ्चकसंख्या तु अष्टोत्तरशताधिकम् १७
रुद्रकन्याः समाहूय सर्वावयवसुन्दराः
नानाभरणसंयुक्ताः वेण्यालकसमन्विताः १८
नानालङ्कारसंयुक्ताः कञ्चुकोरुकान्विताः
नानावस्त्रसमायुक्ताः योषितः कर्तृवाञ्छया १९
केचिद्वारविलासिन्यस्तथैवंरूपमाश्रिताः
वसन्तरतिभावेन पुष्पक्रीडां समाचरेत् २०
पुष्पक्रीडां जलक्रीडां चन्दनोदकलीलया
अन्योन्यताडनादीनि रागताललयान्वितम् २१
हल्लीहल्लैश्च सङ्घोष्य खड्गखेटकपाणिभिः
इत्यादिभिर्विनोदैश्च लीलां सम्यक् समाचरेत् २२
यामं यामद्वयं वापि विनोदानवलोकयन्
नित्यं प्रतिविशेषेण रात्रावेवं समाचरेत् २३
नृत्तान्ते वा तदादौ वा वेदपारायणादिभिः
स्तोत्रमङ्गलगानैश्च नानाभक्तजनैः सह २४
राजा राज्ञी च मन्त्री च पुरोहितपुरःसरैः
प्रदक्षिणत्रयं कृत्वा तद्वापीमण्डपं प्रति २५
शनैर्धाम प्रविश्याथ स्वस्थानं संनिवेश्य च
महाहविर्निवेद्याथ धूपदीपं ददेद्गुरुः २६
यात्रार्थस्नपनं कुर्याद्विशेषार्चनमारभेत्

अनङ्गमदने चैव पुष्पबाणधनुर्धरौ  २७
अनङ्गमेखला चैवानङ्गमदनातुरा
पूर्वादिदिक्समभ्यर्च्यार्घ्यं पाद्यादिकं ददेत्  २८
अन्ते चूर्णोत्सवं कुर्याद्रुद्रकन्यासमन्वितम्
शङ्खोदकैश्च रजनीचूर्णोदैरप्यनेकधा  २९
नानाक्रीडासमायुक्तं महावीथीं प्रविश्य च
सायाह्ने समये प्राप्ते प्रविशेदालयं प्रति  ३०
शान्तिहोमं ततः कृत्वा कुर्यान्महास्नपनमाचरेत्
आचार्यमूर्तिपान्सर्वान्भक्तांश्च परिचारकान्  ३१
तत्तत्प्रीतिकरार्थं तु दक्षिणां दापयेत्ततः
एवं यः कुरुते मर्त्यः सर्वान्कामानवाप्नुयात्  ३२

इति दीप्तशास्त्रे वसन्तोत्सवविधिपटलः षडधिकशततमः

## सप्ताधिकशततमः पटलः

### डोलारोहणविधिः

अथ वक्ष्ये विशेषेण डोलोत्सवविधिक्रमम्
सर्वशान्तिकरं पुण्यं सर्वसौभाग्यवर्धनम्  १
आयूराजराष्ट्रविवर्धनं कीर्तिं च विजयम्
ज्येष्ठे वा मार्गशीर्षे वा मासे डोलोत्सवं चरेत्  २
पूर्ववन्मण्डपं कुर्यान्नानालङ्कारसंयुतम्
मध्ये डोला प्रकर्तव्या चतुरश्रा सुशोभिताम्  ३
रथाकृतिविमानं वा कारयेत्तु विशेषतः
पञ्चषट्सप्तहस्तं वा आयातिं चतुरश्रकम्  ४
आयतादद्विगुणं दीर्घं अन्तःसारद्रुमेण तु
फलकां संप्रकल्प्याथ तत्तल्लक्षणसंयुतम्  ५
सौवर्णं राजतं ताम्रमथवाप्यायसीकृतम्
दृढं च कुर्यात्फलकां बध्वाप्यालम्बनं तथा  ६
स्वर्णपट्टादिभिर्भूष्य मुक्तादामैरलङ्कृतम्
एवं डोलां प्रकल्प्याथ देवं संप्रार्थ्य बुद्धिमान्  ७

देवदेव जगन्नाथ सर्वेश्वर महेश्वर
डोलोत्सवं समारब्धमनुज्ञां दातुमर्हसि ८
इति संप्रार्थ्य देवेशमङ्कुरार्पणमाचरेत्
रक्षाबन्धं ततः कुर्यात्सायाह्नसमये तथा ९
देवं देवीमलङ्कृत्य गन्धाद्यैः परिपूज्य च
नानावाद्यसमायुक्तं घण्टारवसमन्वितम् १०
नृत्तगीतसमायुक्तं डोलारोहणमाचरेत्
आचार्यः समलङ्कृत्य तथा पञ्चाङ्गभूषणैः ११
पुण्याहं वाचयित्वाथ डोलां संप्रोक्ष्य मण्डपम्
पूजयित्वा विशेषेण यथा विभवाविस्तरैः १२
पद्मासनार्चनं मन्त्रं फलकोपरि पूजयेत्
ऋग्वेदादीन् पञ्चदारेष्वीशानादिषु तान्त्रिणः १३
अर्चयित्वा विधानेन साङ्गं च शिवमर्चयेत्
धूपदीपं ततो दत्वा ततो पाद्यादिकं ददेत् १४
आचार्यो मूर्तिपैः सार्धं रुद्रकन्यासमावृतम्
डोलारोहं प्रकर्तव्यं डोलागानं विशेषतः १५
प्रदोषान्तं समारभ्य आभूतद्वयनाडिका
तदर्धं वा प्रकर्तव्यं डोलाचलनमाचरेत् १६
नानानृत्तं विलोक्याथ नैवेद्यं दापयेत्ततः
अपूपैः परमान्नैश्च व्यञ्जनैश्च सुवासितैः १७
लेह्यचोष्यक्षीरयुतैः शुद्धान्नैर्व्यञ्जनैः सह
नैवेद्यमर्पयेच्छम्भोर्मुखवाससमन्वितम् १८
ताम्बूलं दापयेच्छम्भोर्दीपाराधनमाचरेत्
डोलायन्त्रादवतार्य नृत्तगीतपुरःसरैः १९
शनैर्धाम प्रविश्याथ यात्रास्नपनमाचरेत्
नैवेद्यादीन्ततो दत्वान्ते भोगाङ्गमाचरेत् २०
वसन्तोत्सवं च डोलां चोद्वाहान्ते विशेषतः
कारयेत्तु नरो भक्त्या साम्राज्याधिपतिर्भवेत् २१
तस्मात्सर्वप्रयत्नेन शिवोद्वाहं समाचरेत्

एवं यः कुरुते मर्त्यः स पुरायां गतिमाप्नुयात्  २२
इति दीप्तशास्त्रे डोलारोहणविधिपटलः सप्ताधिकशततमः

## अष्टाधिकशततमः पटलः
### स्नपनविधिः

अतः परं प्रवक्ष्यामि स्नपनस्य विधिक्रमम्
पूर्वोक्तया तद्विधानेन मराडपं कारयेद्बुधः  १
विकीर्ण+++++मुक्तादामविभूषितम्
प्रागग्रं दशसूत्रान्तु उदगग्रं तथैव च  २
मध्ये नवपदं ग्राह्य पद्माकारं तु कल्पयेत्
इन्द्रादीशानपर्यन्तं नावानां परिकल्पयेत्  ३
++++यं विस्तारं कल्पयेत्तत्र वित्तमः
तच्छेषं परिवीथिः स्याल्लेपयेद्गोमयेन तु  ४
द्रोणं तु शालिना चैव स्थरािडलं च पृथक्पृथक्
ततोलं+++ज्ञेयं तराडुलार्धं तिलं भवेत्  ५
कलशान्साधयेत्तस्य सम्यग्घवने देशिकः
++++ ++++ गन्धपुष्पादिभिः क्रमात्  ६
पञ्चरत्नं न्यसेत्कुम्भे वर्धन्यां हेमसंयुतम्
पाद्यमाचमनीयार्घ्यं क्षीरं दद्याच्च कूर्चकम्  ७
सुगन्ध++++चश्चैव मन्त्राश्चैतेऽपि कीर्तितम्
लाजा वै चन्दनां चैव फलगन्धं सुविन्यसेत्  ८
तेषायां पञ्चगव्यां च हारिद्रं परिमार्जनम्
इन्द्रादीशानपर्यन्तं व्य+++व्यो योजयेत्  ९
शेषाणि भवतोयेन पूरितानि विनिक्षिपेत्
सकूर्चं सपिधानां च आम्रपल्लवशोभितम्  १०
गन्धपुष्पं च धूपं च अक्ष+++संस्कृतम्
अर्चयित्वा विधानेन स्थापयेत्तु पृथक्पृथक्  ११
पटहैस्तालघोषैश्च शङ्खदुन्दुभिनिस्वनैः
न्यसेदपि कलशान्सर्वान्हंसमन्त्रेण विन्यसेत्  १२

प्रणवादिनमोऽन्तेन स्वाहान्तेनैव योजयेत्
इन्द्रादीशानस्तत्तद्यु +++++ष्टदेवता १३
प्रासादाभ्यन्तरं गत्वा लिङ्गशुद्धिं समाचरेत्
समन्त्रकलशो योऽब्जे तन्मन्त्रेणाभिषेचयेत् १४
शेषाणि गन्धतोयेन पूरितानि विनिक्षिपेत्
पञ्चवर्णहविर्दद्यादस्त्रमन्त्रेण देशिकः १५
ततः प्रदक्षिणं कृत्वा स्तुत्यस्तोत्रं समाचरेत्
यत्काम्य वर्तयेत्कर्ता तत्कार्यं +++रितम् १६
सम्यक्प्रदक्षिणं कृत्वा पारि शैवगुरुस्तथा
आचार्यं पूजयेत्तत्र परिचारं तु पूजयेत् १७
शिवस्य सन्निधौ स्थित्वा फलग+++++
अन्येषां सर्वजातिनां समारोपे पांशकैः १८
तस्मिनिय विधातव्यं सर्वकामार्थसिद्धिदम् १९
इति दीप्तशास्त्रे स्नपनविधिपटलः अष्टाधिकशततमः

## नवाधिकशततमः पटलः

### शौचविधिः

अथ वक्ष्ये विशेषेण शौचदाश्च विधिक्रमम्
ब्रह्मचारी गृहस्था च वानप्रस्थो यदि भवेत् १
तच्चतुरो ++ नो हि साधकानां हिताय वै
ब्राह्मे मुहूर्ते चोत्थाय +++ शिववन्दनम् २
नमस्कारेण संयुक्तं शिव इत्यक्षरद्वयम्
चतुर्थ्यन्तं द्विजानीया नमसो ब्रह्मण एव निश्चयः ३
ग्रामाबाह्ये शुचौ देशे विण्मूत्रे तु विसर्जयेत्
गोष्ठे चतुष्पथोद्याने तटाके ++++ वे ४
सान्ध्याय ब्राह्म +++ ++++ ++++
वेष्टयित्वा शिरस्तत्र यज्ञवामे तु योजयेत् ५
रविं दक्षिणतः कृत्वा विण्मूत्राणि विसर्जयेत्
दक्षिणाभिमुखो रात्रौ तृणमास्तीर्य भूतले ६

वामे शिश्नं गृहीत्वा तु मृत्पिराडं दक्षिरो करे
शुचौ नद्यां तटाके वा शुद्धिं कृत्वा विचक्षराः ७
दश कृत्वा करे वामे सप्त कृत्वा करद्वयम्
शोधयेदम्भसा नित्यं गृहस्थस्य विधीयते ८
द्विगुरां ब्रह्मचारीरां यतीनां द्विगुरोत्तरम्
द्विगुराद् द्विगुरां शौचमुत्तरेरा विधीयते ९
यावन्मात्रं मनः शुधिस्तावद्वै शौचमाचरेत्
त्रिमृद्धि + ++++ + लमेकमृदम्भसा १०
मरिाबन्धद्वयं यावत्त्रयो मृत्करतलं शुचौ
पादप्रक्षालनं कृत्वा जान्वन्तं शोधयेत्सुधी ११
स्राचामं विधिवत्कृत्वा यथाशास्त्रविनिश्चया १२
इति दीप्तशास्त्रे प्रतिष्ठातन्त्रे शौचपटलः नवाधिकशततमः

## दशाधिकशततमः पटलः
### स्राचमनविधिः

स्रथ वक्ष्ये विशेषेरा स्राचामं विधिवत्सुधी
प्राङ्मुखोदङ्मुखो भूत्वा शिखां बध्वा तु कारयेत् १
सव्ययज्ञोपवीतं च पादप्रक्षालनं शुद्धि
नान्तर्जलेन तिष्ठं च न हि सन्निध्यवंस्तथा २
++++ ++++ पञ्चतीर्थानि सन्ति हि
सपवित्रकरेरौव सर्वकर्म समारभेत् ३
स्थले हि दक्षिरां पादं वामपादं जले स्थितम्
ब्रह्मा विष्णुप्रदेशा को मघवानिति दैविकम् ४
स्रङ्गुलीनममे तद्धि पञ्च तीर्था भवन्ति हि
स्रङ्गुल्यग्रे स्रृषीरां तु स्रङ्गुलीमध्ये देविकम् ५
तर्जन्याङ्गुष्ठयोर्मध्ये स्रग्नितीर्थमुदाहृतम्
गोकर्णत्रिः पिबेद्दृश्य जूस्थामा प्रि द्विः परिमर्ज्य तु ६
स्रथर्वेद इतिहास पुरारा प्रराति सयः
मुखे संस्पृश्य पद्भ्यामभ्युक्षरां भवेत् ७

ब्रह्मतीर्थे शिरो +क्ष्य ततः सङ्गेन संस्पृशेत्
अङ्गुष्ठानामिकाभ्यां तु चक्षुषौ प्राण संस्पृशेत् ८
अङ्गुष्ठतर्जनीभ्यां तु नासिकाग्रमुपस्पृशेत्
तदङ्गुष्ठकनिष्ठाभ्यां श्रोत्रे चैव संस्पृशेत् ९
सर्वाङ्गुल्य स्पृशेद्ध +ङ्गिरो वै सर्वतोऽङ्गुलम्
एवं कृत्वा तु मन्त्रान्तं प्रत्यङ्गं स्वाङ्गं संस्पृशेत् १०
शिरः पादं तथाभ्युक्ष्य ऋषीणां सर्वतृप्तये
मूर्ध्नि तु व क्षणोत्रे च प्राणतः प्रीति त्रिषु स्थानेषु देवता ११
भुजौ ना ++हृदयमिन्द्रविश्वग्निरेव च
चक्षुस्थले कफेत्वा च सद्येनाचमनं कुरु १२
अङ्गुष्ठेनाभिसंस्पृश्य पञ्चाटाचमन स्पृशेत्
एवमाचमनं प्रोक्तमन्ते स्नानविधिं शृणु १३
इति दीप्तशास्त्रे प्रतिष्ठायामाचमनविधिपटलः दशाधिकशततमः

## एकादशाधिकशततमः पटलः
### लक्ष्मीनारायणविधिः

अतः परं प्रवक्ष्यामि लक्ष्मीनारायणं शृणु
सर्वलक्षणसंयुक्तं सर्वकामफलप्रदम् १
ग्रामे च नगरे चैव तटाके दीर्घसङ्गमे
पर्वते च वने पार्श्वे सङ्गमे तु शुभावहम् २
सर्वद्रव्यकृतोक्तं च आलये तु शुभप्रदम्
दिशासु स्वादिशां चैव ग्रामे प्रोक्तं शुभावहम् ३
अङ्गुलत्रयसंयुक्तमायादि शोषयेद्बुधः
उत्तमं दशतालेन सर्वावयवकल्पनम् ४
अन्यत्पूर्वोक्तमानेन सर्वलक्षणसंयुतम्
किरीटाभरणैर्युक्तं रत्नकुण्डलसंयुतम् ५
पीताम्बरधरैर्युक्तं रक्ताम्बरधरं तु वा
अभयं दक्षिणं हस्तं वरदं वा विशेषतः ६
वामहस्ते श्रीदेवीमालिङ्गन्तमथोच्यते

शङ्खचक्रधरैर्युक्तं पद्महस्तं विशेषतः ७
ऋजुसूत्रसमायुक्तं षड्वामाङ्घ्रिप्रसारितम्
यद्वेरनाभिमात्रे तु हृत्पद्ममालिङ्गनं तु दक्षिणे ८
अथवा करद्वयं चैव भद्रहस्तत्वमेव च
करण्डिकामकुटं वापि केशबन्धमथापि वा ९
पुष्पकुण्डलसंयुक्तं रत्नकुण्डलमेव च
छन्नवीरसमायुक्तं हाराकेयूरभूषितम् १०
कटकादिभद्रहस्तं च बाहुवलयादिशोभितम्
अर्धपार्श्वे वामनेत्रे सिते वामपुटान्तके ११
हनोपसव्यपार्श्वे तु नाभेश्च दक्षिणे प्रलम्बयेत्
परस्परनिरीक्ष्य तु भोगभोगातिसुन्दरौ १२
ऋजुसूत्रं तु देवीनां जायतं तु धरैर्द्वया
पट्टं देवस्य मूर्ते वा ज्ञानमेवं विशेषतः १३
पद्मसिंहासनं चैव ++++ ++++
नागेन्द्राभरणसंयुक्तौ सोमसूत्रैश्च संयुतम् १४
सनकादीनां सनत्कुमारसहितं भवेत् १५

इति दीप्तशास्त्रे लक्ष्मीनारायणपटलः एकादशाधिकशततमः

इति दीप्तागमः समाप्तः

Reference:
Barazer-Billoret, Marie-Luce; Dagens, Bruno, and Lefevre, Vincent, *Dīptāgama, edition critique*, vol. 1, 2, 3: Institut Francais de Pondichery: Pondichery, 2004.